॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
१७

श्रीमद्भट्टिविरचितं

# भट्टिमहाकाव्यम्

'काव्यमर्मविमर्शिकाख्य'-संस्कृत-हिन्दीव्याख्योपेतम्

( पञ्चमादि-अष्टमसर्गपर्यन्तम् )

व्याख्याकारः—

म० म० पण्डितराज डॉ० श्रीगोपालशास्त्री 'दर्शनकेशरी'

[ काशीपण्डितसभाध्यक्षः, राष्ट्रपतिसम्मानितश्च ]

सम्पादकः—

प्रो० गोपालदत्तपाण्डेयः एम० ए०, व्याकरणाचार्यः,

( अवकाशप्राप्त उप-शिक्षानिदेशकः, उत्तरप्रदेशस्थः )

चौखम्बा सुरभारती प्रकाशन

वाराणसी

प्रकाशक—

**चौखम्बा सुरभारती प्रकाशन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१





चतुर्थ संस्करण १९८६

मूल्य २०–००

अन्य प्राप्तिस्थान—

**चौखम्बा संस्कृत प्रतिष्ठान**

३८ यू. ए., जवाहरनगर, बंगलो रोड

दिल्ली ११०००७

*

प्रमुख वितरक—

**चौखम्बा विद्याभवन**

चौक ( बनारस स्टेट बैंक भवन के पीछे ),

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ६३०७६

मुद्रक—

चौखम्बा मुद्रणालय

वाराणसी

THE

CHAUKHAMBA SURBHARATI GRANTHAMALA

17

# BHAṬṬIMAHĀKĀVYA

OF

## ŚRĪ BHAṬṬI

( Cantos V–VIII )

*With 'Kavyamarmavimarshika' Sanskrit and Hindi Commentaries*

By

**M. M. Panditaraj Dr. Shrigopal Shastri**
*'Darshanakeshari'*

Edited by

**Sri Gopal Datt Pande**
M. A., Vyakaranacharya
Retired Dy. Director of Education, U. P.

CHAUKHAMBA SURBHARATI PRAKASHAN

VARANASI

# प्रस्तावना

न विद्यते तादृगिह प्रकाशो योऽपाकरोत्यान्ध्यमधीतिहार्दम् ।
इत्यामृशंस्तस्य कवेस्तमेवम्प्रदीपये भूमिकयाऽनयाऽहम् ॥

पूर्वार्द्धस्य चतुःसर्गात्मकस्य भागस्य प्रस्तावनां पठित्वेयं पाठ्या ।

तत्र संक्षेपतोऽस्य काव्यस्य प्रणयननिदानमुपक्षिप्तमिति ।

तदेत्रास्य महाकाव्यस्य संक्षिप्तमितिवृत्तं तथ्यम् । ततः कालादेव सर्वेऽपि व्याकरणाध्येतार एतदाधारमेव पाणिनीयाष्टककल्पं प्रकीर्णाऽधिकार-प्रसन्न-तिङन्त-काण्डेति काण्डचतुष्टयात्मकं प्रसादगुणगुम्फितं छन्दोऽलङ्कारध्वनिविशिष्टं कोश-पूर्णम् महाकाव्यशास्त्रमधीत्य महावैयाकरणा महाकवयश्च भवन्ति स्म । अतश्च सर्वत्रैव भारतेऽस्य महाकाव्यस्य प्रचारो व्याकरण-साहित्योभयदृष्ट्यैव विद्यते । अध्ययनमपि तथैव भवति स्म ।

इहैव पुरा वाराणस्यां मध्यम-परीक्षायां सिद्धान्त-कौमुदी-विकल्पे सर्वमपि भट्टिकाव्यं पाठ्यमासीदस्याप्यध्ययनं तथैव वर्षचतुष्टयेनैव साहित्य-व्याकरणो-भयाध्ययनधिया कुर्वन्ति स्मान्तेवासिनः । कियत एव कालादेव संकोचोऽस्य दृश्यते ।

अस्तु यथापि स्यात्काव्यशास्त्रमिदं बहूपयोगि माङ्गलिकं वरदं रामकथा-ऽमृतप्लावितम् पाणिनीय-व्याकरणशिक्षया सहैव अर्थनीति-समाजनीति-राजनीति-शिक्षकमिति तथैव मया काव्यमर्मविमर्शिकाख्यटीकयाऽलङ्कृतमिति संक्षेपः ।

योऽपाययत् पाणिनि-शब्दवारिधेः
पदाऽमृतं रामकथाऽऽप्लुतं कविः ।
सोऽसौ महाशाब्दिकभट्टिकाव्यकृत्
सदाऽभिवन्द्यः कविभिश्च शाब्दिकैः ॥

व्याकरणदृष्ट्याऽस्मिन् पञ्चके पञ्चमतो नवम-सर्गावधि अधिकारकाण्डं प्रसर्पति । तत्र परीक्षार्थिच्छात्रोपयोगि विवरणं सर्वैः सर्वोपयोगि चान्ते ग्रन्थः संक्षिप्यते—

पूर्वं सर्गे पञ्चमे कीर्णकाण्डं दूरं यात्याषण्णवत्यन्तपद्यम् ।
स्त्रीलिङ्गाः कृत्तद्धितान्ताश्च शब्दा लङ्केशायोद्योतनं तद्धगिन्याः ॥
लङ्केश-मारीच-पराभिसन्धितः सीतापहारोऽपि जटायुरोधनम् ।
९७ सप्ताङ्कपद्यादधिकारकाण्डगौ टामाधिकाराविह पञ्चमेऽपि तौ ॥
षष्ठे क्रमेणैव दुहादिसिच्च्लयः कृत्याः कृतोऽन्येऽप्यधिकारिकाः समे ।
सन्त्यष्टकाऽध्यायतृतीयवर्त्तिनो ये ण्वुल्तृजाद्याः प्रथमाङ्घ्रिप्रत्ययाः ॥
रामप्रलापोऽथ जटायु-सङ्गमस्ततः शबर्यादिसमागमस्तथा ।
सुग्रीव-सख्येन च वालिपातन षष्ठस्य सर्गस्य समाप्तिरुह्यताम् ॥
द्वितीयपादादि तृतीय-पादगा आतोयुजन्ताः कृत एव सप्तमे ।
सम्पातिसञ्ज्ञावधि कृद्विधिस्ततो ङित् कित् ततः सप्तमसर्ग उह्यताम् ॥
वर्षागमो वानर-राट्-प्रमादः सौमित्रिकोपेण तदुद्यमश्च ।
सीतागवेषा-समयातिपातः संपातिवाक्याज्जलधेस्तितीर्षा ॥
ततोऽष्टमेऽप्यात्मपदं परस्मैपदं ततः 'कारक' इत्यवेहि ।
कर्मप्रवक्तृत्वविभक्तिकार्ये सर्गेऽत्र बोध्या विषयाः पुरःस्थाः ॥
समुद्रमुल्लङ्घ्य मरुत्सुतस्य लङ्काप्रवेशोऽथ गृहेष्वटाट्या ।
सीतोपलब्ध्यात्मनिवेदनान्ते सन्देशमादाय वनोपभङ्गः ॥
ततश्च सिज्वृद्ध्यधिकार आदावनिट् ततश्चेड् नवमेऽपि सर्गे ।
तत्रैव सत्वं त्वथ षत्वणत्वे इतोऽधिकारौ चरमं प्रकीर्णम् ॥
युद्धं क्षपाटैर्हनुमद्ग्रहास्योपाख्यानमन्ते कपिपुच्छदाहः ।
ततः प्रसन्नश्च तिङन्तकाण्डम् इति[1] द्वयाद् भट्टिसमाप्तिरुह्या ॥

इत्येवमस्य सर्गपञ्चकस्य पञ्चमान्नवमान्तस्य सम्यगष्टाध्यायीपुस्तकाधारमध्ययनं परीक्षार्थिभिः कर्तव्यम् । सुबुद्धिभिश्छात्रैर्गणेशपृष्ठस्थाने नवमसर्गस्य सत्वणत्वाऽधिकारविधिव्यञ्जकस्याध्ययनं स्वयं मनोयोगेन कर्तव्यम् ।

महा-काव्यस्यास्य महत्त्वन्तु पूर्व-भूमिकायां सूचितमेवास्ति । अन्ते च पद्यद्वयेन संक्षिप्यते—

---

१. प्रकीर्णाधिकारो नवमसर्गान्तम् । प्रसन्नतिङन्तौ च -१०—२२ द्वाविंशति सर्गान्तम् । इति द्वयात् काण्डद्वयादवशिष्टात् प्रसन्नतिङन्तादित्यर्थो ज्ञेयः । तत्र प्रतिकाण्डं सर्गविभागो यथा—पञ्चमसर्गस्य ९६ पद्यान्तं प्रकीर्णकाण्डम् । ततो नवमसर्गान्तम् अधिकारकाण्डम् । १०—१३ यावत् प्रसन्नः । १४ सर्गात् २२ सर्गान्तं तिङन्तम् ।

स स्वतन्त्रः कविः शब्द-शास्त्रानुगं
रामवृत्तामृतप्लावितं [1]साऽमरम् ।
यच्चकारानुप्रासप्रसादादिमी[2]
रावणान्ताभिधं काव्यमत्यद्भुतम् ॥
कालतस्तद्विधर्मं–क्षितीशार्दिते
पारतन्त्र्यप्रधाने युगेऽन्तर्हितम् ।
तस्य काव्यस्य मर्मप्रकाशोऽधुना
भारते स्यात् स्वतन्त्रे शिवानुग्रहात् ॥

## विशेषतोऽधिकारप्रत्यय-निर्देशः

पञ्चकेऽस्मिन् पञ्चमान्नवमान्तं पाणिनि-प्रत्ययानामयं क्रमः ।

पञ्चमे—प्रारम्भतोऽस्य सर्गस्य ९६ षण्णवतिपद्यान्तन्तु प्रकीर्णकाण्डमेवास्ति, तदुक्तं पूर्वम् । सप्तनवतितमात्पद्यात् शतावधिः ( ९७-१०० ) टाऽधिकारः ( ३।३।१६-२३ ) सूत्रान्तम् । ततः (१०१-१०३) प्रकीर्णम् । ततः (१०४-१०८) आमोऽधिकारः (३।१।३५-४२) सूत्रान्तम् । इति सर्गसमाप्तिः सीताहरणसूचिका ।

षष्ठे—सर्गेऽस्मिन् पुस्तकान्तरे न्यूना श्लोकसंख्या १४३ यावत् । मया तु अधिकारदिशाऽन्विष्य पद्यत्रयं संगृहीतमिति १४६ पद्यानीह पुस्तके । अयं हि कवेः श्लोकसंग्रहः प्रामाणिकः । सर्गेऽस्मिन् ( १–४ पद्यान्तम् ) पूर्वप्रक्रान्त आमधिकार एव ( ३।१।३५–४२ सूत्रान्तम् ) । ततः ( ५–७ पद्यान्तम् ) प्रकीर्णम् । ततः ( ८–१० पद्यान्तम् ) दुहादिः । ततः ( ११–१४ पद्यान्तम् ) प्रकीर्णम् । ततः ( १५–३४ पद्यान्तम् ) सापवादच्लेः सिजधिकारः ( ३।१।४३–६६ सूत्रान्तम् ) । ततः ( ३५–३९ पद्यान्तम् ) श्नमोऽधिकारः ( रुधादिधातुपाठे द्रष्टव्यः ) । ततः ( ४०–४७ पद्यान्तम् ) प्रकीर्णम् । ततः ( ४८–६९ ) पद्यान्तम् ) कृत्याधिकारः ( ३।१।९५–१३२ सूत्रान्तम् ) । ततः ( ७०–७२ पद्यान्तम् ) प्रकीर्णम् । ततः ( ७३–८८ पद्यान्तम् ) निरुपपदकृदधिकारः ( ३।१।१३३–१५० सूत्रान्तम् ) । ततः ( ८९–९५ पद्यान्तम् ) सोपपदकृदधिकारः ( ३।२।१–१५ सूत्रान्तम् ) । टाधिकारस्तु पञ्चमसर्गे ९७–१०० पद्यान्तम् ( ३।२।१६–२३ सूत्रान्तम् ) गतोऽस्ति । इन् प्रत्ययोऽपि प्रकीर्णे गतोऽस्ति । ततः ( ९६–११० पद्यान्तम् ) सोपपदकृत्सु एव खशधिकारः ( ३।२।२८–४७ सूत्रान्तम् ) । ततः ( १११–११३



१. अमरकोशेन सहितम्–सामरम् । २. प्रह्वेत्यस्योदाहरणम् उभयम् ।

पद्यान्तम् ) सोपपदकृत्सु एव डाधिकारः ( ३।२।४८–५० सूत्रान्तम् )। ततः
११४–१४० पद्यान्तम् ) सोपपदकृत्सु एव णिन्यादिप्रत्ययाधिकारः ( ३।२।५१-
१०१ सूत्रान्तम् )। ततः ( १४१–१४७ पद्यान्तम् ) लादेशेन सह निरुपपदकृद
धिकारः ( ३।२।१०२–१३३ सूत्रान्तम् )। षष्ठसर्गसमाप्तिश्च सुग्रीवाभिषेकसूचिका

सप्तमे—(१–२७ पद्यान्तम्) ताच्छील्यादिनिरुपपदकृदधिकारः (३।२।१३४-
१७८ सूत्रान्तम् )। ततः ( ३।२।१०९–१८८ सूत्राणि प्रकीर्णं गतानि )। ततः
(२८–३१ पद्यान्तम्) उणादिनिरधिकार–कृन्निर्देशः ( ३।३।१–१५ सूत्रान्तम् )
ततः ( ३२–५४ ) पद्यान्तम् घञधिकारः ( ३।३।१६–५५ सूत्रान्तम् )। ततः
(५५–६६ पद्यान्तम्) अचादिक्यन्तकृदधिकारः ( ३।३।५६–९३ सूत्रान्तम् )। ततः
( ६७–७७ पद्यान्तम् ) स्त्रीप्रत्ययकृदधिकारः (३।३।९४–११२ सूत्रान्तम्)। ततः
७८–८५ पद्यान्तम् ) सामान्यकृदधिकारः ( ३।३।११३–१२८ सूत्रान्तम् )
ततः ( ८६–९० पद्यान्तम् ) प्रकीर्णम्। ततः ( ९१–१०८ पद्यान्तम् ) ङित्
किदातिदेशिकाधिकारः (१।२।१–२६ सूत्रान्तम्)। सप्तम-सर्गसमाप्तिः सीतान्वेषण
सम्पातिसङ्गमसूचिका।

अष्टमे—प्रारम्भतः ( १–४९ पद्यमध्ये ) आत्मनेपदाधिकारः ( १।३।१२-
७७ सूत्रान्तम् )। ततः ( ५०–६९ पद्यान्तम् ) परस्मैपदाधिकारः ( १।३।७८-
९३ सूत्रान्तम् )। ततः ( ७०–८४ ) पद्यान्तम् कारकाधिकारः (१।४।२३–५४
सूत्रान्तम्। ततः ( ८५–९३ ) पद्यान्तम् कर्मप्रवचनीयाधिकारः ( १।४।८३-
९८ ) सूत्रान्तम्। मध्ये ( ५५–८२ ) उपसर्गादि–सूत्राणि प्रकीर्णं गतानि )। ततः
( ९४–१३२ ) पद्यान्तम् विभक्त्यर्थाधिकारः ( २।३।१–७३ ) सूत्रान्तम्। अष्टम
सर्गसमाप्तिः अशोकोपवनभङ्गसूचिका।

नवमे—( १–११ ) पद्यान्तम् सिज्वृद्ध्यधिकारः ( ७।२।१–७ ) सूत्रान्तम्
मध्येऽत्र ( ३–७ ) पद्यान्तं प्रकीर्णमपि। ततः ( १२–२२ ) पद्यान्तम्—इण्नि
षेधाधिकारः ( ७।२।८–३० ) सूत्रान्तम्। ततः २३–५७ ) पद्यान्तम् चत्वारि
वैदिकसूत्राणीति तानि विहाय इडधिकारः—( ७।२।३५–७८ ) सूत्रान्तम्
ततः ( ५८–६६ ) पद्यान्तम् सत्वाधिकारः ( ८।३।३४–४८ ) सूत्रान्तम्
( ४९–५४ ) सूत्राणि प्रकीर्णं गतानि। ततः ( ६७–९१ ) पद्यान्तम् षत्वाधिकार
( ८।३।५५–११८ ) सूत्रान्तम्। ततः ( ९२–१३७ ) पद्यान्तम् णत्वाधिकार
( ८।४।१–३९ ) सूत्रान्तम्। ततः प्रकीर्णं सूत्राणि। अत्रैव सर्गसमाप्तिः मारुति
सेवमसूचिका। लङ्कादाहोपक्रामिकेति नवमः सर्गः समाप्तः। परीक्षायामष्टमसर्ग

न्तोऽस्ति पाठ्य इति अष्टमसर्गान्तो मुद्रितो भट्टिमहाकाव्यशास्त्रग्रन्थः। नवमः सर्गोऽग्रे मुद्रितः स्यादिति शिवम्।

भट्टेर्मया पाणिनिभक्तिभाजो महाकवेः शाब्दिक-पुङ्गवस्य।
छात्रोपयोगि प्रसमीक्ष्य काव्यं सम्यक् समालोचितमादरेण॥

छात्रा अनेन विधिना मृदु भट्टिकाव्यम्
पाणिन्युपज्ञमपि [1]चाष्टकमादधानाः।
सम्यक् प्रशील्य दृढसाष्टक-काव्यबोधाद्
भूत्वाऽथ शाब्दिकवरा ददतां परीक्षाम्॥

प्रारम्भतोऽष्टमसर्गावधिभट्टिकाव्यस्य प्रकाशनाधिकारः (प्रकाशक—चौखम्बा सुरभारती प्रकाशन वाराणसी) इत्यस्मै दत्तः, यतो हि छात्राणां श्रेयः-साधनधिया विशेषतस्तत्र प्रचारप्रसारकृत्यम्—'अयम् करिष्यति' इत्येव ममास्मै प्रकाशकाय स्वीकृतिप्रदाने हेतुः।

अतोऽहं विश्वसिमि यत् प्रकाशकमहोदयोऽयं लेखकस्य सर्वाधिकारं सुरक्षन्नग्रे पुस्तकप्रकाशनान्तरावसरेऽपि सर्वदैव संशोधन-परिवर्तन-परिवर्धनादिकृत्यं मद्द्वारैव कारयन् छात्राणां विशेषश्रेयःसाधनं सम्पादयिष्यतीत्यलम्। अत्रास्य भागस्यापि सम्पादनं श्री पं० गोपालदत्तपाण्डेयमहोदया भूयसा मनोयोगेन महता परिश्रमेण च व्यधुरिति पौनःपुन्येन भृशं साधुवादप्रदानेनापि न मेऽन्तरात्मा तृप्यतीति अधमर्ण एवाहमेतेषामिति शिवम्। अन्ते चावश्यकमभिधीयते।

शब्दशास्त्रस्य पाठेऽपि पाठ्यं भवेद्भट्टिकाव्यं क्रमेणेति मे सम्मतम्।
बिभ्रतां शाब्दिकत्वं तथा राजनीतिज्ञतां ते परीक्षार्थिनः॥

हस्ते धृत्वा पाणिनीयाष्टकं तच्-
छात्रैः सर्वैः पठ्यतां भट्टिकाव्यम्।
येयं रीतिः 'काव्यबुद्ध्यैव पाठः'
काव्यस्यास्यापोहनीया जघन्या॥

डी. ५९।३१ सिगरा
वाराणसी

डॉ० श्रीगोपालशास्त्री 'दर्शनकेशरी'

---

१. अष्टाध्यायीपुस्तकं हस्ते गृहीत्वा इत्यर्थः। तच्च 'सवृत्तिरष्टाध्यायीसूत्रपाठः'। प्रकाशकः—चौखम्बा सुरभारती प्रकाशन, वाराणसी।

# गद्ये कथासारः

पञ्चमसर्गे—खरदूषणविनाशानन्तरं सूर्पणखायाः सीताग्रहणार्थम् रावण प्रेरणम्। तस्य च मारीचसाहाय्येन सीताहरणम्। मार्गे जटायोर्निरोधकस्या रावणकर्तृकपक्षच्छेदः। इति संक्षेपः।

षष्ठे—पूर्वम् मनाक् रावणदशां प्रदर्श्य रामस्य विस्तरात्सीतापहारदुःखजन विलापवर्णनम्। तत्रैव मुमूर्षु-गृध्रसङ्गत्या रावणकर्तृकसीताहरण-ज्ञानम्। गृध्र ग्निसंस्कारानन्तरं दीर्घबाहुवधः। तस्मादेव विशेषतः सुग्रीवसख्यकरणात् सीत प्राप्तिसूचना। शबरी-कृतार्थताकरणानन्तरं हनुमत्सङ्गमः। तद्द्वारैव सुग्रीव सख्यम्। बालिनश्च छद्मवधः। बालिरामसंवादान्ते तच्छवदाहः। सुग्रीवस किष्किन्धाद्रिप्रवेशः। इति सर्ग-संक्षेपः।

सप्तमे—पूर्वं वर्षर्तुवर्णनम्। ततः शरत्समागमेऽपि सुग्रीवप्रमादभङ्गा रामकर्तृकं लक्ष्मण-प्रेरणम्। ततो भीतेन सुग्रीवेण सीतान्वेषणाय सर्वदिक्षु वान सैन्य-प्रेषणम्। अङ्गदादीनां दक्षिणदिग्गमः स्वयम्प्रभया सह संलापानन्तरं सीता न्वेषणावधिव्यतिक्रमतः पश्चात्तापः प्रायोपवेशनेन शरीरपातनिश्चयश्च। ततो य च्छया सम्पातिसङ्गमनोत्साहदीप्तिः। अङ्गद-जाम्बवदादिभिः समुद्रसन्तरणक्षमस हनूमतः प्रेषणम् लङ्कायाम्। इति सर्गसमाप्तिः।

अष्टमे—समुद्रसन्तरणावसरे विघ्नमाचरन्त्या राक्षस्या वधः। मैनाकातिथ्या स्वीकारः। सुरसायाश्चोदरं प्रविश्य निर्गमनात् प्रतारणम्। ततो लङ्काप्रवेशेना न्वेषणप्रकारवर्णनम्। अन्तेचाशोकविपिने सीतादर्शनलाभः। तया सह वार्तानन्त रामाभिज्ञानं हीरकाङ्गुलीयकं दत्त्वा सीताभिज्ञानं च तच्चूडामणिं गृहीत्वा श बलपरीक्षणार्थं निसृष्टार्थदूतकृत्येनाशोक-वनिकाभङ्गोपक्रमः। इत्येतावानेवाष्ट सर्गान्तोदन्तः।

नवमे—अशोकवनोपभङ्गं कपिकृतं श्रुत्वा रावणेन प्रहितानामशीतिसहस्र राक्षसानां वधः, ततोऽक्षकुमारस्य रावणेर्वधः। ततो मेघनादप्रहितब्रह्मास्त्रे हनुमतो ग्रहणम् रावणसंसदि उपस्थापनं च। तत्र हनुमद्रावणसंवादः। अन्ते कुपितेन रावणेन हनुमत्पुच्छदाहार्थं राक्षसेभ्य आज्ञाप्रदानम्। इति सर्गसमाप्तिः।

# 'काव्यशास्त्र' का विकास एवं परम्परा

संस्कृत वाङ्मयमें काव्यके माध्यमसे शास्त्रीय पदार्थोंका निर्वचन करनेकी परम्परा प्राचीन कालसे चली आ रही है। रामायण एवं महाभारतमें प्रसङ्गवश दार्शनिक पदार्थोंका निर्वचन विद्यमान है। इसी प्रकार अश्वघोषने भी अपने दोनों ग्रन्थों बुद्धचरित एवं सौन्दरनन्दको बौद्धदर्शनका परिचय देने हेतु माध्यम बनाया है। इसी परम्पराको परिष्कृत एवम् उज्जीवित रखनेके लिए व्याकरण-शिक्षणको सरल एवं रोचक बनानेकी दृष्टिसे संस्कृत-भाषाके अनेक कवियोंने व्याकरणात्मक-काव्योंकी रचना की है। इन कवियोंका प्रमुख उद्देश्य व्याकरणशास्त्रके नियमोंकी जटिलताको दूर कर सरल एवं बोधगम्य बनाना रहा है। संसारकी सभी प्राचीन एवम् अर्वाचीन भाषाओंमें व्याकरण-शिक्षणकी समस्या व्याकरणकी दुरूहताके समान अद्यावधि जटिल बनी हुई है। पाश्चात्य शिक्षाविद् व्याकरणको काव्यसे सर्वथा दूर रखते हैं। उनकी सम्मतिमें व्याकरणकी शिक्षाका माध्यम गद्यात्मक भाषा ही हो सकती है, काव्य नहीं। वे उसका कारण यह बतलाते हैं कि व्याकरणके शिक्षणसे काव्यकी सरसता लुप्त हो जाती है। किन्तु संस्कृत-भाषामें इसके अपवादस्वरूप काव्यको व्याकरण-शिक्षणका माध्यम बनाकर एक अभिनव-शैलीका सर्जन किया गया। इन काव्यों-को क्षेमेन्द्रने अपने सुवृत्ततिलकमें काव्यशास्त्रकी संज्ञा दी है[1]। यह नाम ऐसे काव्योंके लिए सार्थक है, क्योंकि एक ओर तो इन काव्योंमें शास्त्रीय नियमोंका प्रयोगों द्वारा निर्वचन किया जाता है तो दूसरी ओर वास्तविक काव्यके गुणोंका समावेश भी किया गया है।

काव्यशास्त्रकी परम्परामें महाकवि भट्टि सर्वाग्रणी माने जाते हैं। इनकी रचना भट्टिकाव्यके नामसे ही अधिक प्रसिद्ध है। इसका दूसरा नाम रावण-वध है। इस महाकाव्यकी रचना स्वयं ग्रन्थकारके अनुसार श्रीधरसेनके

---

१. शास्त्रं, काव्यं, शास्त्रकाव्यं, काव्यशास्त्रं च भेदतः।
चतुष्प्रकारः प्रसरः सतां सारस्वतो मतः॥
शास्त्रं काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम्।
काव्यं विशिष्टशब्दार्थसाहित्यसदलङ्कृति॥
शास्त्रकाव्यं चतुर्वर्गप्रायं सर्वोपदेशकृत।
भट्टि-भौमक-काव्यादि 'काव्यशास्त्रं' प्रचक्षते॥ सुवृत्ततिलक ३।२,३,४

राज्यकालमें सौराष्ट्रकी वलभी नगरीमें हुई।[1] गुप्त-साम्राज्यके पतन होनेपर वलभीके नरेशोंने पण्डितोंको आश्रय दिया। यद्यपि वलभीमें श्रीधरसेन नामक चार नरेश हो चुके हैं तथापि अधिकतर विद्वानोंके मतानुसार श्रीधरसेन द्वितीय (५७१ ई०) महाकवि भट्टिके आश्रयदाता थे। इसके अनुसार भट्टि-महाकाव्यका रचना-काल ५८८-८९ ई० के पूर्व माना जाता है। इसमें यह प्रमाण दिया जाता है कि श्रीधरसेन द्वितीयके द्वारा प्रसारित एक शिलालेखमें किसी भट्टि नामक विद्वान्‌को कुछ भूमिदान देनेका उल्लेख किया गया है। किन्तु ध्रुवसेन प्रथमके ताम्रपत्रोंमें राज्यके विरुद-वर्णन-प्रसङ्गमें 'दीनानाथोपजीव्यमानविभवः परममाहेश्वरः सेनापतिर्धरसेनः' उल्लेख मिलता है। इसकी पुष्टि भट्टिकाव्यके अन्तिम पद्य द्वारा अभिव्यञ्जित होती है। उक्त पद्यमें राजा श्रीधरसेनको 'प्रजानां क्षेमकरः' उपाधिसे मण्डित किया गया है। तदनुसार अधिकतर विद्वान् अब भट्टिको श्रीधरसेन प्रथम—(लगभग ४९० ई०) का समकालीन मानते हैं।

भट्टिके रावण-वध काव्यका आधार वाल्मीकि-रामायण है। रामके जन्मसे लेकर रामके राज्याभिषेक तक रामायण-कथाको भट्टिने २२ सर्गोंमें निबद्ध किया है। भट्टिका ध्येय काव्यके इतिवृत्तपर विशेष ध्यान देना नहीं है, किन्तु व्याकरणसम्मत शुद्ध प्रयोगोंका निदर्शन करना है। महाकविने इन २२ सर्गोंको चार काण्डोंमें विभक्त किया है—(१) प्रकीर्णकाण्ड, (२) अधिकार-काण्ड, (३) प्रसन्नकाण्ड तथा (४) तिङन्त-काण्ड।

(१) इनमेंसे प्रथम पाँच सर्ग प्रकीर्णकाण्डके नामसे विख्यात हैं। इस काण्डमें रामजन्मसे लेकर रामप्रवास तथा सीताहरण तक कथा वर्णित है। व्याकरणके नियमोंकी दृष्टिसे प्रथम चार सर्ग योजनाबद्ध नहीं हैं। इस भागमें तथा प्रसन्नकाण्डमें भट्टिकी कवित्वशक्तिका अच्छा परिचय मिलता है। पञ्चम सर्गके अधिकतर पद्य प्रकीर्ण हैं। केवल दो स्थलोंपर क्रमशः 'ट' प्रत्यय (टाधिकार ९७–१००) तथा 'आम्' अधिकार (१०४–१०७) के प्रयोगोंका संकेत मिलता है।

(२) अग्रिम ६, ७, ८ तथा ९ सर्ग अधिकारकाण्डके नामसे प्रख्यात हैं। इन चार सर्गोंमें सुग्रीवाभिषेक, सीतान्वेषण, अशोकवनिकाभङ्ग तथा मारुति-संयमकी कथा वर्णित है। इस भागमें भी अनेक पद्य प्रकीर्ण हैं। अधिकारकाण्ड-

१. काव्यमिदं विहितं मया वलभ्यां श्रीधरसेननरेन्द्रपालितायाम्।
कीर्तिरतो भवतान्नृपस्य तस्य क्षेमकरः क्षितिपो यतः प्रजानाम्॥



(भट्टिकाव्य २२।३५)

में प्रमुख रूपसे क्रियाओंके प्रयोगसम्बन्धी नियमोंका विवरण प्रस्तुत किया गया है। निम्नलिखित विवरणसे यह बात स्पष्ट हो जायगी:—

| अधिकार | सर्ग | श्लोकसंख्या | पाणिनिसूत्र | सूत्रसंख्या |
|---|---|---|---|---|
| च्लि | ५ | ४ ( ९७–१०४ ) | ३-२-१६—३-२-२३ | ८ |
| आम् | ५ | ४ (१०४–१०७) | ३-१-३५—३-१-३९ | ५ |
| दुह्यादि | ६ | ३ ( ८–१० ) | १-४-५१ | १ |
| सिच् | ६ | २० ( १६–३५ ) | ३-१-४५—३-१-६६ | २२ |
| श्नम् | ६ | ५ ( ३५–३९ ) | ३-१-७८ | १ |
| कृत्य | ६ | २२ ( ४६–६७ ) | ३-१-९६-३-१-१३२ | ३७ |
| कृत् ( निरुपपद ) | ६ | १६ ( ७१–८६ ) | ३-१-१३३—३-१-१५० | १८ |
| कृत् ( सोपपद ) | ६ | ७ ( ८७–९३ ) | ३-२-१—३-२-१५ | १५ |
| खश् तथा खच् | ६ | १५ ( ९४–१०८ ) | ३-२-२८—३-२-४७ | २० |
| ड | ६ | ३ (१०९–१११) | ३-२-४८—३-२-५० | ३ |
| कृत् ( सोपपद ) | ६ | ३२ (११२–१४३) | ३-२-५१—३-२-१२६ | ७६ |
| कृत् (ताच्छीलक) | ७ | २७ ( १–२७ ) | ३-२-१३४—३-२-१७७ | ४४ |
| कृत् (निरधिकार) | ७ | ६ ( २८–३३ ) | ३-३-१—३-३-१६ | १६ |
| भावे | ७ | ५२ ( ३४–८५ ) | ३-३-१८—३-३-१२८ | १११ |
| स्त्रीलिङ्ग | ७ | ११ ( ६७–७७ ) | ३-३-९४—३-३-११२ | १९ |
| कृत्य-ल्युट् | ७ | ८ ( ७८–८५ ) | ३-३-११३—३-३-१२८ | १६ |
| ङित् | ७ | ३ ( ९१–९३ ) | १-२-१—१-२-४ | ४ |
| कित् | ७ | १४ ( ९४–१०७ ) | १-२-५—१-२-२६ | २२ |
| आत्मनेपद | ८ | ४६ ( १–४९ ) | १-३-१२—१-३-७७ | ६६ |
| परस्मैपद | ८ | २१ ( ४९–६९ ) | १-३-७८—१-३-९३ | १६ |
| कारक | ८ | १५ ( ७०–८४ ) | १-४-२४—१-४-५४ | ३१ |
| कर्मप्रवचनीय | ८ | ९ ( ८५–९३ ) | १-४-८३—१-४-९८ | १६ |
| अनभिहित तथा विभक्ति | ८ | ३७ ( ९४–१३० ) | २-३-१—२-३-७३ | ७३ |
| सिचि वृद्धि | ९ | ४ ( ८–११ ) | ७-२-१—७-२-७ | ७ |
| इट् | ९ | ३५ ( २३–५७ ) | ७-२-३५—७-२-७८ | ४४ |
| इट्प्रतिषेध | ९ | ११ ( १२–२२ ) | ७-२-८—७-२-३४ | २७ |
| सत्व | ९ | ९ ( ५८–६६ ) | ८-३-३४—८-३-४८ | १५ |
| षत्व | ९ | २५ ( ६७–९१ ) | ८-३-५५—८-३-११९ | ६५ |
| [illegible] | ९ | १८ ( [illegible] ) | ८-४-१—८-४-३९ | ३९ |

( ३ ) तीसरा प्रसन्नकाण्ड अलङ्कारशास्त्रसे सम्बद्ध है। अतः इस काण्ड-का नाम 'प्रसन्नकाण्ड' सर्वथा सार्थक है। इसके अन्तर्गत १०,११,१२ तथा १३ सर्ग आते हैं। दशम सर्गमें शब्दालङ्कारों एवम् अर्थालङ्कारोंका सोदाहरण स्पष्टीकरण है। ११ वें तथा १२ वें सर्गमें क्रमशः माधुर्य तथा भाविकका विवेचन है। १३ वें सर्गमें भाषासम-नामक श्लेष-भेदका प्रदर्शन है।

( ४ ) चौथे तिङन्तकाण्डमें यथानाम संस्कृत-व्याकरणके लौकिक ( वैदिक-रहित ) नौ लकारोंका निरूपण है। इस प्रसङ्गमें १४ वें सर्गसे लेकर २२ वें सर्ग तक एक एक सर्गमें एक एक लकारका प्रायोगिक दिग्दर्शन है। निम्नलिखित चक्रसे यह स्पष्ट विदित हो जायगा—

| लकार | सर्ग | प्रयोग-संख्या | लकार | सर्ग | प्रयोग-संख्या |
|---|---|---|---|---|---|
| लिट् | १४ | ४३७ | लिङ् | १९ | ७३ |
| लुङ् | १५ | ४१६ | लोट् | २० | ८४ |
| लृट् | १६ | १११ | लृङ् | २१ | ३५ |
| लङ् | १७ | ३४५ | लुट् | २२ | ३१ |
| लट् | १८ | १२६ | | | |

उपर्युक्त निर्वचनको देखनेसे यह निष्कर्ष निकलता है कि भट्टिने ( १ ) वैदिक प्रकरणको बिलकुल छोड़ दिया है। ( २ ) लौकिक प्रयोगोंमें भी लोक-में प्रचलित महत्त्वपूर्ण उदाहरणों तक ही उन्होंने अपने काव्यको सीमित रखा है। ( ३ ) इसी प्रकार उन्होंने सूत्रोंके प्रत्युदाहरणों एवं वार्तिकोंपर भी विचार नहीं किया है। ( ४ ) वैदिक स्वरोंके सूचक इत्संज्ञक-वर्णोंके उदाहरणों-को भी उन्होंने अपने काव्यमें स्थान नहीं दिया है। ( ५ ) इन बातोंके साथ ही संज्ञा तथा प्रत्याहारोंके सूत्रोंका निदर्शन न कर भट्टिने लाघव दिखाया है। ( ६ ) उदाहरणोंकी पुनरावृत्तिके भयसे अध्याहार-सूत्रोंको भी यथा-सम्भव छोड़ दिया गया है। ( ७ ) गणपाठ-सूचक शब्दोंके निदर्शनमें भी लाघवकी प्रवृत्ति दिखाई पड़ती है। ( ८ ) पाणिनि-सूत्रोंमें 'अर्थ' शब्द द्वारा सूचित समानार्थक शब्दोंकी निष्पत्ति करनेमें केवल एक उदाहरण ही भट्टि देते हैं। ( ९ ) वैकल्पिक प्रयोगोंका यथासम्भव बहुत कम प्रयोग भट्टिकाव्यमें मिलता है। ( १० ) निपातन-शब्दोंका प्रयोग भी अधिकतर छोड़ दिया गया है। ( ११ ) धातुओंके प्रयोग करनेमें भी लोक-प्रचलन पर अधिक ध्यान दिया गया है। अप्रचलित धातुओंके रूप-प्रयोग समाविष्ट नहीं किये गए हैं। समानार्थक धातुओंमें एकका उदाहरण देकर गौरवसे बचनेका पूरा प्रयास किया

गया है। (१२) धातुओंके साथ उपसर्गोंके संयोजनका निदर्शन करनेमें भी लाघवकी प्रवृत्ति अपनाई गई है। ऐसे स्थलोंमें एक उदाहरण देकर सङ्केत मात्र कर दिया गया है। (१३) एक ही धातुमें समानार्थक अनेक प्रत्ययोंके विधान-स्थलोंमें केवल एक प्रत्ययके वर्णन तक ही सीमित रखा है। (१४) अनेक उपपदोंके साथ एक धातुमें एक अथवा अनेक प्रत्यय संयुक्त होनेकी स्थितिमें अधिकतर प्रसंगोचित एक उपपदका उदाहरण देकर उस सूत्रकी सार्थकता सिद्ध की गई है। ऐसे स्थलोंपर यदा-कदा दो, तीन अथवा चार उदाहरण भी दिये गए हैं। (१५) १८ उदाहरण वाले लम्बे सूत्रोंमें भी कमसे कम उदाहरण देकर प्रयोगोंकी साधुताका निदर्शन किया गया है। केवल एक बड़े सूत्रमें बीस उदाहरणोंमेंसे अठारह उदाहरणोंका प्रयोग किया गया है (पा० सू० ३-२-१४२)। इसी प्रकार धातुओंकी लम्बी सूचीमें भी लोकोपयोगी धातुओंके उदाहरणोंका प्रदर्शन किया गया है। (१६) कारक-स्थलोंमें भी अनेक पदोंका आश्रय लेकर होने वाली विभक्तियोंमें केवल एक पदको अभिलक्षित कर विभक्तिका उदाहरण देकर शेष पदोंके प्रयोगकी सार्थकता अध्येताके व्युत्पत्ति-परीक्षणके लिये छोड़ दी गई है।[1]

भट्टिके अनन्तर अनेक वैयाकरणोंने अपने प्रक्रिया-ग्रन्थोंमें भट्टि द्वारा दिये गये उदाहरणोंकी युक्तता एवम् अयुक्तता पर विचार किया है। अधिकतर विद्वानोंने उनके उदाहरणोंको प्रमाणभूत मानकर उन्हें सार्थक बताया है। इस प्रकार भट्टिने 'काव्यशास्त्र' द्वारा पाणिनि-व्याकरणकी शिक्षा देनेमें अभूतपूर्व सफलता प्राप्त की है। महाकवि भट्टि इस परम्पराके प्रवर्तक माने जाते हैं। २२ सर्गोंमें १६२४ श्लोक हैं। वैदर्भी रीति एवं प्रसादगुणोपेत कवितासे कविने काव्यकी उपादेयता सिद्ध की है। भट्टिकाव्य संस्कृतकी उस महाकाव्य-परम्परा की ओर संकेत करता है, जिसमें महाकाव्योंके द्वारा व्याकरणके नियमों का प्रदर्शन करना ही कविका ध्येय रहा है। इस परम्परा को विकसित करनेमें भट्टिके बाद वर्तमान शताब्दीके मध्य तक अनेक कवि हो चुके है, जिनमें भट्ट भौम या भूमक (७०० ई०) विशेष रूपसे उल्लेखनीय हैं। इनके द्वारा विरचित **रावणार्जुनीय** महाकाव्यमें २७ सर्ग हैं। प्रकृत महाकाव्यमें कार्तवीर्य तथा रावणके युद्धका वर्णन विद्यमान है। इस महाकाव्यकी प्रमुख विशेषता यह है

१. विशेष अध्ययनके लिए द्रष्टव्य—भट्टिकाव्य। एक अध्ययन (अंग्रेजी में) —डा० सत्यपाल नारङ्ग

कि इसमें अष्टाध्यायीके सूत्रोंका यथाक्रम अनुसरण कर उदाहरणोंका प्रदर्शन किया गया है। वैदिक-प्रकरणके उदाहरणोंको इन्होंने भी छोड़ दिया है। इस महाकाव्यका प्रकाशन १९०० ई० में निर्णयसागर प्रेस, बम्बईसे हुआ था। क्षेमेन्द्र द्वारा निर्दिष्ट होने ( सुवृत्ततिलक ३।४ ) के कारण भौमकका समय एकादशशतकसे पूर्व ही सिद्ध होता है।

भट्ट भौमकके अनन्तर इस परम्पराको पल्लवित करनेका श्रेय हलायुध कविको मिला। इनकी रचनाका नाम कविरहस्य है। इस काव्यमें राष्ट्रकूट राजा कृष्ण तृतीयकी प्रशस्तिके व्याजसे धातु-रूपोंका प्रदर्शन किया गया है[1]। प्रकृत काव्यमें लगभग ३०० श्लोक हैं। कवि हलायुध राष्ट्रकूट कृष्ण तृतीय ( ९४४–९५३ ) के समकालिक थे। क्षेमेन्द्रके द्वारा उल्लिखित होनेके कारण इनका समय दसवीं शताब्दीका मध्यम भाग निश्चितप्राय है।

इसके पश्चात् वासुदेव कविद्वारा विरचित वासुदेवविजय काव्य लघु होते हुए भी इस विषय में बड़ा उपादेय है। यद्यपि कलेवर की दृष्टि से यह काव्य छोटा है एवं केवल तीन सर्गोंमें ही लिखा गया है तथापि इतनेमें ही पाणिनीय अष्टाध्यायीके क्रमको अभिलक्षित कर लौकिक उदाहरणोंके सिद्धरूप प्रदर्शित किये गये हैं। समग्र अष्टाध्यायीके सूत्रोंको चार भागोंमें विभक्त किया गया है—( १ ) प्रथम तथा द्वितीयाध्यायात्मक, ( २ ) तृतीयाध्यायात्मक, ( ३ ) चतुर्थ-पञ्चमाध्यायात्मक तथा ( ४ ) षष्ठ, सप्तम एवम् अष्टमाध्यायात्मक[2]। कविके सम्बन्धमें प्रकृत काव्यके उत्तरभागस्वरूप[3] धातुकाव्यकी टीकाके आरम्भमें नारेरी नारायण भट्टने सूचित किया है कि वासुदेव कविने केरल प्रदेशके पुरुवन ग्राममें जन्म लिया था। केवल तीन सर्गोंमें समग्र लोकोपयोगी अष्टाध्यायीके सूत्रोंका समावेश करनेसे इनके व्याकरण-शास्त्रके पाण्डित्यका सहज अनुमान किया जा सकता है। प्रकृत ग्रन्थ भी 'काव्यमाला' अष्टम गुच्छक

---

१. लोकेषु शास्त्रेषु च ये प्रसिद्धाः काव्येषु ये सत्कविभिः प्रयुक्ताः।
उद्धृत्य तांश्चित्तविनोदनीयशब्दानहं धातुभिरुद्धरामि ॥
कविरहस्य श्लोक–२।

२. ग्रन्थकारद्वारा रचित प्रकृत काव्यकी 'पदचन्द्रिका' टीका–श्लोक २।

३. उदाहृतं पाणिनिसूत्रमण्डलं प्राग्वासुदेवेन तदूर्ध्वतोऽपरः।
उदाहरत्ययं वृकोदरोदितान् धातून् क्रमेणैव हि [illegible] ॥
धातुकाव्य श्लोक १।

( निर्णयसागर प्रेस, बम्बई ) में प्रकाशित हो चुका है ( १९१५ ई० )। इनका समय-निर्धारण करनेमें भी कठिनाइयाँ हैं। ग्रन्थकारने किसी भी प्रकारसे कोई संकेत नहीं दिया है। किन्तु अनेक विद्वानोंका यह मत है कि **'युधिष्ठिर-विजय'** और **'वासुदेव-विजय'** दोनों काव्योंके प्रणेता एक ही व्यक्ति हैं। तदनुसार ये दोनों काव्य एक दूसरेके पूरक हैं। **राजानक रत्नकण्ठ** द्वारा विरचित **'युधिष्ठिर-विजय'**की टीकाका समय १६७१ ई० है, अतः वासुदेव कवि इनसे प्राचीन हैं। १६०० ई० के आसपास इनकी स्थिति रही होगी।

इसके उत्तरार्धस्वरूप धातुकाव्यमें **नारायण भट्टने 'धातुपाठ'** ( भीमसेन प्रणीत ) के क्रमानुसार ( माधवीयधातुवृत्ति ) १९४४ धातुओंके उदाहरण प्रदर्शित किये हैं। यह काव्य चार सर्गोंमें विभक्त है। कथानक भागवतसे लिया गया है। अक्रूरकी यात्राका वर्णन करते हुए कंसवध पर्यन्त कथानकके व्याज-से नारायण भट्टने धातुरूपोंका आदर्श प्रस्तुत करनेमें सफलता प्राप्त की है।

इन प्रकाशित ग्रन्थोंके अतिरिक्त भट्टिमहाकाव्यके समान **मोहनभट्टने** भी **कंसवध महाकाव्य**की रचना की है, जो अद्यावधि अप्रकाशित है। इसकी लिखित प्रति 'रायल एशियाटिक सोसाइटी' पुस्तकालय ( बम्बई ) में सुरक्षित है। अन्तिम सर्गका कुछ अंश खण्डित है। इस महाकाव्यमें प्रक्रिया-ग्रन्थानुसारी वर्गीकरणका अनुसरण कर प्रकरण-विभागके अनुसार व्याकरण-शास्त्रका निर्वचन किया गया है।[१] प्रकृत महाकाव्यमें भी २१ सर्ग हैं, जिनका विवरण आगे दिया जारहा है।

**'कंसवध'** महाकाव्यमें श्रीकृष्णकी जीवनकथा आरम्भसे लेकर कंसवध-पर्यन्त वर्णित है। तदनुसार सर्गोंका विषय-विभाजन कथाप्रसङ्गसहित निम्नलिखित है—

---

१. श्रीपतेश्चरणयोर्नखरमा भासुरेति रभसादशङ्कितम्।
आदधातु हृदि मे सरस्वती नूपुरस्वनमनोहरं पदम्॥
शब्दशास्त्रमनधीत्य तत्फलं येऽधिगन्तुमलसाः समुत्सुकाः।
तन्निमित्तमिदमीदृशं मया केशवस्य चरितं निबध्यते॥

—मङ्गलाचरण श्लोक १—२।

२. सन्धि सुप्प्रकरणे स्त्र्यधिक्रिया कारकाण्यथ समासतद्धितौ।
तिङ्सनादिपदयोर्व्यवस्थितिर्लार्थगीः कृत इतीह संग्रहः॥



—मङ्गलाचरण श्लोक ३।

| सर्ग सं० | विषय | श्लोक संख्या | सर्ग सं० | विषय | श्लोक संख्या |
|---|---|---|---|---|---|
| १ | सन्धि-विग्रह | ६२ | ११ | गोपिकापरिहास | ९५ |
| २ | सुब्-विभक्ति | ७४ | १२ | ,, | ७१ |
| ३ | ,, | ७८ | १३ | ऋतुवर्णन | ७५ |
| ४ | ,, | ८१ | १४ | विरहवर्णन | ८५ |
| ५ | कारकसंग्रह | १२५ | १५ | रासविलास | १०६ |
| ६ | वृन्दावनाभिगमन | ८४ | १६ | रासविलास | १०६ |
| ७ | समाससंग्रह | ७० | १७ | धनुर्भङ्ग | ११९ |
| ८ | गोवर्धनपूजा | १०८ | १८ | मल्लवध | १२० |
| ९ | गोवर्धनोद्धरण | १०६ | १९ | सेनानिर्याण | १२६ |
| १० | तद्धितसंग्रह | ९८ | २० | चित्रसर्ग | १३५ |

२१ वां सर्ग अपूर्ण है। उपान्त्य पृष्ठके १५०वें श्लोकके बाद अन्तिम पृष्ठ न होनेसे कुछ श्लोक उपलब्ध नहीं हैं। अन्तमें पुष्पिका देकर कविने स्वयम् अपना एवम् अपने आश्रयदाताका उल्लेख किया है। वह भी अपूर्ण है, जो इस प्रकार है—

"इति श्री महाराजदेवीसिंहाज्ञानुवर्तिनः कविपण्डितापरनाम्नो मोहनभट्टस्य कृतौ आनन्दाङ्क-पदसमुच्चये कंसवधे महाकाव्ये०"।

इसके साथ ही सबके अन्तमें मोहनभट्टने अपने आश्रयदाताके पूर्वजोंका नामोल्लेख कर उनके पिता भारतसाह तक राजाओं की इस प्रकार गणना की है— महीपाल–कर्णसहजाग्रदेव–राम–पृथ्वीराज–तमाल्ह–रामचन्द्र–अर्जुनदेव–मल्खान–प्रतापरुद्र–मधुकरसाह[1]–( १५५४-१५९२ ई० ओरछानरेश ) रामसाह[2]–( दक्षिणतटवर्ती शासकोंको आतङ्कित करनेवाला )–संग्रामसिंह[3]–

१. यत्पाणी नृहरेः सदैव चरणावानर्चतुः सादरं,
दाने चाङ्घ्रियुगं महीदिविषदां प्रक्षालयांचक्रतुः।
युद्धे चिक्षिपतुश्च मार्गणगणं हन्तुं परानीकिनीं,
त्रैलोक्यप्रथिताह्वयो मधुकरो राजा स यत्राभवत् ॥

—सिंहसिद्धान्तसिन्धु–श्लो० ८।

२. रामास्त्रयो भक्तिभरेण तुष्टास्तस्मै ददुः स्वीयगुणान् समस्तान्।
लोकास्ततस्तं प्रथितप्रभावं श्रीराम इत्येव समाख्ययोचुः॥ श्लो० १२।

३. आसीत्तदीयतनयो विनयोपपन्नः स्वच्छाशयो बहुदयो [illegible]
युद्धे निकामममयो विनयेऽर्जितश्रीः संग्रामसाहिरिति भूमिपतिः प्रसिद्धः॥श्लो०१४।

भारतसाह[1] । तदनन्तर सर्वान्तमें अपने आश्रयदाता का उल्लेख कर अपनी कृतज्ञता प्रकट की है—

"देवीसिंह[2] इति क्षितीशतिलकस्तस्याभवन्नन्दनः" ।

यहीं पर पुस्तक खण्डित हो गई है ।

देवीसिंह चन्देरी नरेश थे । इनका समय-निर्धारण करनेमें मतैक्य नहीं है । श्रीयुत एम० वी० गर्देके अनुसार देवीसिंहने १६५४-१६६३ ई० तक शासन किया । किन्तु इसके विपरीत 'इम्पीरियल गजेटियर' ( मध्यभारत खण्ड ) के अनुसार देवीसिंहको औरंगजेबने सन् १६८० ई० में चन्देरीका शासक नियुक्त किया था । इन दोनोंमें से प्रथम मत अधिक समीचीन प्रतीत होता है, क्योंकि इनके आश्रित[3] दूसरे विद्वान् श्री शिवानन्द भट्टने अपने ग्रन्थ 'सिंहसिद्धान्तसिन्धु' मे देवीसिंहके चार पूर्वपुरुषोंका वर्णन कर अन्तमें देवीसिंहकी प्रशस्ति की है । इस ग्रन्थकी समाप्ति विक्रम सं० १७३१ तदनुसार १६७४ ई० में हुई । उस समय प्रकृत ग्रन्थकारके अनुसार देवीसिंह चन्देरीमें शासन कर रहे थे ।[4]

यह महाकाव्य अष्टाध्यायीको अभिलक्षित कर प्रक्रियाग्रन्थोंकी रचना हो जानेके बाद रचा गया है । अतः इसका विषय-विभाजन तदनुसार सन्धिप्रकरणसे आरम्भ होकर कृदन्त-प्रकरणमें पर्यवसित होता है । भागवतसे कथानक लेकर कविने अपने उद्देश्यकी पूर्ति सुचारु रूपमें की है । महाकाव्योचित प्रसङ्गोंका वर्णन भी यथास्थान किया गया है । भाषाके लौकिक-पक्ष का निदर्शन होनेके कारण वैदिक-प्रक्रियाका न होना स्वतः सिद्ध है ।

---

१. तस्यात्मजो वलरजोमररुद्धभानुर्दृप्तद्विषद्दलनतीव्रमदः कृशानुः ।
अत्यद्भुतो गुणगणैः प्रथितो धरण्यां श्रीभारतो बहुलदानरतो बभूव ।। श्लोक १६ ।

२. आसते भुवि नृपाः सहस्रशो भारतात्मज न ते भवत्समाः !
नन्दने कति सन्ति शाखिनः कोऽपि कल्पतरुसन्निभः श्रुतः ।। श्लोक ३० ।

३. ज्येष्ठस्तस्य सुतो जनोदितशिवानन्दाभिधानः क्षितौ,
श्रीविद्याचरणारविन्दयुगलध्यानैकतानोऽनिशम् ।
देवीसिंहनृपेण धर्मकलितस्वान्तेन सम्प्रार्थित—
स्तत्प्रीत्यै वितनोति धार्मिकजनश्रव्यं निबन्धोत्तमम् ।। श्लोक ३६ ।

४. तत्सूनुः परिपन्थिमाथिविलसद्वीरोऽतिधीरो रणे,
वल्गातुङ्गतुरङ्गनिष्ठुरखुरक्षुण्णक्षमामण्डलः ।
[illegible] क्षितौ
देवीसिंह नरेश्वरो निरुपमो राजोत्तमो राजते ।। श्लोक २२ ।

इन काव्यशास्त्रोंके अतिरिक्त संस्कृत साहित्यके इतिहास-ग्रन्थोंमें अन्य काव्योंका भी उल्लेख मिलता है, जिनका वर्णन करना आवश्यक है। उनका विवरण इस प्रकार है—

( १ ) दशाननवधकाव्यम्—इसके रचयिता **योगीन्द्रनाथ** तर्कचूडामणि है। प्रकृत काव्य 'रावणार्जुनीयम्'की रीतिका अवलम्बन कर लिखा गया है। ( २ ) लक्षणादर्श—इसके रचयिता महापण्डित दिवाकर हैं। १४ सर्गोंमें निबद्ध इस रचनामें महाभारतकी कथाका आश्रय ले व्याकरणशास्त्रके नियमोंको स्पष्ट किया गया है। ( वैद्येश्वरके पुत्र **कवीन्द्राचार्य** भी दिवाकर नामसे विख्यात हुए हैं। इन्होंने **भारतामृतम्** ग्रन्थ २० सर्गोंमें लिखा है )। यह विजयनगरके कृष्णार्य नामक राजाके दरबारी कवि थे। ( ३ ) यदुवंशकाव्यम्के रचयिता **काशीनाथने** यदुवंशका ( यादवों ) आख्यान प्रस्तुत करते हुए पाणिनीय-सूत्रोंके उदाहरण प्रस्तुत किये हैं। ( ४ ) सुभद्राहरणम्—ब्रह्मदत्तके पुत्र **नारायणने** २० सर्गोंमें सुभद्राके साथ भगवान् कृष्णका विवाह वर्णन करते हुए व्याकरणके उदाहरण प्रस्तुत किये हैं। ( ५ ) वर्तमान शताब्दीके मध्यमें **म० म० पं० देवीप्रसाद शुक्ल कविचक्रवर्तीने** कौमुदीके क्रमको अभिलक्षित कर **पाणिनि-प्रकाशः** नामसे काव्यात्मक रचनाके कुछ अंश तत्कालीन **सुप्रभातम्** नामक संस्कृत-मासिक पत्रमें प्रकाशित करवाये थे जिसमें उदाहरण द्वारा सूत्रोंकी सार्थकता बताई गई है। इसे व्याकरणात्मक काव्य तो नहीं कहा जा सकता, किन्तु कविताके माध्यमसे पाणिनिसूत्रोंकी व्याख्या कर उदाहरण प्रस्तुत किये गये हैं। ( ६ ) इसी क्रमको अभिलक्षित कर सिद्धान्तकौमुदीकी फक्किकाओं ( पङ्क्तियों—दुरूह स्थलों ) को काव्यबद्ध कर उसे सरल बनानेकी दिशामें **स्व० पण्डित केशवदत्त पाण्डेय** साहित्याचार्यका नाम विशेषरूपसे उल्लेखनीय है। उनकी कुछ दुरूह पङ्क्तियोंकी काव्यमयी सरसता इस शताब्दीके मध्यमें प्रकाशित होने वाली सुप्रसिद्ध संस्कृत मासिक-पत्रिका **अमरभारतीमें** देखी जा सकती है। पण्डितजीने अपनी यह रचना अपने सहारनपुरस्थ मित्र पं० माधवप्रसादजीको दे दी थी।

उपर्युक्त विवरणसे यह स्पष्ट होता है कि व्याकरण-शिक्षणको सरल बनानेकी दिशामें अनेक कवियोंने प्रयत्न किया है तथा वे इस कार्यमें सफल भी हुए हैं। इस अभिनव उपायने व्याकरणके प्रायोगिक शिक्षणको बड़ा सरल बना दिया है। इन ग्रन्थोंमें भी सर्वाधिक प्रचार भट्टिकाव्यका ही है।



—गोपालदत्त पाण्डेय

॥ श्री ॥

# भट्टिमहाकाव्यम्

## काव्य-मर्मविमर्शिकाख्यटीकोपेतम्

### पञ्चमः सर्गः

पूर्वं चतुर्षु सर्गेषु प्रकीर्णकाण्डमभिधायेहापि षण्णवतितमपद्यान्तं तदेव काण्डं कविर्नयति। तत्र सूर्पणखोद्दीपितौ तद्भ्रातरौ रामेण सह योद्धुमागतौ रणे चरतः—

निराकरिष्णू वर्तिष्णू वर्धिष्णू परितो रणम्।
उत्पतिष्णू सहिष्णू च चेरतुः खर-दूषणौ ॥ १ ॥

**अन्वयः**—( ततः ) निराकरिष्णू वर्तिष्णू वर्द्धिष्णू उत्पतिष्णू सहिष्णू च खरदूषणौ रणं परितः चेरतुः।

**हिन्दी**—त्रिशिरा नामक राक्षसके मारे जानेपर शत्रुको हरा देनेवाले, समरमें डट जानेवाले, बढ़नेवाले, उछलने-कूदनेवाले, प्रहारोंको सहनेवाले खरदूषण (दोनों भाई ) युद्धभूमिके चारों ओर घूमने लगे ( पैंतरा देने लगे )।

**व्याख्या**— ( ततः त्रिशिरसः पातानन्तरम् ) निराकरिष्णू शत्रुपराजयकरणशीलौ, उत्पतिष्णू ऊर्ध्वप्लुतिकरणशीलौ, (प्रहारवञ्चनार्थम्) सहिष्णू प्रहाराघातसहनशीलौ, वर्तिष्णू प्रहारे जातेऽपि वर्तनशीलौ, वर्द्धिष्णू (मायया) वर्द्धनशीलौ च, खरदूषणौ शूर्पणखा-भ्रातरौ, रणं समरं, परितः सर्वतः, चेरतुः चक्रमतुः। अनुप्रासच्छटा तु प्रायः सर्वत्रैवाऽन्येऽप्यलङ्कारा: पूर्वोक्तदिशा ऊह्याः।

**कोशः**—'अस्त्रियां समरानीकरणाः कलहविग्रहौ'—( इत्यमरः )।

**समासः**—खरश्च दूषणश्चेतीतरेतरद्वन्द्वाद् द्विवचनान्येव सर्वाणि रूपाणि। 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि २।३।२' इति परितो योगे रणमित्यत्र द्वितीया।

कृदन्तः—निराकरिष्णू इत्यादिषु सर्वत्रैव 'अलङ्कृञ्० ३।२।१३६' इतीष्णुच् प्रत्ययः ( ७-२-४ )।

तिङन्तः—चर गतौ इति भौवादिकाल्लिटि द्वित्वेऽभ्यासकार्ये 'अत एक हल्मध्येऽनादेशादेर्लिटि ६।४।१२०' इति एत्वाभ्यासलोपौ।

वाच्यपरिवर्तनम्—निराकरिष्णुभ्यां, वर्तिष्णुभ्यां, वर्धिष्णुभ्याम्, उत्पति ष्णुभ्यां खरदूषणाभ्याम् चेरे।

शिक्षा— विपदि धैर्यम्०' इति प्रसिद्धां नीतिमेव शिक्षयति पद्यम् ॥ १।

तयो रणनीतिं वर्णयति कविः—

तौ खड्ग-मुसल-प्रास-चक्र-बाण-गदा-करौ।
अकार्ष्टामायुध-च्छायं रजः-सन्तमसे रणे ॥ २ ॥

अन्वयः—खड्ग-मुसल-प्रास-चक्र-बाण गदा-करौ तौ रजःसन्तमसे रणे आयुध च्छायम् अकार्ष्टम्।

हिन्दी—तलवार, मूसल, भाले, चक्र ( ढाल ), बाण, गदा हाथोंमें लिये हुए खरदूषणने धूलसे आच्छन्न समरभूमिमें शस्त्रास्त्रोंकी छाया कर दी।

व्याख्या—खड्ग-मुसल-प्रास-चक्र-वाण-गदा-करौ = अस्ययोग्रकुन्तरथाङ्गशर गदाहस्तौ, तौ खरदूषणौ, रजःसन्तमसे धूलिकृतघनान्धकारे, रणे समरे, आयुध च्छायम् शस्त्रास्त्रावरणम्, अकार्ष्टाम् व्यधाताम्।

कोशः—'अयोग्रो मुसलोऽस्त्री स्यादुलुखलमुलूखलम्।'
'आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ'—इत्यमरः।

समासः—खड्गश्च मुसलं च प्रासश्च चक्रं च बाणश्चेति तेषां समाहारः खड्ग मुसलप्रासचक्रबाणम्। तेन सहिता गदा खड्गमुसलप्रासचक्रबाणगदेति 'शाक पार्थिवादीनां सिद्धये मध्यमपदलोपो वक्तव्यः' इति सहितपदलोपे खड्गमुसलप्रास चक्रबाणगदा करयोर्ययोस्तौ इति बहुव्रीहौ करशब्दस्य 'प्रहरणार्थेभ्यश्च प निष्ठासप्तम्यौ भवतः २।२।३७' इति वार्तिकात्परनिपातः। द्वन्द्वे तु 'जाति प्राणिनाम् २।४।६' इति द्वन्द्वैकवद्भावे खड्गमुसलप्रासचक्रबाणगदम् इति नपुंस स्यात्। सन्ततं तमः सन्तमसम् इति विग्रहे 'कुगतिप्रादयः २।२।१८' इति समा 'अवसमन्धेभ्यस्तमसः ५।४।७९' इत्यचि, ततो रजसा सन्तमसं यस्मिन् तत् तथोक्तम् तस्मिन्निति व्यधिकरणबहुव्रीहिः रजस्सन्तमसे इति रणस्य विशेषणम्। आयुधानां छाया ... नपुंसकत्वं ... आयुधच्छायम्



तिङन्तः—डुकृञ् करणे इति धातोर्लुङि, तसि, 'तस्थस्थमिपां तान्तन्ताम

३।४।१०१' इति तसस्तामादेशे, 'सिचि वृद्धिः परस्मैपदेषु ७।२।१' इति वृद्धौ, षत्वे, ष्टुत्वेऽडागमे अकार्ष्टाम् ।

वाच्यपरिवर्तनम्—ताभ्याम् आयुधच्छायम् अकारि ॥ २ ॥

तयोर्निधनमाख्याति—

अथ तीक्ष्णाऽऽयसैर् बाणैरधिमर्मं रघूत्तमौ ।
व्याधं व्याधममूढौ तौ यम-सात्-चक्रतुर् द्विषौ ॥ ३ ॥

अन्वयः—अथ अमूढौ रघूत्तमौ तीक्ष्णायसैः बाणैः अधिमर्मं व्याधम् व्याधम् तौ द्विषौ यमसात् चक्रतुः ।

हिन्दी—इसके बाद सावधान हो रामलक्ष्मणने तीक्ष्ण तीरोंसे मर्मस्थलोंको वेध-वेध कर उन शत्रुओंको यमराजके अधीन कर दिया ।

व्याख्या—अथ खरदूषणप्रहारप्रयोगानन्तरम्, अमूढौ सावधानौ, रघूत्तमौ रामलक्ष्मणौ, तीक्ष्णायसैः निशितफलैः, बाणैः विशिखैः, अधिमर्मं मर्मस्थानेषु, व्याधम् व्याधम्=भृशम् विध्वा, तौ खरदूषणौ, द्विषौ शत्रू, यमसात् कालाधीनौ, चक्रतुः विदधाते । छेकाऽनुप्रासोऽलङ्कारः ।

कोशः—'पृषत्कबाणविशिखा अजिह्मग-खगाशुगाः'-इत्यमरः ।

समासः—रघुषु उत्तमौ इति सप्तमीतत्पुरुषः । तीक्ष्णम् आयसम् येषाम् ते, तैः । मर्मसु इति अधिमर्म—विभक्त्यर्थे 'अव्ययं विभक्ति० २।१।६' इति समासे, 'नपुंसकादन्यतरस्याम् ५।४।१०९' इति वैकल्पिकटचोऽभावे रूपम् ।

कृदन्तः—भृशम् विध्वा विध्वा इति विग्रहे "आभीक्ष्ण्ये णमुल् च ३।४।२२" इति णमुलि, अनुबन्धलोपे, 'अत उपधायाः ७।२।११६' इति उपधावृद्धौ, 'आभीक्ष्ण्ये द्वे भवतः ८।१।४' इति वार्तिकबलात् द्वित्वे, 'कृन्मेजन्तः १।२।३९' इति अव्ययम् । द्विष्ट इति द्विषौ—'सत्सूद्विष० ३।२।६१' इति क्विप् ।

वाच्यपरिवर्तनम्—अमूढाभ्यां रघूत्तमाभ्याम् तौ द्विषौ यमसात् चक्राते ।

शिक्षा—'अहो दुरन्ता बलवद्विरोधिता' इत्येव शिक्षयति पद्यम् ॥ ३ ॥

तद्वधानन्तरम् शूर्पणखाकृत्यमाह—

हत-बन्धुर् जगामाऽसौ ततः शूर्पणखा वनात् ।
पारे-समुद्रं लङ्कायां वसन्तं रावणं पतिम् ॥ ४ ॥



अन्वयः—ततः हतबन्धुः असौ शूर्पणखा वनात् पारेसमुद्रं लङ्कायाम् वसन्तम् पतिं रावणं जगाम ।

हिन्दी—बन्धुओंके मारे जाने पर वह शूर्पणखा समुद्रके पार लङ्कामें रहने वाले रक्षक रावणके पास गयी।

व्याख्या—ततः खरदूषणादिचतुर्दशसहस्रराक्षसवधानन्तरम्, हतबन्धुः दिनष्टबान्धवा, असौ सर्वराक्षसवधनिदानम् शूर्पणखा, वनात् दण्डकारण्यात्, पारेसमुद्रम् सागरस्यापरतीरे, लङ्कायां सुवर्णपुर्याम्, वसन्तम् निवासिनम्, पतिं रक्षकम् ईश्वरमित्यर्थः, रावणम् दशास्यम्, जगाम ययौ। गमने हतबन्धुत्वं हेतुरिति काव्यलिङ्गमलङ्कारः।

कोशः—'ईश्वरः पतिरीशिता'—इत्यमरः।

समासः—हता बन्धवो यस्याः सा। शूर्पाणि इव नखा यस्याः सा इति बहुव्रीहिसमासे 'स्वाङ्गाच्चोपसर्जनात् ४।१।५४' इति जायमानस्य ङीपः 'नखमुखात् संज्ञायाम् ४।१।५८' इति निषेधे टापि, 'पूर्वपदात् संज्ञायामगः ८।४।३' इति णत्वम्। समुद्रस्य पारे इति विग्रहे 'पारेमध्ये षष्ठ्या वा २।१।१८' इत्यव्ययीभावे तत्सन्नियोगेन पारे इत्यस्यैकारान्तत्वे निपातिते 'प्रथमानिर्दिष्टं समास उपसर्जनम् १।२।४३' इत्युपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम् २।२।३०' इति पूर्वनिपाते पारे समुद्रशब्दादागतायाः सप्तम्याः 'तृतीयासप्तम्योर्बहुलम् २।४।८१' इति वैकल्पिकेऽमि पारेसमुद्रम्।

कृदन्तः—वस निवासे इति धातोः 'लटः शतृशानचौ० ३।२।१२४' इति कर्तरि, शपि, पररूपे, वसत्-शब्दादमि 'उगिदचाम्० ७।१।७०' इति नुम्।

तिङन्तः—गम्लृ गतौ इति धातोर्लिटि, णलि, द्वित्वादिकार्ये, 'अत उपधायाः ७।२।११६' इति वृद्धिः।

वाच्य०—हतबन्ध्वा अमुया शूर्पणखया वसन् पतिः रावणः जग्मे।

शिक्षा—रावणवधादृष्टमेव शूर्पणखां तस्य पार्श्वं नीत्वा तं सीतां हर्तुमुद्दीपयति। 'तादृशी जायते बुद्धिर्व्यवसायोऽपि तादृशः। सहायास्तादृशाश्चैव यादृशी भवितव्यता' इति शिक्षा द्वाविंशतितमपद्यान्तम् प्रायः॥ ४॥

रावणपार्श्वे शूर्पणखाक्रन्दनं प्रस्तौति कविः—

सम्प्राप्य राक्षस-सभं चक्रन्द क्रोध-विह्वला।
नामग्राहमरोदीत् सा भ्रातरौ रावणान्तिके॥ ५॥

अन्वयः—क्रोधविह्वला सा राक्षससभं सम्प्राप्य चक्रन्द। रावणान्तिके भ्रातरौ नामग्राहम् अरोदीत्।

हिन्दी—क्रोधसे व्याकुल शूर्पणखा राक्षसोंकी सभामें पहुँचकर चिल्लाने लगी और रावणके निकट अपने भाई खरदूषणका नाम ले ले रोने लगी।

व्याख्या—क्रोधविह्वला कोपविवशा, सा शूर्पणखा, राक्षससभम् कौणपपरिषदम्, सम्प्राप्य अभिगम्य, चक्रन्द आजुहाव। रावणान्तिके दशाननपार्श्वे, भ्रातरौ खरदूषणौ, नामग्राहम् नाम गृहीत्वा गृहीत्वा, अरोदीत् अरुदत्।

कोशः—'राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आशरः—' इत्यमरः।

समासः—क्रोधेन विह्वलेति 'तृतीया' इति योगविभागात् समासः। राक्षसानां सभा राक्षससभम्। 'षष्ठी २।२।८' इति समासे 'सभाराजाऽमनुष्यपूर्वा २।४।२३' इति नपुंसकतया ह्रस्वे राक्षससभम् इति द्वितीयान्तम्।

कृदन्तः—सम्यक् प्रकर्षेण आप्त्वेति विग्रहे 'कुगतिप्रादयः २।२।१८' इति समासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७' इति क्त्वो ल्यबादेशे सम्प्राप्य। नाम गृहीत्वा गृहीत्वेति विग्रहे 'नाम्न्यादिशिग्रहोः ३।४।५८' इति द्वितीयान्तनामपूर्वकात् ग्रहधातोः णमुलि 'अमैवाव्ययेन २।२।२०' इति समासे, सुपो लुकि, 'न लोपः प्रातिपदिकान्तस्य ८।२।७' इति नलोपे, 'अत उपधायाः ७।२।११६' इति वृद्धौ नामग्राहम्। 'कृन्मेजन्तः १।१।३९' इत्यव्ययत्वात् विभक्तेर्लुग्ज्ञेयम्।

तिङन्तः—रुदिर् अश्रुविमोचने इति धातोर्लङि 'रुदश्च पञ्चभ्यः ७।३।९८' इति ईडागमे, ततोऽडागमे च अरोदीत्।

वाच्यः—तया क्रोधविह्वलया चक्रन्दे। नामग्राहविशिष्टाया रोदनक्रियाया व्याप्तुमिष्टत्वाद्रुदिः सकर्मक इति नामग्राहम्। भ्रातरौ अरुद्येताम् तयेति ज्ञेयम्॥५॥

तयोः किं जातम् इति रावणेन पृष्टा ब्रूते—

दण्डकानध्यवात्तां यौ वीर! रक्षःप्रकाण्डकौ।
नृभ्यां संख्येऽकृषातां तौ सभृत्यौ भूमिवर्धनौ॥ ६॥

अन्वयः—हे वीर, यौ रक्षःप्रकाण्डकौ दण्डकान् अध्यवात्ताम्, सभृत्यौ तौ नृभ्याम् संख्ये भूमिवर्द्धनौ अकृषाताम् 'इति जानीहि' इति शेषः। मृताविति ध्वनिः।

हिन्दी—हे वीर! जो राक्षसोंमें श्रेष्ठ खरदूषण दण्डकारण्यमें रहते थे, भृत्योंके सहित वे दोनों दो मनुष्योंसे युद्धमें मारे गये हैं।

व्याख्या—हे वीर! हे शूर! यौ खरदूषणौ, रक्षःप्रकाण्डकौ राक्षसतल्लजौ, दण्डकान् दण्डकारण्यभूभागान्, दण्डकामिति पाठे दण्डकामरण्यानीम्, अध्यवात्ताम् अवसताम् निवसितवन्तौ, सभृत्यौ भृत्यसहितौ, तौ पूर्वोक्तौ भ्रातरौ, नृभ्याम् मानवाभ्यां, संख्ये

संग्रामे, भूमिवर्द्धनौ अवटशायिनौ, अकृषाताम् अकारिषाताम् ( इति विक्रा इति शेषः ) ।

कोशः—'मर्चचिका मतल्लिका प्रकाण्डमुद्घतल्लजौ ।

प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः—' इत्यमरः ।

समासः—रक्षसी च तौ प्रकाण्डकौ इति विग्रहे 'प्रशंसावचनैश्च २।१।६६' इति समासे, उपसर्जनत्वाद् रक्षसः पूर्वनिपाते रक्षःप्रकाण्डकौ । अत्र प्रकाण्डे ए प्रकाण्डकौ इत्यत्र स्वार्थिककनि 'स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' नपुंसकप्रकृतित्वेऽपि पुंस्त्वं ज्ञेयम् । भृत्यैः सह इति विग्रहे 'तेन सहेति तुल्ययोगे २।२।२८' इति समासे, 'वोपसर्जनस्य ६।३।८२' इति सहस्य सादेशे सभृत्यौ। भूमेः वर्द्धनौ भूमिवर्द्धनाविति तत्पुरुषः ।

कृदन्तः—वर्द्धयतः इति विग्रहे ण्यन्ताद् वृध्धातोः 'कृत्यल्युटो बहुलम् ३।३।११३' इति कर्तरि ल्युटि, 'णेरनिटि ६।४।५१' इति णिलोपे वर्द्धनौ ।

तिङन्तः—कृञ् धातोः कर्मणि लुङि 'स्यसिच्सीयुट्तासिषु ६।४।६२' इति चिण्वदिटः पाक्षिकत्वादभावे षत्वे अकृषाताम् । अधिपूर्वकात् वस धातोर्लुङि 'वद-व्रज० ७।२।३' इति वृद्धौ, 'सः स्यार्धधातुके ७।४।४९' इति धातुसकारस्य तकारे, 'झलो झलि ८।२।२६' इति सलोपे अध्यवात्ताम् ।

वाच्य०—नरौ (कर्तारौ) याभ्यां रक्षःप्रकाण्डकाभ्यां दण्डका अध्यवत्सत तौ रक्षःप्रकाण्डौ (कर्मणी) भूमिवर्द्धनौ अकृषाताम् (अकार्ष्टाम् इति परस्मैपदे) ॥६॥

शूर्पणखा रावणोद्दीपने हेतूनुपक्षेप्तुं प्रक्रमते द्वाविंशपद्यावधि—

> विग्रहस्तव शक्रेण बृहस्पति-पुरोधसा ।
> सार्धं कुमार-सेनान्या, शून्यश्चाऽसीति को नयः ॥ ७ ॥

अन्वयः—हे प्रतापिन्, बृहस्पतिपुरोधसा कुमारसेनान्या शक्रेण सार्धम् तव विग्रहः, त्वं च शून्यः असि इति कः नयः ?

हिन्दी—अये प्रतापिन् ! जिसका बृहस्पति पुरोहित है, कार्तिकेय सेनापति है, ऐसे इन्द्रके साथ तो आपका विरोध है और आप यों बेपरवाह हैं । यह कौन सी नीति है ?

व्याख्या—हे प्रभो ! बृहस्पति-पुरोधसा गुरुपुरोहितेन, कुमारसेनान्या गुहसेना-पतिना, शक्रेण इन्द्रेण, साकम् सह, तव रावणस्य, विग्रहः विरोधः, (एवं बलवता विग्रहेऽपि ) त्वम्, शून्यः निर्व्यापारः, असि वर्तसे, इति अयं, कः नयः नीतिः (न

क्वापि नीतिरियम् ? )। राजनीतिरहस्यबोधकानीमानि सर्वाण्येव सूर्पणखापद्यानि ध्वनि-व्यञ्जकानि। साभिप्रायविशेषणतया परिकरालङ्कारः।

कोशः—'बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः।' 'कार्तिकेयो महासेनः शरजन्मा षडाननः। षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः'—इत्यमरः।

समासः—बृहस्पतिः पुरोधा यस्य सः, तेनेति। कुमारः सेनानीर्यस्य सः तेनेति। उभयत्र बहुव्रीहिः। सार्धम् इति योगे 'सहयुक्तेऽप्रधाने २।३।१९' इति शक्रेणेत्यत्र तृतीया। सुदि-वदि-शब्दवत् शक्रशब्दोऽपि शतक्रतुशब्दयोराद्याक्षराभ्यां गृहीतोऽस्ति।

कृदन्तः—सेनां नयतीति विग्रहे 'सत्सूद्विष० ३।२।६१' इति क्विपि सेनानी-शब्दो निष्पद्यते। नयनं नय इति नीधातोः 'श्रिणीभुवोऽनुपसर्गे ३।३।२४' इति घञि प्राप्तेऽपि बाहुलकाद् 'एरच् ३।३।५६' इति अचि गुणे, अयादेशे नयः।

तिङन्तः—अस् भुवि इति आदादिकस्य लटि 'तास्स्त्योर्लोपः ७।४।५०' इति सलोपे असीति रूपम्।

वाच्य०—विग्रहेण भूयते। त्वया शून्येन भूयते। केन नयेन भूयते॥ ७॥

शूर्पणखा तस्य नीतिवैमुख्यं प्रत्यक्षं दर्शयति—

यद्यहं नाथ ! नाऽऽयास्यं वि-नासा हत-बान्धवा।
नाऽज्ञास्यस् त्वमिदं सर्वं प्रमाद्यंश् चार-दुर्बलः॥ ८॥

अन्वयः—हे नाथ ! विनासा हतबान्धवा अहं यदि न आयास्यम्, प्रमाद्यन् चारदुर्बलः त्वम् इदं सर्वं न अज्ञास्यः।

हिन्दी—हे राजन् जिसकी नाक काट ली गयी है, भाई-बन्धु मार डाले गये हैं, ऐसी मैं यदि नहीं आई होती तो स्वयं प्रमादी और गुप्तचरोंके अभावमें तुम ये सब नहीं जान सकते थे।

व्याख्या—हे नाथ हे स्वामिन् ! विनासा छिन्ननासिका, हतबान्धवा व्यापादित-बन्धुः, अहम् शूर्पणखा, यदि चेन्न नहि, आयास्यम् आगमिष्यम्, (तदा) प्रमाद्यन् प्रमादं कुर्वन्, चारदुर्बलः गुप्तचररहितः, त्वम्, इदं यथोक्तं, सर्वं सफलं वृत्तं, न नहि, अज्ञास्यः अभीन्स्यथाः। अज्ञाने चारदुर्बलादिहेतूक्त्या काव्यलिङ्गालङ्कारः।

कोशः—'घोणा नासा च नासिका'। 'यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः'। 'चारश्च गूढपुरुषः'—इत्यमरः।

समासः—विगता नासा यस्याः सा विनासा। नात्र नासिकाशब्दः। अतोऽत्र 'अङ्नासिकायाः० ५।४।११८' इत्यादिप्रपञ्चस्य प्रसंग एव नास्ति। विनसा हतबान्ध-

येति पाठान्तरे तु विगता चासौ नासिकेति कर्मधारये विनासिकाशब्दस्य तृतीं कचवने 'पद्दन्नो० ६।१।६३' इति नसादेशे विगतया नासिकया उपलक्षितेत्यर्थं हता बान्धवा यस्याः सा। चारैर्दुर्बलः इति तृतीयातत्पुरुषः।

तिङन्तः—आयास्यम्–आङ्पूर्वकात् याधातोः 'लिङ्निमित्ते लृङ् क्रियातिप ३।३।१३९' इति लृङि रूपम्। एवमज्ञास्यः इत्यपि ज्ञेयम्।

वाच्यपरिवर्तनम्—मया न आयास्यत, त्वया न अज्ञास्यत॥ ८॥

तस्याकर्मण्यतां सा निर्दिशति—

करिष्यमाणं विज्ञेयं कार्यं, किं नु कृतं परैः।
अपकारे कृतेऽप्यज्ञो विजिगीषुर्न वा भवान्॥ ९॥

अन्वयः—परैः करिष्यमाणं कार्य्यं ( विजिगीषुणा ) विज्ञेयं, कृतं किं ( परैः ) अपकारे कृते अपि अज्ञः, भवान् विजिगीषुः न वा।

हिन्दी—विजिगीषुको तो शत्रुओंके आगे किये जाने वाले कार्य्यको जा लेना चाहिये। किये गये कार्य्यका तो क्या कहना है? अपकार करने पर तो आप उसे नहीं जानते, अतः आप विजिगीषु ही नहीं हैं।

व्याख्या—परैः अभि-[illegible]तिभिः, करिष्यमाणं विधास्यमानं, कार्य्यं कर्तव्य विज्ञेयं ज्ञातव्यम् (विजिग[illegible]गा)। कृतम् अनुष्ठितं कर्म, किं नु तत्र किं वक्तव्यम् अपकारे द्रोहे, कृते सम्पादिते अपि ( अरिभिरिति शेषः ), अज्ञः अनभिज्ञ भवान्, विजिगीषुः जयेच्छुः, न वा नैवास्ति। अत्र वा निश्चये। काकुध्वनिरत्र

कोशः—'अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः'—इत्यमरः।

समासः—परैः करिष्यमाणम्: इह कर्मणि शानचि कृते कर्तुः अनुक्तत्वा 'कर्तृकरणयोस्तृतीया २।३।१८' इति तृतीया। एवं विजिगीषुः इत्यत्र कर्त उप्रत्यये कर्तुः उक्तत्वात् प्रथमा प्रातिपदिकार्थे। न ज्ञः अज्ञः इत्यत्र नञ्सम 'नलोपो नञः ६।३।७३' इति नलोपः।

कृदन्तः—कृञ्धातोः कर्मणि 'लृटः सद्वा ३।३।१४' इति 'तौ सत् ३।२।१२ इति सत्संज्ञके शानचि, 'स्यसिच्० ६।४।६२' इति पाक्षिके चिण्वदिडभा 'ऋद्धनोः स्ये ७।२।७०' इति—आर्द्धधातुके इटि 'आने मुक् ७।२।८२' इ मुगागमे, णत्वे, क्लीबे करिष्यमाणम्। कृधातोः 'ऋहलोर्ण्यत् ३।१।१२४' इ ण्यति क्लीबे कार्य्यम्। विपूर्वकात् ज्ञाधातोः 'अचो यत् ३।१।९७' इति य 'ईद्यति ६।४।६५' इति ईत्वे, गुणे–विज्ञेयम्। विपूर्वकात् जिधातोः सन्नन्ता 'सनाशंसभिक्ष उः ३।२।१६८' इति उप्रत्यये विजिगीषुः।

वाच्यपरिवर्तनम्—अज्ञेन भवता विजिगीषुणा भूयते न वा ॥ ९ ॥

शूर्पणखा तस्याज्ञतां प्रत्यक्षयति—

वृतस्त्वं पात्रेसमितैः खट्वाऽऽरूढः प्रमादवान् ।
पान शौण्डः श्रियं नेता नाऽत्यन्तीनत्वमुन्मनाः ॥ १० ॥

अन्वयः—पात्रेसमितैः वृतः खट्वारूढः प्रमादवान् पानशौण्डः उन्मनाः त्वम् श्रियम् अत्यन्तीनत्वं न नेता ।

हिन्दी—भोजनके समयमें ही जुटनेवालोंसे घिरा हुआ, खटिया पर बैठा हुआ, कुमार्गी, प्रमादी, मद्यपानका व्यसनी, उन्मादी तू राजलक्ष्मीको सदा नहीं रख सकेगा ।

व्याख्या—पात्रेसमितैः भोजनसमयमात्रसङ्गैः, वृतः वेष्टितः, खट्वारूढः उत्पथप्रस्थितः, प्रमादवान् प्रमादी, पानशौण्डः मद्यपानव्यसनी, उन्मनाः उन्मादी, त्वम् रावणः, श्रियं राजलक्ष्मीम्, अत्यन्तीनत्वं सदास्थायिनीत्वं, न नहि, नेता प्रापयिता (इति मन्येऽहमिति शेषः) । लक्ष्म्या अपवाहहेतूक्त्या काव्यलिङ्गमलङ्कारः ।

कोशः—'प्रमादोऽनवधानता' । 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः ।

समासः—पात्रे एव समिता इति विग्रहे क्षेपार्थे 'पात्रेसमितादयश्च २।१।२८' इति समासः । खट्वामारूढ इति विग्रहे 'खट्वा क्षेपे २।१।२६' इति समासः । पाने शौण्डः इति विग्रहे 'सप्तमी शौण्डैः २।१।४०' इति समासः । उत् उत्कं मनो यस्येति विग्रहे बहुव्रीहिः ।

तद्धितः—अत्यन्तं गामिनीति विग्रहे—'अवारपारात्यन्तानुकामंगामी ५।२।११' इति खे, तस्येनादेशे टापि, ततः 'तस्य भावस्त्वतलौ ५।१।११९' इति त्वे, 'त्वे च ६।३।६४' इति ह्रस्वे अत्यन्तीनत्वम् ।

तिङन्तः—णीञ् प्रापणे इति धातोः 'अनद्यतने लुट् ३।३।१५' इति लुटि नेता । तद्योगे 'कर्तुरीप्सिततमं कर्म १।४।४९' श्रियः कर्मत्वे, 'अकथितं च १।४।५१' इति अत्यन्तीनत्वस्य कर्मत्वे 'कर्मणि द्वितीया २।३।२' इत्युभयत्रापि द्वितीया । नात्र तृन् प्रत्ययः ।

वाच्यपरिवर्तनम्—वृतेन खट्वारूढेन प्रमादवता पानशौण्डेन उन्मनसा त्वया श्रीः अत्यन्तीनत्वं नायिता ॥ १० ॥

भूयोऽन्यथापि तमुद्दीपयति सा—

अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान् ।
अन्तं महेन्द्रियं भागमैति दुश्च्यवनोऽधुना ॥ ११ ॥

अन्वयः—अधुना दुश्च्यवनः महेन्द्रियं भागम् अत्तुम् अग्निचित्वत्सु, अध्वरेषु सोमसुत्वत आश्रमान् ऐति ।

हिन्दी—आज कल इन्द्र अपने यज्ञीय भागको खानेके लिए आहिताग्नियोंसे युक्त यज्ञोंमें, सोमयाजियोंसे युक्त ऋषि-आश्रमोंको ( निधड़क ) आता है ।

व्याख्या—अधुना सम्प्रति, दुश्च्यवनः तुराषाट्, महेन्द्रियम् ऐन्द्रं, भागम् अंशम्, अत्तुम् भोक्तुम्, अग्निचित्वत्सु अग्निहोत्रिमत्सु, अध्वरेषु यागेषु, सोमसुत्वतः सोमयाजिमतः, आश्रमान् ऋषितपोवनानि, ( निर्भयम् ) ऐति आगच्छति ।

कोशः—'संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।'

'एर्तीह सम्प्रतीदानीमधुना साम्प्रतं तथा'—इत्यमरः ।

तद्धितः—महेन्द्रो देवता यस्येति विग्रहे 'महेन्द्राद् घाणौ च ४।२।२९' इति घे, तस्य इयादेशे महेन्द्रियमिति। सोमसुतः सन्ति यत्र ते सोमसुत्वन्तः, तान् इत्यत्र 'तदस्यास्त्यस्मिन् इति मतुप् ५।२।९४' इति मतुपि, 'तसौ मत्वर्थे १।४।१९' इति भत्वे, जश्त्वाभावे 'झयः ८।२।१०' इति मस्य वत्वे । एवम् अग्निचित्वत्सु इत्यपि ज्ञेयम् । अधुनेत्यत्र तु इदम् शब्दात् 'अधुना ५।३।१७' इति निपातनाद् अव्ययत्वम् ।

कृदन्तः—सोमं सुन्वन्तीति विग्रहे 'सोमे सुञः ३।२।९०' इत्यनेन—क्विप् । अग्निं चिन्वन्ति इति विग्रहे 'अग्नौ चेः ३।२।९१' इति क्विप् । 'ह्रस्वस्य पिति कृति तुक् ६।१।७१' इति उभयत्रापि तुग् ज्ञेयः ।

तिङन्तः—इण् गतौ इति धातोः आङ्पूर्वात् लटि आ+एति इति स्थितौ 'एङि पररूपम् ६।१।९४' इति प्राप्तं पररूपमपोद्य 'एत्येधत्यूठ्सु ६।१।८९' इति वृद्धौ ऐति ।

वाच्यपरिवर्तनम्—दुश्च्यवनेन सोमसुत्वन्त आश्रमा एयन्ते ॥ ११ ॥

शूर्पणखा शक्रभागोपभोगे निर्विघ्नतामेव समर्थयति—

✓ आमिक्षीयं दधि-क्षीरं पौरोडाश्यं तथौषधम् ।
हविर् हैयङ्गवीनं च नाऽप्युपघ्नन्ति राक्षसाः ॥ १२ ॥

अन्वयः—राक्षसाः आमिक्षीयं दधिक्षीरं तथा पौरोडाश्यम् औषधम् हैयङ्गवीनं हविश्च न उपघ्नन्ति ।

हिन्दी—राक्षस आमिक्षाके लिये दूध दहीको तथा पुरोडाशके लिये लाए गेहूँ आदिको, औषधियोंको, मक्खन आदि हविष् पदार्थोंको विगाड़ते नहीं हैं ।

व्याख्या—राक्षसा रात्रिञ्चराः, आमिक्षीयम् आमिक्षार्थं, दधिक्षीरं दधिदुग्धम्, तथा तद्वत्, पौरोडाश्यं पुरोडाशार्थम्, औषधम् ओषधिजम् गोधूमादिकम्, हैयङ्गवीनं घृतम्, हविः हवनीयं द्रव्यमिदं त्रिविधम्, न नहि, उपघ्नन्ति विगुणयन्ति। शत्रुप्राबल्यं ध्वनिः।

कोशः—'फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः। ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः।' 'आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः'—इत्यमरः।

समासः—दधि च क्षीरं चेति द्वन्द्वे 'विभाषा वृक्ष० २।४।१२' इति एकवद्भावे दधिक्षीरम्।

तद्धितान्तः—आमिक्षायै हितम् इति विग्रहे 'विभाषा हविरपूपादिभ्यः ५।१।४' इति छे, तस्येयादेशे, आलोपे आमिक्षीयम्। ओषधिरेवौषधमित्यर्थे 'ओषधेरजातौ ५।२।३७' इति स्वार्थिके अणि, आदिवृद्धौ, भत्वादिकारलोपे औषधम्। 'स्वार्थिका लिङ्गवचनान्यतिवर्तन्ते' इति क्लीबता। ह्योगोदोहस्य विकार इत्यर्थे 'हैयङ्गवीनं संज्ञायाम् ५।२।२३' इति निपातनात् खञि हियङ्गु इत्यादेशे, खस्येनादेशे, 'ओर्गुणः ६।४।१४६' इति गुणेऽवादेशे, आदिवृद्धौ हैयङ्गवीनम्।

तिङन्तः—उपपूर्वात् हन्धातोर्लटो बहुत्वे 'गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८' इत्यल्लोपे 'हो हन्तेर्ञ्णिन्नेषु ७।३।५४' इति कुत्वम्।

वाच्यपरिवर्तनम्—आमिक्षीयं दधिक्षीरं पौरोडाश्यम् औषधं हैयङ्गवीनं हविः राक्षसैर्न उपहन्यते॥ १२॥

इदानीं कर्तव्यं प्रदर्शयन्ती प्रोत्साहयति—

युव-जानिर् धनुष्-पाणिर् भूमिष्ठः ख-विचारिणः।
रामो यज्ञ-द्रुहो हन्ति काल-कल्प-शिलीमुखः॥ १३॥

अन्वयः—युवजानिः धनुष्पाणिः भूमिष्ठः कालकल्पशिलीमुखः रामः खविचारिणः यज्ञद्रुहः हन्ति।

हिन्दी—युवती स्त्रीवाला, धनुर्धारी, पृथ्वीपर विचरण करनेवाला राम, यमराज के सदृश बाणोंसे आकाशमें विचरण करनेवाले यज्ञद्रोहियोंको मार डालता है।

व्याख्या—युवजानिः तरुणभार्य्यः, धनुष्पाणिः चापधारी, भूमिष्ठः पादचारी, कालकल्पशिलीमुखः अन्तकोपमबाणयुतः, रामः राघवः, खविचारिणः आकाशगान्, यज्ञद्रुहः यागविध्वंसिनः राक्षसानित्यर्थः, हन्ति व्यापादयति।

कोशः—'अलिबाणौ शिलीमुखौ' इत्यमरः।

समासः—युवतिः जाया यस्येति बहुव्रीहौ 'स्त्रियाः पुंवद्भाषित० ६।३।३४'

इति पुंवद्भावे 'जायाया निङ् ५।४।१३४' निङादेशे, यलोपे युवजानिः । धनुः पाणौ यस्येति समासे विभक्तेर्लुकि 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः २।२।३' इति वार्तिकबलात्पाणिशब्दस्य परनिपाते, 'नित्यं समासेऽनुत्तरपदस्थस्य ८।३।४' इति धनुषः नित्यं षत्वे धनुष्पाणिः ।

तद्धितः—कालेन तुल्याः कालकल्पा इति विग्रहे 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५।३।६७' इति कल्पप् । कालकल्पाः शिलीमुखाः यस्यासौ कालकल्पशिलीमुखः इति बहुव्रीहिः ।

कृदन्तः—भूमौ तिष्ठतीति विग्रहे 'सुपि स्थः ३।२।४' इति कप्रत्यये 'आतो लोप इटि च ५।४।६४' इति आलोपे, 'अम्बाम्ब० ८।३।९७' इति षत्वे भूमिष्ठः । खे विचरन्ति तच्छीला इति खविचारिणः । 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति णिनिः, 'अत उपधायाः ७।२।११६' इत्युपधावृद्धौ शसि रूपम् ।

वाच्यपरिवर्तनम्—युवजानिना धनुष्पाणिना कालकल्पशिलीमुखेन रामेण खविचारिणो यज्ञद्रुहो हन्यन्ते ॥ १३ ॥

हेत्वन्तरेण तथैवोद्दीपयति शूर्पणखा—

मांसान्योष्ठावलोप्यानि सावनीयानि देवताः ।
अश्नन्ति, रामाद् रक्षांसि बिभ्यत्यश्नुवते दिशः ॥ १४ ॥

अन्वयः—देवताः सावनीयानि ( पाठान्तरे साधनीयानि ) ओष्ठावलोप्यानि मांसानि अश्नन्ति, रामाद् बिभ्यति रक्षांसि दिशः अश्नुवते ।

हिन्दी—देवतागण तो यज्ञके लिये हितकारी ( या पाठान्तरमें यज्ञसाधनमें हितकारी) अत्यन्त कोमल पदार्थोंको खा रहे हैं। रामसे डरते हुए राक्षस (इधर उधर भागकर जान बचाते हैं ) दिशाओंमें छिपे रहते हैं ।

व्याख्या—देवताः वृन्दारकाः, सावनीयानि यज्ञीयानि ( पाठान्तरे साधनीयानि यज्ञसाधनहितानि ), ओष्ठावलोप्यानि रदनच्छदच्छेदार्हाणि ( अतिकोमलानीत्यर्थः), मांसानि भोज्यद्रव्याणि, न तु पललानि, यज्ञे मांसानुपादानात् अहिंसकत्वात् तस्य राक्षसीमुखात् तादृशाभिधानात् ) अश्नुवन्ति भुञ्जते । रामाद् राघवात्, बिभ्यति त्रस्यन्ति, रक्षांसि निशाचराः, दिशः काष्ठाः, अश्नुवते व्याप्नुवन्ति ( दिक्षु पलाय्य विलीयन्त इत्यर्थः ) ।

कोशः—'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।'
'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी'—इत्यमरः ।

समासः—ओष्ठाभ्याम् अवलोप्यानि 'कर्तृकरणे कृता बहुलम् २।१।३२'

समासः ओष्ठावलोप्यानि । रामादित्यत्र 'भीत्रार्थानां भयहेतुः १।४।२५' इति अपादाने पञ्चमी ।

तद्धितः—सावनो यज्ञः तस्मै सावनाय हितानि 'तस्मै हितम् ५।१।५' इति छप्रत्ययः । पाठान्तरे साधनाय हितानि इति तथैव छप्रत्ययः ।

कृदन्तः—ञिभी भये इति धातोः पूर्ववत् शतरि बिभ्यत् शब्दात् क्लीबे 'उगिदचां सर्व० ७।१।७०' इति प्राप्तस्य नुमः 'वा नपुंसकस्य ७।१।७९' इति निषेधपक्षे रूपम् । रक्षांसि इत्यत्र 'नपुंसकस्य झलचः ७।१।७२' इति नुम् ।

तिङन्तः—अशूङ् व्याप्तौ संघाते च इति धातोः 'स्वादिभ्यः श्नुः ३।१।७३' इति श्नुविकरणे 'अचिश्नुधातुभ्रुवां० ६।४।७०' इति यणोऽपवादे उवङि अश्नुवते ।

वाच्यपरिवर्तनम्—देवताभिः मांसानि ( भोज्यानि ) अश्यन्ते । बिभ्यद्भिः रक्षोभिः दिशः अश्यन्ते ॥ १४ ॥

पूर्वं रावणदोषानुद्घाट्य सम्प्रत्यपि कर्तव्यमेवोपदिशति—

कुरु बुद्धिं कुशाऽग्रीयामनुकामीनतां त्यज ।
लक्ष्मीं परम्परीणां त्वं पुत्र-पौत्रीणतां नय ॥ १५ ॥

अन्वयः—त्वं बुद्धिं कुशाग्रीयां कुरु । अनुकामीनतां त्यज । परम्परीणां लक्ष्मीं पुत्रपौत्रीणतां नय ।

हिन्दी—तुम बुद्धिको सूक्ष्म करो, यथेच्छाचारीपनको छोड़ो । परम्परासे आती हुई राजलक्ष्मीको पुत्रपौत्रोंतक जाने वाली बनाओ ।

व्याख्या—त्वम् हे रावण, बुद्धिं मतिम्, कुशाग्रीयां सूक्ष्मां, कुरु विधेहि । अनुकामीनताम् यथेच्छाचारितां, त्यज अपाकुरु । परम्परीणां क्रमायातां, लक्ष्मीं राज्यश्रियं, पुत्रपौत्रीणतां पुत्रपौत्रानुगामिनीम्, नय प्रापय ।

कोशः—'स्मृतिर्व्यतीतविषया मतिरागामिगोचरा ।
बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकाल्यगोचरा'—इति कोशः ।

तद्धितः—कुशाग्रमिवेत्यर्थे 'कुशाग्राच्छः ५।३।१०५' इति छे, तस्येयादेशे कुशाग्रीया, ताम् । अनुकामं गामीत्यर्थे 'अवारपारात्यन्तानुकामंगामी ५।२।११' इति खे, तस्येनादेशे, तलि, टापि अनुकामीनता । पुत्रपौत्राननुभवति इत्यर्थे 'परावरपरम्परपुत्रपौत्रमनुभवति ५।२।१०' इति खे, ईनादेशे, णत्वे, पुत्रपौत्रीणशब्दात् तलि, टापि, पुत्रपौत्रीणताम् । परांश्च परतरांश्च अनुभवतीति विग्रहे तथैव खे, ईनादेशे, परपरतरशब्दस्य च परम्परनिपाते परम्परीणशब्दाट्टापि परम्परीणाम् ।

वाच्यपरिवर्तनम्—त्वया बुद्धिः कुशाग्रीया क्रियताम् । अनुकामीनता त्यज्यताम् । परम्परीणा लक्ष्मीः पुत्रपौत्रीणता नीयताम् ॥ १५ ॥

श्रियं चञ्चलत्वेन निन्दति—

सहायवन्त उद्युक्ता बहवो निपुणाश्च याम् ।
श्रियमाशासते, लोलां तां हस्तेकृत्य मा श्वसीः ॥ १६ ॥

अन्वयः—सहायवन्तः उद्युक्ताः निपुणाः बहवः यां लोलां श्रियम् आशासते तां हस्तेकृत्य ( अपि ) मा श्वसीः ।

हिन्दी—सहायवाले उद्योगी चतुर बहुतसे लोग जिस चञ्चल राजलक्ष्मीकी आशा रखते हैं, उसे हाथमें करके भी विश्वस्त मत रहो ।

व्याख्या—सहायवन्तः ससहायाः, उद्युक्ता उत्साहिताः, निपुणाः कुशलाः, बहवः भूयांसः, यां लोलां स्वभावचञ्चलाम्, श्रियं राजलक्ष्मीम्, आशासते कामयन्ते, तां स्वभावतोऽस्थिराम्, हस्तेकृत्य स्वायत्तीकृत्यापि, मा श्वसीः विश्वासं मा कार्षीः, जागरूको भवेः । अविश्वास्या लक्ष्मीरिति ध्वनिः ।

कोशः—'सम्पत्तिः श्रीश्च लक्ष्मीश्च' इत्यमरः ।

समासः—हस्ते कृत्वेति विग्रहे 'नित्यं हस्ते पाणावुपयमने २।४।७७' इति हस्ते इत्यस्य गतिसंज्ञायाम् 'कुगतिप्रादयः २।२।१८' इति समासे 'तत्पुरुषे कृति बहुलम् ६।३।१४' इति सप्तम्या अलुकि 'समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७' इति ल्यवादेशे हस्तेकृत्य ।

तद्धितः—सहायाः सन्ति एषामिति विग्रहे 'तदस्यास्त्यस्मिन्निति मतुप् ५।२।९४' इति मतुप् सहायवन्तः ।

तिङन्तः—श्वस प्राणने इति धातोः लुङि हलन्तलक्षणाया वृद्धेः 'नेटि ७।२।४' इति निषेधे 'अतो हलादेर्लघोः ७।२।७' इति प्राप्ताया 'ह्म्यन्त० ७।२।५' इति निषेधे, अडागमस्य 'न माङ्योगे ६।४।७४' इति निषेधे श्वसीः ।

वाच्य०—बहुभिः सहायवद्भिरित्यादि लोला या श्रीः आशास्यते सा मा श्वासि।

शिक्षा—लक्ष्मीः स्वभावतोऽस्थिरेति न कदापि विश्वस्येति शिक्षयति ॥ १६ ॥

लक्ष्मीस्वभावमेव स्फुटं विवृणोति—

लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात् ।
अन्तिकेऽपि स्थिता पत्युश्छलेनाऽन्यं निरीक्षते ॥ १७ ॥



अन्वयः—कुलटा इव कुतूहलात् पुंयोगम् आशंसुः लक्ष्मीः पत्युः अन्तिके अपि स्थिता छलेन अन्यं निरीक्षते ( ईदृशी सा चञ्चलेति जानीहि ) ।

हिन्दी—पुंश्चली स्त्रीके समान कुतूहलवश पुरुषसंसर्ग चाहनेवाली लक्ष्मी पतिके पासमें भी रहती हुई छलसे दूसरेको ताकती रहती है।

व्याख्या—कुलटा व्यभिचारीणी, इव यथा, कुतुहलात् कौतुकात्, पुंयोगं पुरुषसम्पर्कम्, आशंसुः अभिलाषुका, लक्ष्मीः श्रीः, पत्युः भर्तुः, अन्तिके निकटे, अपि, स्थिता उपविष्टा, छलेन छद्मना, अन्यम् अपरं, निरीक्षते आलोकयति। श्रीः अतिचञ्चलेत्यर्थः।

कोशः—'कौतूहलं कौतुकं च कुतुकं च कुतूहलम्'—इत्यमरः।

कृदन्तः—लक्ष दर्शनाङ्कनयोः इति धातोः 'लक्षेर्मुट् च' इत्यौणादिक ईप्रत्ययस्तत्सन्नियोगेन मुडागमे लक्ष्मीशब्दसिद्धेर्नात्र ङीप् इति न सुलोपः। कुलं कुलम् अटतीति पचाद्यचि, टापि, 'शकन्ध्वादिषु पररूपं वाच्यम्' इति टेः पररूपे कुलटाशब्दसिद्धिः। पुंयोगमत्र। आशसुः इति उ—प्रत्ययान्तकृद्योगे 'नलोकाव्यय-निष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधः।

वाच्य०—कुलटयेव पुंयोगमाशंसवा लक्ष्म्या स्थितया अन्यो निरीक्ष्यते।

शिक्षा—अये रावण! लक्ष्मीः अति चञ्चला। साद्य ते पार्श्वे श्व एषान्यपार्श्वे गन्त्रीति प्रमादं त्यक्त्वोत्तिष्ठेत्युपदिशति कविः स्वपाठकेभ्यः शूर्पणखामुखेन॥ १७॥

सम्प्रति, रामजायाप्रशंसया तद्धरणोपदेशमिषेण समुद्दीपयति—

योषिद्वृन्दारिका यस्य दयिता हंस-गामिनी।
दूर्वाकाण्डमिव श्यामा न्यग्रोध-परिमण्डला॥ १८॥

अन्वयः—तस्य दयिता योषिद्वृन्दारिका हंसगामिनी दूर्वाकाण्डम् इव श्यामा न्यग्रोधपरिमण्डला अस्ति।

हिन्दी—उसकी प्रिया स्त्रियोंमें श्रेष्ठ हंसके समान गतिवाली, दूर्वाकाण्डकी तरह श्यामवर्णकी तथा वट-वृक्षके समान परिमण्डलाकार है।

व्याख्या—तस्य रामस्य, दयिता वल्लभा, योषिद्वृन्दारिका स्त्रीश्रेष्ठा, हंस-गामिनी चक्राङ्गगतिशीला, दूर्वाकाण्डम् इव अनन्तास्तम्बवत्, श्यामा श्यामवर्णा, न्यग्रोधपरिमण्डला वटवृक्षमण्डलाकारा, वर्तुलेत्यर्थः। अथवा 'स्तनौ सुकठिनौ यस्या नितम्बे च विशालता। मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डला' इति लक्षणवती अस्ति।

कोशः—'दूर्वा तु शतपर्विका।'

'सहस्रवीर्याभार्गव्यौ रुहाऽनन्ताऽथ सार्ऽसिता'—इत्यमरः।



समासः—योषिच्च सा वृन्दारिकेति विग्रहे 'वृन्दारकनागकुञ्जरैः पूज्यमानम्

२।१।६२' इति 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषा-साहाय्येन समासः । न्यग्रोध इव परिमण्डलेति विग्रहे 'उपमानानि सामान्यवचनैः २।१।५५' इति समासः ।

तद्धितान्तः—वृन्दं गुणवृन्दम् अस्ति अस्याः इति विग्रहे 'शृङ्गवृन्दाभ्यामारकन्' इति आरकन् प्रत्यये, टापि, 'प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः ७।३।४४' इति इत्वे वृन्दारिका ।

कृदन्तः—हंस इव गच्छतीति तच्छीलेति विगृह्य 'कर्तर्युपमाने ३।२।७९' इति णिनिः, ङीपि हंसगामिनीति ।

वाच्यपरिवर्तनम्—योषिद्वृन्दारिकयेत्यादि सर्वत्र तृतीयान्तं कृत्वा भूयते इति वाच्यम् ॥ १८ ॥

भूयस्तां प्रशंसति हारयितुकामा—

नाऽऽस्यं पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा ।
संशृणोति न चोक्तानि, मिथ्याऽऽसौ विहितेन्द्रियः ॥ १९ ॥

अन्वयः—यः तस्या आस्यं न पश्यति, न वा तस्या दन्तछन्दं निंस्ते, तस्या उक्तानि च न संशृणोति—असौ मिथ्याविहितेन्द्रियः ।

हिन्दी—जो उसका मुख नहीं देखता, उसका ओठ नहीं चूमता, उसकी बातोंको नहीं सुनता—उसकी इन्द्रियां व्यर्थ ही बनायी गई हैं ।

व्याख्या— यः पुरुषः, तस्याः रामप्रियायाः, आस्यं मुखं, न नहि, पश्यति निरीक्षते, तस्या दन्तच्छदम् अधरं, न वा अथवा, न नहि, निंस्ते चुम्बति, उक्तानि भाषितानि च, न नहि, संशृणोति आकर्णयति, असौ तादृशः पुरुषः, मिथ्या वृथैव, विहितेन्द्रियः सम्पादितकरणः ।

कोशः—'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' ।

समासः—दन्तानां छदः, तम्, इति षष्ठीतत्पुरुषः । विहितानि इन्द्रियाणि यस्येति बहुव्रीहिः ।

तिङन्तः—दृशिर् प्रेक्षणे इति भौवादिकाद्धातोः लटि, शपि, 'पाघ्राध्मा० ७।३।७८' इति पश्यादेशे पश्यति । णिसि चुम्बने इति आदादिकस्यात्मनेपदे 'इदितो नुम् धातोः ७।१।५८' इति नुमि, अनुस्वारे निंस्ते । श्रु श्रवणे इति भौवादिकस्य 'श्रुवः शृ च ३।१।७४' इति श्नुप्रत्यये श्रुवश्च शृ इत्यादेशः । आत्मनेपदाभावस्तु 'अकर्मकाच्च १।३।२६' इत्यधिकारात्

कृदन्तः—दन्ताश्छाद्यन्तेऽनेनेति विग्रहे छादेः 'पुंसि संज्ञायां घः प्रायेण ३।३।११८' इति घे 'छादेर्घेऽद्व्युपसर्गस्य ६।४।९६' इति धातोर्ह्रस्वे दन्तच्छदः।

वाच्यपरिवर्तनम्—येन आस्यं न दृश्यते, दन्तच्छदो न निश्यते, उक्तानि न संश्रूयन्ते, अमुना मिथ्या विहितेन्द्रियेण भूयते ।। १९ ।।

भूयो भूयो रामप्रियाप्रशंसया तद्धरणार्थमेवोद्दीपयति तम्—

सारोऽसाविन्द्रियाऽर्थानां यस्याऽसौ तस्य नन्दथुः।
तल्पे कान्ताऽन्तरैः सार्धं मन्येऽहं धिङ् निमज्जथुम् ॥ २० ॥

अन्वयः—असौ इन्द्रियार्थानां सारः, यस्य असौ तस्य आनन्दथुः, कान्तान्तरैः सार्धं तल्पे निमज्जथुम् धिक् ( इति ) अहं मन्ये।

हिन्दी—वह ( रामप्रिया ) इन्द्रियार्थोंका ( रूपसौन्दर्य आदिका ) सार है। वह जिसकी है उसीको आनन्द है। दूसरी प्रियाके साथ शय्या पर सोनेको तो मैं धिक्कार मानती हूँ।

व्याख्या—असौ रामदयिता, इन्द्रियार्थानां रूपसौन्दर्य्यादीनां, सारः स्थिरांशः। यस्य पुंसः, असौ रामदयिता ( अस्ति ), तस्यैव पुंसः, नन्दथुः आनन्दः। कान्तान्तरैः अन्यप्रियाभिः, सार्धं सह, तल्पे शय्यायाम्, निमज्जथुम् शयनम्, अहं शूर्पणखा, धिक् धिक्कारं, मन्ये जाने।

कोशः—( ५–३८ पद्ये दृश्यः )।

समासः—इन्द्रियाणाम् अर्थाः इन्द्रियार्थाः। अन्याः कान्ताः कान्तान्तराणि, तैः। 'मयूरव्यंसकादयश्च २।१।७२' इति समासे, अन्यशब्दस्यान्तरादेशः परनिपातश्च ज्ञेयः, नपुंसकत्वं निपातनात्। 'उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते'।। इति धिग्योगे निमज्जथुमित्यत्र द्वितीया।

कृदन्तः—स्थिरम् सरति चिरमित्यर्थे सृ-धातोः 'सृ स्थिरे ३।३।१७' इति घञि, वृद्धौ, 'घञजपाः पुंसि' इति पुंस्त्वम् सारः। नन्दथुः निमज्जथुम्-इत्युभयत्रापि टुणदि समृद्धौ, टुमस्जो शुद्धौ इति धातुभ्याम् 'ट्वितोऽथुच् ३।३।८९' इत्यथुचि पुंस्त्वम्।

वाच्यपरिवर्तनम्—अमुया सारेण भूयते। यस्यामुया भूयते तस्य नन्दथुना भूयते इति मन्यते मया ।। २० ।।

सम्प्रति साक्षात्तं प्रेरयति तां हर्तुम्—

न तं पश्यामि, यस्याऽसौ भवेन् नोद्वेजया मतेः।
त्रैलोक्येनाऽपि विन्दस् त्वं तां क्रीत्वा सुकृती भव ॥ २१ ॥

अन्वयः—( अहम् ) तं न पश्यामि यस्य मतेः असौ उदेजया न भवेत्, त्रैलोक्येन अपि तां क्रीत्वा विन्दः त्वं सुकृती भव ।

हिन्दी—मैं ऐसे पुरुषको नहीं देखती, जिसकी बुद्धिको वह विचलित न कर दे । तीनों लोक देकर भी उसे खरीदकर पानेवाले तुम कृतकृत्य हो जाओ ।

व्याख्या—अहं तं पुमांसं, न नहि, पश्यामि निरीक्षे, यस्य नरस्य, मतेः बुद्धेः, असौ सा रामप्रिया, उदेजया विचालिनी, न नहि, भवेत् स्यात् । त्रैलोक्येन त्रिभुवनेन, अपि संभावनायाम्, क्रीत्वा प्राप्य, विन्दः लब्धा, त्वं सुकृती पुण्यवान् ( कृतकृत्यो ) भव । इदं दुःशकुनमेव शूर्पणखामुखान्निर्गतं फलिष्यति । क्रयपे पूर्वपद्योक्तहेतूक्त्या वाक्यगतहेतुकं काव्यलिङ्गम् ।

कोशः—'धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ।'
'सुकृती पुण्यवान् धन्यः' इत्याद्यमरः ।

समासः—त्रयाणां लोकानां समाहार इति विगृह्य 'तद्धितार्थोत्तरपदसमाहारे च २।१।५१' इति समासे 'संख्यापूर्वो द्विगुः २।१।५२' इति द्विगुसंज्ञायाम्, 'द्विगोः ४।१।२१' इति ङीपि त्रिलोकीति ।

तद्धितः—त्रिलोकी एव त्रैलोक्यम् इति विग्रहे 'चतुर्वर्णादीनां स्वार्थे उपसंख्यानम् ५।१।१२४' इति वार्तिकेन स्वार्थे ष्यञि, 'तद्धितेष्वचामादेः ७।२।११७' इत्यादिवृद्धौ त्रैलोक्यम्, तेन ।

कृदन्तः—विन्दतीति विग्रहे—'अनुपसर्गाल्लिम्पविन्दधारि० ३।१।१३८' इति शे, 'शे मुचादीनाम् ७।१।५९' इति नुमि विन्दः । एवमेव उदेजयतीति उदेजया । पूर्ववत् शे, भ्वादित्वात् शपि, गुणादिना उदेजयशब्दाट्टापि उदेजया ।

तिङन्तः—भू सत्तायाम् इति धातोः 'लोट् च ३।३।१६२' इति विध्यर्थे लोटि, 'अतो हेः ६।४।१०५' इति हेः लुकि भवेति साधुः ।

वाच्यपरिवर्तनम्—अमुया उदेजयया न भूयते । स मया न दृश्यते । विन्देन सुकृतिना भूयताम् ।

शिक्षा—प्रत्यक्षमेव सीताहरणमुपदिश्य रावणमन्तयितुम् प्रेरयति तददृष्टम् 'विधिरहो बलवान् इति मे मतिः' इति हि शिक्षा ॥ २१ ॥

इदानीं सर्वाभ्यर्हितां तां दर्शयति शब्दतः—

नैवेन्द्राणी, न रुद्राणी, न मनावी, न रोहिणी ।
वरुणानी न स्वाहा च नागानी सदृशी सीमन्तिनी समा ॥ २२ ॥

अन्वयः—तस्याः समा नैव इन्द्राणी, न रुद्राणी, न मनावी, न रोहिणी, न वरुणानी, न अग्नायी सीमन्तिनी अस्ति—इति संक्षेपः ।

हिन्दी—उसके समान न इन्द्रकी स्त्री, न रुद्रकी स्त्री है, न मनुकी स्त्री है, न (चन्द्रकी) रोहिणी, न वरुणकी स्त्री है और न अग्निकी स्त्री सुन्दर है । (यहां सीमन्तिनी माने सुन्दरी स्त्री है) यही सूर्पणखाका संक्षेपसे कहना है ।

व्याख्या—तस्याः रामदयितायाः, समा तुल्या, न नहि, इन्द्रस्य स्त्री, न रुद्रस्य स्त्री, न मनोः स्त्री, न रोहिणी चन्द्रस्त्री, न नहि, अग्नायी अग्नेः स्त्री, कापि सीमन्तिनी सुन्दरी न अस्ति । 'तुल्यार्थैरतु० २।३।७१' इति समायोगे तस्या इति षष्ठी ।

कोशः—'स्त्री योषिदबला योषा, नारी सीमन्तिनी वधूः ।'

स्त्रीप्रत्ययान्तः—इन्द्राण्यादयः शब्दा 'इन्द्रवरुणभवशर्वरुद्रमृड० ४।१।४९' इत्यनेन आनुकि तत्संयोगेन 'पुंयोगादाख्यायाम् ४।१।४८' इत्यनेन ङीपि च सिध्यन्ति । 'मनोरौ वा ४।१।३८' इति ङीप्संनेयोगेन औकारे आवादेशे मनावी । अग्नायीति 'वृषाकप्यग्नि० ४।१।३०' इत्यनेनैकारे, तत्संयोगेन पूर्ववत् ङीपि आयादेशे च सिध्यति । रोहित—शब्दात् 'वर्णादनुदात्तात्तोपधात्तो नः ४।१।३९' इति ङीपि, नकारे च कृते रोहिणी ।

तद्धितः—प्रशस्तः सीमन्तः अस्या इति विग्रहे प्रशंसायाम् तदस्यास्त्यस्मिन्नित्यर्थे 'अत इनि–ठनौ ५।२।११५' इति इनि प्रत्यये ङीपि च सीमन्तिनी ।

वाच्यपरिवर्तनम्—इन्द्राण्या, रुद्राण्या, मनाव्या, रोहिण्या, वरुणान्या, अग्नाय्या समया सीमन्तिन्या न भूयते ॥ २२ ॥

सर्वं श्रुत्वा स्वात्मानं प्रशंसन् रावणस्तामुत्तरयति—

> प्रत्यूचे राक्षसेन्द्रस् ताम्–आश्वसिहि बिभेषि किम् ।
> त्यज नक्तञ्चरि ! क्षोभं, वाचाटे ! रावणो ह्यहम् ॥ २३ ॥

अन्वयः—राक्षसेन्द्रः ताम् प्रत्यूचे—हे नक्तञ्चरि ! आश्वसिहि । किं बिभेषि ? अयि वाचाटे ! क्षोभं त्यज, अहं हि रावणः ।

हिन्दी—राक्षसराजने उसको उत्तर दिया, अरे राक्षसि ! धीरज धरो, डरती क्यों हो ? बहुत बकने वाली, तू घबराहट छोड़ । मैं रावण हूँ ( इसका भी ख्याल करो ) ।



व्याख्या—राक्षसेन्द्रो रावणो धराधिपतिः, ताम् शूर्पणखां, प्रत्यूचे प्रतिजगाद । हे नक्तञ्चरि हे राक्षसि ! आश्वसिहि खेदं त्यज । अयि वाचाटे बहुभाषिणि,

मद्विषये, क्षोभं रोषं, त्यज मुञ्च। अहं हि वक्ता, रावणः लोक-रावणः यथार्थ नामास्मीति स्मर। परिकरालङ्कारध्वनी रावणोऽहमित्युक्त्या।

कोशः—'वाचाटो बहुगर्ह्यवाक्।' 'रात्रिश्चरो रात्रिचरः।'

समासः—राक्षसानामिन्द्रः राक्षसेन्द्रः। षष्ठीतत्पुरुषः।

कृदन्तः—नक्तं चरतीति विग्रहे 'चरेष्टः ३।२।१६' इति ट प्रत्यये, ततोऽजाद्य-तष्टापं प्रबाध्य 'टिड्ढाणञ्द्वयसज्० ४।१।१५' इति टित्वात् ङीपि, 'अम्बार्थनद्यो-र्ह्रस्वः ७।३।१०७' इति ह्रस्वः। रावयति लोकानिति विग्रहे रावीति ण्यन्तात् 'कृत्यल्युटो बहुलम् ३।३।११३' इति बाहुलकात् कर्तरि ल्युट् रावणः।

तिङन्तः—आपूर्वात् श्वस् धातोर्लोटि हि—प्रत्यये शपो लुकि 'रुदादिभ्यः सार्वधातुके ७।२।७६' इति इटि आश्वसिहि।

वाच्यपरिवर्तनम्—राक्षसेन्द्रेण सा प्रत्यूचे—त्वयाऽऽश्वस्यताम्, किं भीयते, क्षोभः त्यज्यताम्, मया रावणेन भूयते।

शिक्षा—"आत्मनाम गुरोर्नाम नामातिकृपणस्य च। श्रेयस्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोः"—इति स्वयं स्वनामग्रहणमनुचितं रावणः करोतीति ॥२३॥

शूर्पणखोक्तं शक्रविग्रहः, दृश्य स्वप्रशंसाप्रधानं पञ्चषपद्यवृन्दं वक्ति—

मामुपास्त दिदृक्षा-वान् याष्टीक-व्याहतो हरिः।
आज्ञा-लाभोन्मुखो दूरात् काक्षेणाऽनादरेक्षितः ॥ २४ ॥

अन्वयः—दिदृक्षावान् याष्टीकव्याहतः आज्ञालाभोन्मुखः दूरात् काक्षेण अनादरेक्षितः हरिः माम् उपास्त।

हिन्दी—मुझे देखनेकी इच्छा रखनेवाला द्वारपालसे रोके जाने पर भी आज्ञा पानेके लिये उत्कण्ठित होता हुआ भी, दूरसे ही कुदृष्टिसे अनादरपूर्वक देखा गया, इन्द्र मेरी उपासना करता था।

व्याख्या—दिदृक्षावान् दिदृक्षुः, याष्टीकव्याहतः द्वारपालनिषिद्धोऽपि आज्ञालाभोन्मुखः आदेशप्राप्त्युत्कण्ठितः, दूरात् विप्रकृष्टत एव, काक्षेण कुदृष्ट्या अप्रसन्नतयेति यावत्, मया अनादरेक्षितः तिरस्कारदृष्टः, हरिः इन्द्रः, मां राजानम्, उपास्त असेवत।

कोशः—( हरिशब्दः ५।८६ श्लोके द्रष्टव्यः ) 'अथाक्षमिन्द्रिये'।

समासः—याष्टीकेन व्याहतः 'कर्तृकरणे कृता बहुलम् २।१।३२' इति समासः। आज्ञाया लाभः, तस्मै उत्सुकः। न आदरः अनादरः, नञ्समासे 'तस्मान्नुडचि ६।३।७४' इति नुडागमे अनादरः, तेन ईक्षितः। कुत्सितम् अक्षम् इति विग्रहे

'कुगतिप्रादयः २।२।१८' इति समासे, 'कापथ्यक्षयोः ६।३।१०४' इति कुशब्दस्य कादेशः । सामान्यतः कादेशपक्षे कुत्सिते अक्षिणी यस्येति बहुव्रीहौ कुशब्दस्य कादेशे 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ५।४।११३' इति षचि, 'यस्येति च ६।४।१४८' इति इकारलोपे काक्ष-शब्दसिद्धिः । तदा काक्षेण मयेति रावण-विशेषणम् ।

तद्धितान्तः—यष्टिः प्रहरणमस्येति विग्रहे 'शक्तियष्टयोरीकक् ४।४।५९' इति ईकक्-प्रत्यये, आदिवृद्धौ, इकारलोपे याष्टीकः ।

तिङन्तः—उप-पूर्वात् आस उपवेशने इति धातोर्लङि, शपो लुकि, आडागमे उपास्त इति ।

वाच्यपरिवर्तनम्—दिदृक्षावता याष्टीकव्याहतेन आज्ञालाभोन्मुखेन अनादरे-क्षितेन हरिणा अहम् उपास्ये ।

शिक्षा—स्वयं स्वात्मप्रशंसको निन्द्यते । स्वात्मप्रशंसा गर्हितेति ॥ २४ ॥

रावणोऽग्रेऽपि तथैवात्मानं प्रशंसति—

विरुग्णो-दग्र-धाराऽग्रः कुलिशो मम वक्षसि ।
अ-भिन्नं शत-धाऽऽत्मानं मन्यते बलिनं बली ॥ २५ ॥

अन्वयः—मम वक्षसि विरुग्णोदग्रधाराग्रः अत एव बली कुलिशः शतधा अभिन्नम् आत्मानं बलिनं मन्यते ।

हिन्दी—मेरी छाती पर गिरकर भी केवल अग्रधारके मुड़जाने मात्रसे बली माना गया वज्र ( इन्द्रका ) सौ टुकड़े न हो जानेके कारण ही अपनेको मजबूत मानता है ।

व्याख्या—मम रावणस्य, वक्षसि उरसि, विरुग्णोदग्रधाराग्रः कुण्ठिततीक्ष्ण-मुखाग्रः, अत एव बली प्रबलः, कुलिशः पविः, शतधा अनेकधा, अभिन्नम् अभग्नम्, आत्मानम् स्वं, बलिनं प्रबलं, मन्यते स्वीकरोति । अतिबलित्वं रावणस्य ध्वन्यते । वज्रस्यातिबलित्वे धाराग्रकुण्ठाभिधानं हेतुरिति काव्यलिङ्गातिशयोक्तिसङ्करः ।

कोशः—'अस्त्रियां वज्रकुलिशौ' ।

समासः—धाराणाम् अग्राणि धाराग्राणि, विरुग्णानि उदग्राणि धाराग्राणि यस्य सः । तत्पुरुष गर्भो बहुव्रीहिः ।

तद्धितः—प्रशस्तं बलं यस्य स बली । बलशब्दात् 'अत इनि-ठनौ ५।२।११५' इति इनि बली । शतेन प्रकारेणेति विग्रहे 'संख्याया विधार्थे धा ५।३।४२' इति धा-प्रत्ययः, ततोऽव्ययत्वम् 'तद्धितश्चासर्वविभक्तिः १।१।३८' इति सूत्रेण ।

वाच्यपरिवर्तनम्—विरुग्णोदग्रधाराग्रेण वलिना कुलिशेन अभिन्नः आत्मा
ली मान्यते ॥ २५ ॥

रावणो भूय आत्मानं स्तौति—

कृत्वा लङ्काद्रुमाऽऽलानमहमैरावतं गजम् ।
बन्धनेऽनुपयोगि-त्वान् न तं तृण-वदत्यजम् ॥ २६ ॥

अन्वयः—अहम् ऐरावतं गजम् लङ्काद्रुमालानं कृत्वा ( अपि ) बन्धने
नुपयोगित्वात् तं तृणवत् न अत्यजम् किम् ? (इति जानास्येव) । अथवा न तं
णवत् अत्यजम् ।

हिन्दी—मैंने ऐरावत हाथीको लङ्काके पेड़ोंमें बाँधकर ( भी ) बाँधना व्यर्थ
मझकर नहीं छोड़ दिया ? ( यह तो तुम भी जानती हो )। या नम्र हुए उसे
गेड़ दिया ।

व्याख्या—अहम् रावणः, ऐरावतम् तन्नामानं ( शक्रीयम् ), गजं करिणम्,
ङ्काद्रुमालानम् स्वात्मपुरीद्रुबन्धनस्तम्भं, कृत्वा विधाय, बन्धने नियन्त्रणे,
नुपयोगित्वात् शून्यप्रयोजनत्वात्, तं यथाभूतम्, न नहि, अत्यजम् व्यसृजम्,
कम् ? अपि तु व्यसृजमेवेति काकुः । आहोस्वित् नतम् नम्रम्, अत एव अनुप-
ोगित्वात्, अत्यजम् इत्यन्वयोऽप्यूह्यः । 'नत'शब्दे भङ्गश्लेषः ।

कोशः—'मतङ्गजो गजो नागः कुञ्जरो वारणः करी ।'
'अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ॥'

समासः—लङ्काया द्रुमः, स एव आलानं यस्येति तत्पुरुषगर्भो बहुव्रीहिः । न
पयोगी अनुपयोगी, तस्य भावः अनुपयोगित्वम्, तस्मात् । नञ्गर्भः तद्धितान्तः ।

तद्धितः—इरा ( जलम् ) अस्यास्तीति विग्रहे मतुपि 'मतोर्वोऽयवादिभ्यः
।२।९' इति मस्य वत्वे इरावान् समुद्रः । तत्र भव इत्यर्थे अणि आदिवृद्धौ ऐरा-
तो गजः । तृणेन तुल्यमिति विग्रहे 'तेन तुल्यं क्रिया चेद्वतिः ५।१।११५' इति
ति-प्रत्यये ऽव्ययत्वम् ।

तिङन्तः—त्यज हानौ इति भौवादिकस्य लङि अडागमेऽत्यजम् ।

वाच्य०—मया तृणवत् सः अत्यज्यत । ( पक्षे ) नतः अत्यज्यत ॥ २६ ॥

तामेव स भूयः करोति—

आहोपुरुषिकां पश्य मम सद्-रत्नकान्ति-भिः ।
ध्वस्ताऽन्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥ २७ ॥

अन्वयः—मम आहोपुरुषिकां पश्य ( यत् ) सद्रत्नकान्तिभिः ध्वस्तान्धकारे
पि पुरे सदा पूर्णेन्दोः सन्निधिः ( अस्ति ) ।

हिन्दी—मेरी आहोपुरुषिका तो देखो (अहो यह कैसा प्रतापी पुरुष है ऐसी लोगोंमें जो प्रशंसा होती है, उसीको 'आहोपुरुषिका' कहते हैं ) कि अच्छे अच्छे रत्नोंकी कान्तियोंसे ही जब नगरका अन्धकार विलीन है, तो भी पूर्ण-चन्द्रका सान्निध्य बराबर ही रहता है।

व्याख्या—मम रावणस्य, आहोपुरुषिकाम्=अहो अयं महान् पुरुष इति प्रशंसाम्, पश्य विलोकय, ( यत्=यथा ) सद्रत्नकान्तिभिः महार्घमणिप्रभाभिः ध्वस्तान्धकारे विनष्टतमसि, अपि तथापि, पुरे नगरे, तथापि, पूर्णेन्दोः समग्रचन्द्रस्य, सदा नित्यम्, सन्निधिः सम्पर्कः, अस्तीति शेषः।

कोशः—'आहोपुरुषिका दर्पाद्या स्यात्सम्भावनात्मनि।'

'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः।'

समासः—अहो पुरुष इति यस्यां क्रियायां साऽऽहोपुरुषिका। 'मयूरव्यंसकादयश्च २।१।७२' इति समासे, मत्वर्थीयष्ठन् निपात्यते। ततोऽपि आदिवृद्धौ, टापि पुरुषिका, ताम्। अथवा अहोपुरुषस्य भाव इत्यर्थे 'द्वन्द्वमनोज्ञादिभ्यश्च ५।१।१३३' इति मनोज्ञादिगणे अहोपुरुषशब्दपाठाद् वुञि, 'आदिवृद्धौ, वोरकादेशे, टापि, 'प्रत्ययस्थात् कात् पूर्वस्यात् इदाप्यसुपः ७।३।४४' इति पुरुषाकारस्येत्वे आहोपुरुषिकाम्। कर्मणि द्वितीया। रत्नानां कान्तयः, ताभिः ध्वस्तः अन्धकारो यस्य तत्, तस्मिन्।

वाच्य०—आहोपुरुषिका दृश्यताम्, सन्निधिना भूयते ॥ २७ ॥

पुनरपि स्वात्मानं स्तौति सः—

> हृत-रत्नश् च्युतोद्योगो रक्षोभ्यः कर-दो दिवि।
> पूतक्रतायीमभ्येति स-त्रपः किं न गोत्र-भिद् ॥ २८ ॥

अन्वयः—हृतरत्नः च्युतोद्योगः रक्षोभ्यः करदः ( अत एव ) सत्रपः गोत्रभिद् दिवि पूतक्रतायीम् न अभ्येति किम्? स्वोत्कर्षं ध्वनयति।

हिन्दी—जिसके रत्न लूट लिये गये हैं, उद्योग व्यर्थ कर दिया गया है, जो राक्षसोंको कर ( राजकर ) देनेवाला ( पक्षमें हस्तालम्बन देनेवाला ) है—इसीलिये लज्जित वह इन्द्र शचीके पास नहीं जाता है क्या?

व्याख्या—हृतरत्नः लुण्ठितमणिः अपहृतोत्कृष्टपदार्थो वा, च्युतोद्योगः नष्टव्यवसायः, रक्षोभ्यः यातुधानेभ्यः, करदः बलिप्रदः ( पक्षे—हस्तालम्बनदो वा )। ( अत एव ) सत्रपः लज्जितः, गोत्रभिद् वज्री, दिवि स्वर्गे, पूतक्रतायीं पुलोमजां, न नहि, अभ्येति उपसर्पति किम्? उपसर्पत्येवेति काकुः।

कोशः—'रत्नं मणिर्द्वयो रत्नजातौ मुक्तादिकेऽपि च ।
जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते ।'
'सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ।'

समासः—हृतानि रत्नानि यस्य सः । च्युत उद्योगो यस्य सः । पूताः क्र[illegible] येन सः, तस्य स्त्री इत्यर्थे 'पूतक्रतोरै च ४।१।३६' इति ङीपि, तत्संयोगेनैकारे[illegible] आयादेशे पूतक्रतायी, ताम् । त्रपया सह सत्रपः । 'तेन सहेति तुल्ययोगे २।२।[illegible] बहुव्रीहिः ।

कृदन्तः—करं ददातीति विग्रहे 'आतोऽनुपसर्गे कः ३।२।३' इति के करद[illegible] गोत्रं भिनत्तीति विगृह्य 'सत्सूद्विष० ३।२।६१' इति क्विपि गोत्रभिद् ।

वाच्यपरिवर्तनम्—हृतरत्नेन च्युतोद्योगेन करदेन सत्रपेण गोत्रभि[illegible] पूतक्रतायी अभीयते ॥ २८ ॥

गर्वस्य परां काष्ठां दर्शयति—

अ-तुल्य-महसा सार्धं रामेण मम विग्रहः ।
त्रपाकरस्, तथाप्येष यतिष्ये तद्-विनिग्रहे ॥ २९ ॥

अन्वयः—अतुल्यमहसा रामेण सार्धं मम विग्रहः त्रपाकरः, तथापि एषो[illegible] तद्विनिग्रहे यतिष्ये ।

हिन्दी—अतुल्य सामर्थ्यवाले रामके साथ मेरा विरोध करना लज्जाकर है तो भी (तुम्हारी प्रसन्नताके लिए) उसको विशेष दण्ड देनेकी मैं कोशिश करूं[illegible] ( जाओ तुम शान्ति रखो ) ।

व्याख्या—अतुल्यमहसा असमानतेजसा, रामेण राघवेण, सार्धं सह, म[illegible] रावणस्य, विग्रहः कलहः, त्रपाकरः लज्जाकरः, तथापि अयोग्यत्वेऽपि, एष[illegible] रावणोऽप्यहम्, तद्विनिग्रहे रामविशेषदण्डार्थं, यतिष्ये उत्सहिष्ये ( तव प्रीत[illegible] इति शेषः ) । असङ्गतिरलङ्कारः । ध्वनिमयत्वादुत्तमकाव्यम् ।

कोशः—'तेजःपुरीषयोर्वर्चो महस्तूत्सवतेजसोः ।' ( विग्रहकोषः ५।१ श्लो[illegible] द्रष्टव्यः ) 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा साऽपत्रपाऽन्यतः ।'

समासः—अतुल्यं महः यस्य सोऽतुल्यमहाः, तेन । तस्य विनिग्रहः तद्विनिग्रहः ।

तद्धितः—तुलया सम्मितम् इति विग्रहे 'नौवयोधर्म०-४।४।९१' इति यत[illegible] प्रत्यये तुल्यम् । नञ्समासः ।

कृदन्तः—त्रपां करोति तच्छील इति विग्रहे 'कृञो हेतुताच्छील्यानुलोम्ये[illegible] ३।२।२०' इति टे, गुणे, त्रपाकरः ।

तिङन्तः—यती प्रयत्ने इति भौवादिकाद्धातोः 'वर्तमानसामीप्ये वर्तमानवद्वा ३।३।११' इति वैकल्पिके लटि, तदर्थेऽत्र लृटि यतिष्ये इति ।

वाच्य०—विग्रहेण त्रपाकरेण भूयते । यतिष्यते मया एतेन ॥ २९ ॥

शूर्पणखां तु बहिरात्मप्रशंसया सन्तोष्यान्तस्तु रामाद् बिभ्यद् मातृष्वस्रीयं मारीचं परामर्ष्टुमृच्छति—

उत्पत्य खं दश-ग्रीवो मनो-यायी शिताऽस्त्र-भृत् ।
समुद्र-सन्निधाऽऽवासं मारीचं प्रति चक्रमे ॥ ३० ॥

अन्वयः—शितास्त्रभृत् मनोयायी दशग्रीवः खम् उत्पत्य समुद्रसविधावासम् मारीचं प्रति चक्रमे ।

हिन्दी—तीक्ष्ण हथियार लेकर मनोवेगकी तरह चलनेवाला रावण आकाशमें उड़कर समुद्रके पास रहनेवाले मारीचके पास गया ।

व्याख्या–( सूर्पणखां सन्तोष्य ) शितास्त्रभृत् उग्रायुधधारी, मनोयायी मानसवेगः, दशाननः रावणः, खम् गगनम्, उत्पत्य उड्डीय, समुद्रसविधावासम् अब्धिसमीपवासिनम्, मारीचं ताडकासुतम्, प्रति अभिलक्ष्य, चक्रमे ययाय ।

कोशः—'नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ।'
'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ।'

समासः—समुद्रस्य सविधे आवासो यस्येति सः व्यधिकरणबहुव्रीहिः, तम् । दश ग्रीवा यस्येति बहुव्रीहौ 'गोस्त्रियोः १।२।४८' इति ह्रस्वः ।

कृदन्तः—शितानि च तानि अस्त्राणि शितास्त्राणि इति कर्मधारयं कृत्वा शितास्त्राणि बिभर्तीति विगृह्य भृधातोः 'क्विप् च ३।२।७६' इति क्विपि, तुकि, शितास्त्रभृत् । मन इव यातीति विग्रहे 'कर्तर्युपमाने ३।२।७९' इति णिनि प्रत्यये आतो युकि च कृते मनोयायी ।

तिङन्तः–'अनुपसर्गाद्वा १।३।४३, इति तङि 'लिटस्तझयोरेशिरेच् ३।४।८१' तस्यैशादेशे द्वित्वादिकार्ये चक्रमे ।

वाच्यपरिवर्तनम्—मनोयायिना शस्त्रास्त्रभृता दशग्रीवेण चक्रमे ।

शिक्षा–सर्वेषां समये समुपस्थिते साहाय्यापेक्षा भवतीति शिक्षयति ॥ ३० ॥

रावणस्तं स्वाभिप्रायं निवेदयति—

सम्पत्य तत्-सनीडेऽसौ तं वृत्तान्तमशिश्रवत् ।

त्रस्नुनाऽथ श्रुताऽर्थेन तेनाऽगादि दशाऽऽननः ॥ ३१ ॥

अन्वयः—असौ तत्सनीडे सम्पत्य तं वृत्तान्तम् अशिश्रवत् । अथ श्रुतार्थेन त्रस्नुना तेन दशाननः अगादि ।

हिन्दी—उसने ( रावणने ) उसके पास जाकर उस वृत्तान्तको सुनाया। बाद वृत्तान्त सुन चुकनेपर डरता हुआ उसने रावणसे कहा ।

व्याख्या—असौ रावणः, तत्सनीडे तन्निकटे, सम्पत्य उपस्थाय, तम् शूर्पणखोक्तम्, वृत्तान्तम् उदन्तम्, अशिश्रवत् श्रावयामास । अथ वृत्तान्तश्रवणानन्तरम्, श्रुतार्थेन आकर्णितप्रयोजनेन, त्रस्नुना भयार्त्तेन, तेन मारीचेन, दशाननः रावणः, अगादि अभिहितः । अत्र तमिति मारीच–सर्वनामापि सम्भवति ।

कोशः—'समीपे निकटासन्नसन्निकृष्टसनीडवत् ।'
'अर्थोऽभिधेयो रैवस्तुप्रयोजननिवृत्तिषु ।'
'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः ।'

समासः—तस्य सनीडम् तत्सनीडम् । श्रुतः अर्थो येन स श्रुतार्थः । दश आननानि यस्यासौ दशाननः ।

तिङन्तः—श्रु–श्रवणे इति धातोः 'हेतुमति च ३।१।२६' इति णौ श्रावि इत्यस्य 'सनाद्यन्ता धातवः ३।१।३२' इति धातुत्वाल्लुङि, च्लौ, तस्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८' इति चङि, णौ कृतस्य स्थानिवत्त्वात् श्रु इत्यस्य 'चङि ६।१।११' इति द्वित्वे 'सन्वल्लघुनि चङ्परेऽनग्लोपे ७।४।९३' इति सन्वद्भावे 'स्रवति शृणोति० ७।४।८१' इति अभ्यासस्येत्वे अशिश्रवत् । गद व्यक्तायां वाचि इति धातोः कर्मणि लुङि,'चिण् भावकर्मणोः ३।१।६६' इति चिणि, वृद्धौ अगादि।

वाच्य०—अमुना स वृत्तान्तः अश्रावि । श्रुतार्थः त्रस्नुः दशाननमगादीत् ।

शिक्षा–'न ह्रीङ्गितज्ञोऽवसरेऽवसीदति' इति पृष्टेन यथार्थम् प्रति वक्तव्यमेवेति शिक्षयति पद्यम् ॥ ३१ ॥

मारीचोऽपि तं न्याय्यमेवोपदिशति—

अन्तर्धत्स्व रघु-व्याघ्रात् तस्मात् त्वं राक्षसेश्वर ।
यो रणे दुरुपस्थानो हस्तरोधं दधद् धनुः ॥ ३२ ॥

अन्वयः—हे राक्षसेश्वर ! त्वं तस्मात् रघुव्याघ्रात् अन्तर्धत्स्व । यः हस्तरोधं धनुः दधत् रणे दुरुपस्थानः ( अस्ति ) ।

हिन्दी—हे राक्षसराज ! आप उस प्रसिद्ध रघुवंशियोंमें श्रेष्ठ रामका सामना न करें–उनसे छिपे रहें, क्योंकि वह हाथमें धनुष पकड़कर जब रणमें खड़े होते हैं तो उनका सामना करना मुश्किल होता है ।

व्याख्या—हे राक्षसेश्वर हे कौणपराज! त्वम्, तस्मात् प्रसिद्धात्, रघुव्याघ्रात् रघूत्तमात् रामात्, अन्तर्धत्स्व तिरोभव, यः रामः, हस्तरोधं करपीडं, धनुः चापं, दधत् गृह्णन्, रणे संग्रामे, दुरुपस्थानः कष्टसाध्यः। दुरुपस्थानेऽग्रिमा हेतव इति काव्यलिङ्गम्। अत्रापि 'हस्तरोधं दधद् धनुः' इति हेतूक्तिः।

कोशः—( राक्षसकोशः—५।५ द्रष्टव्यः )। 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभ-कुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः'॥

समासः—राक्षसानाम् ईश्वरः राक्षसेश्वरः, तत्सम्बुद्धौ हे राक्षसेश्वर। रघुषु व्याघ्रः रघुव्याघ्रः, तस्मात् इति। 'अन्तर्द्धौ येनादर्शनमिच्छति १।४।२८' इत्यपादानसंज्ञायाम् पञ्चमी।

कृदन्तः—दुःखेन उपस्थीयते इति दुरुपस्थानः। दुःपूर्वकात् स्थाधातोः 'आतो युच् ३।३।१२८' इति खलोऽपवादके युचि साधुः। हस्तेन रुध्वेति विग्रहे 'सप्तम्यां चोपपीडरुधकर्षः ३।४।४९' इति चकारेण तृतीयासमुच्चयादुपशब्दाभावेऽपि णमुलि 'तृतीया प्रभृतीन्यन्यतरस्याम् २।२।२१' इति समासे हस्तरोधम्। 'अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेद्' इत्येवात्र उपोपपदाभावेऽपि रुधेः णमुलि कारणम्, उपेतिसूत्रेऽविवक्षितम् च। दधद् इति डुधाञ् धारणपोषणयोः इति धा-धातोः शतरि रूपम्। 'नाभ्यस्ताच्छतुः ७।१।७८' इति नुमनिषेधः।

तिङन्तः—धा धातोः 'लोट् च ३।३।१६२' इति कर्तरि लोटि आत्मनेपदे, स्वे, 'श्लौ ६।१।१०' इति द्वित्वेऽभ्यासकार्य्ये, 'श्नाभ्यस्तयोरातः ६।४।११२' इति आलोपे 'दधस्तथोश्च ८।२।३८' इति भष्भावे 'अन्तरयोरुपसर्गवद्वृत्तिः' इति अन्तरशब्दस्य 'ते प्राग्धातोः १।४।८० इति प्राक्प्रयोगे अन्तर्धत्स्व।

वाच्यपरिवर्तनम्—त्वया रघुव्याघ्रात् अन्तर्धीयताम्। धनुर्दधता येन दुरुपस्थानेन ( भूयते )।

शिक्षा—'स किं सखा साधु न शास्ति योऽधिपम्' इति मारीचोऽपि 'हितं मनोहारि च दुर्लभं वचः' इति शिक्षयति जनान्॥ ३२॥

रामस्य दुरुपस्थानत्वमेव साधयति—

भवन्तं कार्तवीर्यो या हीन-सन्धिमचीकरत्।
जिगाय तस्य हन्तारं स रामः सार्वलौकिकम्॥ ३३॥

अन्वयः—यः कार्तवीर्यः भवन्तं हीनसन्धिम् अचीकरत्। स रामः तस्य हन्तारम् ( परशुरामम् ) जिगाय इति सार्वलौकिकम्।

हिन्दी—जिस कार्तवीर्य अर्जुनने आपके साथ हीन-सन्धि की, उस राम तो उसको भी मारनेवाले ( परशुराम ) को जीता है। यह बात सर्व विदित है।

व्याख्या—यः कार्तवीर्यः हैहयवंशीयोऽर्जुनः, भवन्तं रावणम्, हीनसन्धि निकृष्टसन्धानम्, अचीकरत् कारयामास, स प्रसिद्धः, रामः राघवः, तस्य कार्तवीर्यस्य, हन्तारं घातुकं परशुरामम् ( अपि ), जिगाय अजैषीत्, इति सार्वलौकिकम् सर्वजनविदितम् वृत्तम्।

कोशः—'उत्कर्षोऽतिशये सन्धिः श्लेषे विषय आश्रये'। 'लोकस्तु भुवने जने'।

समासः—हीनेन सन्धिः, तम्। भवन्तमिति द्वितीया 'हृक्रोरन्यतरस्याम् १।४।५४' इति द्विकर्मतया।

तद्धितः—कृतवीर्यस्य अपत्यम् इति विग्रहे 'तस्यापत्यम् ४।१।९२' इत्यणि आदिवृद्धौ कार्तवीर्यः। सर्वस्मिन् लोके विदित इत्यर्थे 'लोकसर्वलोकाट्ठञ् ५।१।४४' ठञि, 'अनुशतिकादीनां च ७।३।२०' इति उभयपदवृद्धौ, सामान्ये नपुंसकम्।

तिङन्तः—डुकृञ् करणे इति ण्यन्ताल्लुङि अचीकरत्। जि जये इति धातोः लिटि, द्वित्वे, 'सन् लिटोर्जेः ७।३।५७' इति जस्य गकारे जिगाय।

वाच्यपरिवर्तनम्—येन कार्तवीर्येण भवान् हीनसन्धिः अकारि, तस्य हन्ता तेन रामेण जिग्य इति सार्वलौकिकेन भूयते।

शिक्षा—मारीचस्य सखिकृत्यम् अप्रियस्यापि पथ्यस्योपदेशः॥ ३३॥

मारीचो रामपराक्रममेव स्तौति—

> यम'ऽऽस्य-दृश्वरी तस्य ताडका वेत्ति विक्रमम्।
> शूरं-मन्यो रणाच् चाऽहं निरस्तः सिंह-नर्दिना॥ ३४॥

अन्वयः—यमास्यदृश्वरी ताडका तस्य विक्रमं वेत्ति, सिंहनर्दिना ( तेन ) रणान्निरस्तः शूरम्मन्यः, अहं च ( वेद्मीति शेषः )।

हिन्दी—यमराजका मुख देखनेवाली ताडका ( मेरी मां ) उनके पराक्रमको जानती है तथा सिंहके समान गरजने वाले उनके द्वारा संग्रामसे दूर फेंक दिया गया अपनेको वीर बहादुर माननेवाला मैं भी ( जानता हूँ )।

व्याख्या—यमास्यदृश्वरी कृतान्तमुखावलोकिनी, ताडका तन्नामा मम माता, तस्य प्रसिद्धस्य रामस्य, विक्रमम् पराक्रमं, वेत्ति जानाति। सिंहनर्दिना मृगेन्द्र गर्जिना ( तेन ) रणात् समरात्, निरस्तः निक्षिप्तः, शूरम्मन्यः वीरमानी, अहं मारीचः, च तथा ( जानामीति शेषः )।

हिन्दी—उनके साथ युद्ध करनेवाले खरदूषण उनकी शक्तिको जानते हैं तथा जिसकी उन्होंने यज्ञमें रक्षाकी ( वे ) सोमयाजियोंके साथ यज्ञकर्ता-गण भी ( उनकी शक्तिको जानते हैं )।

व्याख्या—सहयुध्वानौ सार्धं योधितवन्तौ, खरदूषणौ तव मातृष्वस्रीयौ, तच्छक्तिम् रामपराक्रमम्, संवित्तः साधु जानीतः। स प्रसिद्धः ( रामः ), यान् यज्वनः, मखेषु यागेषु, अगोपीत् अरक्षीत्, ( ते ) ससुत्वानः सोमयाजिसहिताः, यज्वानः आहिताग्नयः ( संविदन्ति इति शेषः )।

कोशः—'शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता।'

'यज्वा तु विधिनेष्टवान्'।

समासः—तस्य शक्तिस्तच्छक्तिस्ताम्। खरश्च दूषणश्चेति तौ। सुत्वभिः सहिताः ससुत्वानः, बहुव्रीहिः।

कृदन्तः—सह युद्धवन्तौ इति विग्रहे युध संप्रहारे इति धातोः 'सहे च ३।२।९६' इति क्वनिपि, 'सर्वनामस्थाने चासम्बुद्धौ ६।४।८' इति दीर्घे सहयुध्वानौ। षुञ् अभिषवे इति धातोः 'सुयजोर्ङ्वनिप् ३।२।१०३' इति ङ्वनिपि, समासे, सुत्वन्शब्देन समासः। एवमिष्टवन्तः इति विगृह्य यज धातोः ङ्वनिप्। पूर्ववत् कित्वाभावात् सम्प्रसारणाभावः यज्वानः।

तिङन्तः—विद ज्ञाने इति धातोः संपूर्वकत्वेऽपि 'समो गम्यृच्छिभ्याम् १।१।२९' इति अकर्मकानुवृत्त्या तङोऽभावे 'वर्तमानसामीप्ये वर्तमानवद्वा ३।३।१३१' इति भूते लटि संवित्तः। गुपू रक्षणे इति भौवादिकात् धातोर्लुङि 'नेटि ७।२।४' इति वृद्धिनिषेधेऽगोपीत्।

वाच्यपरिवर्तनम्—सहयुध्वभ्यां खरदूषणाभ्यां तच्छक्तिः संविद्यते। ये मखेषु अगोपिषत तेन, तैः ससुत्वभिर्यज्वभिश्च तच्छक्तिः संविद्यते ॥ ३७ ॥

सम्प्रति रावणम्प्रति स्वोपदेशनिष्कर्षमुपसंहरति—

सुख-जातः सुरा-पीतो नृ-जग्धो माल्य-धारयः।
अधि-लङ्कं स्त्रियो दीव्य माऽऽरब्धा बलि-विग्रहम् ॥ ३८ ॥

अन्वयः—सुखजातः सुरापीतः नृजग्धः माल्यधारयः ( त्वम् ) अधिलङ्कम् स्त्रियः दीव्य बलिविग्रहम् माऽऽरब्धाः। अन्यथा जीवनसमाप्तिरिति ध्वनिः।

हिन्दी—आनन्द-मग्न हो मद्य पीकर मनुष्योंको खाकर मालाएँ पहने हुए तुम लंकामें स्त्रियोंके साथ क्रीड़ा करो ( जाओ )। बलीके साथ विरोध मत करो ( ( यह मेरी सलाह है ) )।

व्याख्या—सुखजातः प्राप्तानन्दः, सुरापीतः मद्यपानासक्तः, नृजग्धः भुक्तमनुषः, माल्यधारयः स्रग्वी, अधिलङ्कम् स्वपुर्याम्, स्त्रियः रमणीः, दीव्य क्रीड, बलिविग्रहं बलवद्विरोधम्, माऽऽरब्धाः मा कार्षीः ( इत्येव मे परामर्शः )।

कोशः—'स्यादानन्दथुरानन्दः शर्म-शात-सुखानि च'।

'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः'॥

समासः—जातं सुखं यस्येति बहुव्रीहौ 'जाति-काल-सुखादिभ्यः परा नि-वाच्या २।२।३६' इति वार्तिकात् निष्ठायाः परनिपातः। एवं ना जग्धो येनेति, सुरा पीता येनेति बहुव्रीहावपि 'वाऽऽहिताग्न्यादिषु २।२।३७' इति वैकल्पिके परनिपातः। माल्यस्य धारयः। लङ्कायाम् इति विभक्त्यर्थे 'अव्ययम्० २।१।६' इति समासे अधिलङ्कम्। बलिभिः विग्रहः, तम्।

कृदन्तः—अद भक्षणे इति धातोः 'अदो जग्धिर्ल्यप्ति किति २।४।३६' जग्ध्यादेशे बहुव्रीहौ नृजग्धः इति। धारयतीति विग्रहे 'अनुपसर्गाल्लिम्प० ३।१।१४८' इति शे धारयः, ततः षष्ठी समासः।

तिङन्तः—दिवु क्रीडाविजिगीषाव्यवहारादिषु इति धातोर्लोटि, हौ, श्यनि, 'हलि च ८।२।७७' इति दीर्घे, 'अतो हेः ६।४।१०५' इति हेर्लुकि दीव्य इत्यस्य योगे, 'दिवः कर्म च १।४।४३' इति स्त्रियः कर्मत्वे, शसि वैकल्पिके इयङि रूपम्। रभेराङ् पूर्वात् 'माङि लुङ् ३।२।१७५' इति लुङि, थासि, 'झलो झलि ८।२।२६' इति सिज्लोपे, 'झषस्तथोर्धोऽधः ८।२।४०' इति थस्य धत्वे, 'झलां जश् झशि ८।४।५३' जश्त्वेन भस्य बकारे, 'न माङ्योगे ६।४।७४' इत्यटो निषेधे, उपसर्गे दीर्घे मा रब्धाः।

वाच्य०—सुरापीतेन नृजग्धेन स्त्रियो दीव्यन्ताम्। बलि-विग्रहः मा रभ्भि...

शिक्षा—यावच्छक्यं सुहृत् कुमार्गतो निरोद्धव्य इति॥ २८॥

रावणः सर्वमेव तत्कथनमन्यथयति, द्रष्टव्या महाकविकल्पना तदुक्तौ—

तं भीतं-कारमाक्रुश्य रावणः प्रत्यभाषत।
यात-यामं विजितवान् स रामं यदि किं ततः ?॥ २९॥

अन्वयः—रावणः तं भीतङ्कारम् आक्रुश्य प्रत्यभाषत। ( अये मारीच ! ) स यदि यातयामं रामं विजितवान् ततः किम् ? ( न किमपीति काकुः )।

हिन्दी—रावणने उसको ( तुम डरपोक हो ) ऐसा फटकार कर जवाब देते हुए कहा कि उसने ( रामने ) यदि वृद्ध परशुरामको जीत लिया तो इससे क्या हुआ ? इतनेसे वह वीर तो नहीं कहा जा सकता।

व्याख्या—रावणः दशास्यः, तम् मारीचम्, भीतङ्कारम् भीतं कृत्वा, 'त्वम् भीरुः असि' (इति) आक्रुश्य भर्त्सयित्वा, प्रत्यभाषत प्रत्यब्रवीत् । (अरे !) स रामः, यदि चेत्, यातयामम् क्षपित-वयसम्. रामम् परशुरामम्, विजितवान् परास्तवान्, ततः तस्मात्, किम् न किमपि ? तेन स वीरो न भवतीत्यर्थः ।

कोशः—'अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ ।'

'आक्रोशनमभीषङ्गः संवेदो वेदना न ना' ।

समासः—याताः यामाः यस्य स यातयामः, तम्—इति बहुव्रीहिः ।

कृदन्तः—भीतं कृत्वेति विग्रहे भीतमिति द्वितीयान्तोपदात् कृधातोः 'कर्मण्याक्रोशे कृञः खमुञ् ३।४।२५' इति खमुञि वृद्धौ 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुमागमे भीतङ्कारम् । आक्रोशित्वेति विग्रहे, 'कुगतिप्रादयः२।२।१८' इति समासे, 'समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७' इति ल्यबादेशे आक्रुश्य ।

वाच्यपरिवर्तनम्—रावणेन स प्रत्यभाष्यत, तेन यातयामः रामः व्यजायि, ततः केन भूयते ?

शिक्षा—इतश्चतुश्चत्वारिंशत्तमपद्यावधि 'विनाशकाले विपरीतबुद्धिः' इत्येव शिक्षा रावणोत्तरवाक्याल्लभ्यते ।। ३९ ।।

रावणः क्रमश उत्तरयति—

अघानि ताडका तेन लज्जा-भय विभूषणा ।
स्त्री-जने यदि तच् छ्लाघ्यं धिग् लोकं क्षुद्र-मानसम् ।। ४० ।।

अन्वयः—तेन लज्जाभयविभूषणा ताडका अघानि । स्त्रीजने यदि तत् श्लाघ्यम् ( तर्हि ) क्षुद्रमानसं लोकं धिक् ।

हिन्दी—उसने लज्जा और भय-भूषणवाली ताडकाको मारा । स्त्रीके प्रति शस्त्र चलानेकी भी यदि लोक प्रशंसा करे, तब तो ऐसे क्षुद्र बुद्धि वाले लोकको धिक्कार है ।

व्याख्या—तेन रामेण, लज्जाभयविभूषणा ह्रीभीमण्डना, ताडका तन्नाम्नी ते माता, अघानि व्यापादिता । स्त्रीजने अबलाकुले नारीवर्गे, यदि चेत्, तत् कुत्सितं वधकर्म, श्लाघ्यं प्रशस्यम्, ( तर्हि ) क्षुद्रमानसम् अधमहृदयम्, लोकम् जनम्, धिक् निन्दनीयमिदम् ।

कोशः—'त्रिषु क्रूरेऽधनेऽल्पेऽपि क्षुद्रो मात्रापरिच्छदे' ।

'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' ।

'लोकोऽयं भुवने जने' ।

समासः—लज्जा च भयं च लज्जाभये विभूषणे यस्याः सा। क्षुद्रं मानसं [illegible] सः, तम्। स्त्री चासौ जनः, तस्मिन्। धिग्योगे लोकम् इत्यत्र द्वितीया 'उभ[illegible] तसोः कार्य्या०' इति योगात्।

तिङन्तः—हन हिंसागत्योः इति धातोः कर्मणि लुङि 'अत उपधायाः ७[illegible] ११६' इति वृद्धौ 'हो हन्तेर्ञ्णिन्नेषु ७।३।५४' इति ह्रस्य घे अघानि।

वाच्यपरिवर्तनम्—स लज्जाभयविभूषणां ताडकाम् अवधीत्। तेन श्लाघ[illegible] श्रूयते ॥ ४०॥

मारीचस्यापि शूरम्मन्यत्वमन्यथयति—

> यद् गेहे-नर्दिनमसौ शरैर् भीरुमभाययत्।
> कु-ब्रह्म-यज्ञ-के रामो भवन्तं पौरुषं न तत् ॥ ४१ ॥

अन्वयः—असौ रामः गेहेनर्दिनं भीरुं भवन्तं कुब्रह्मयज्ञके शरैः [illegible] अभाययत् तत् पौरुषम् न (अस्ति)।

हिन्दी—उस रामने घरमें ही गरजनेवाले तुम्हारे जैसे डरपोकको कुब्राह्म[illegible] के किसी यज्ञमें बाणोंसे डरवाया था, वह पुरुषार्थ नहीं है।

व्याख्या—असौ त्वदुक्तः, रामः दाशरथिः, गेहेनर्दिनं पिण्डीशूरं, भीरुं भ[illegible] शीलं, भवन्तं त्वाम्, कुब्रह्मयज्ञके निन्द्यब्राह्मणानामज्ञाते यागे कुत्सिते वा, श[illegible] इषुभिः, यत् किञ्चित्, अभाययत् अत्रासयत्, तत् कर्म, पौरुषं सामर्थ्यम्, न अस्ति अत्र हेतो रामतो भयाभावान्न पुगात्मनेपदे, किन्तु शरकरणकं भयम्।

कोशः—'कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः'। (अज्ञः ५–३६ पद्यकोशे)

समासः—गेहे एव नर्दतीति गेहेनर्दी। ताच्छील्ये 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति णिनिप्रत्यये, 'पात्रेसंमितादयश्च२।१।४८'इति समासे गेहेनर्दी, तम्।

तद्धितः—कुत्सिताः ब्रह्माणः कुब्रह्माः 'कुगतिप्रादयः २।२।१८' इति समासे 'कुमहद्भ्यामन्यतरस्याम् ५।४।१०५' इति समासान्तेऽचि 'नस्तद्धिते ६।४।१४४' इति टिलोपे कुब्रह्मास्तेषाम् कुत्सितः अज्ञातो वा यज्ञः इति विग्रहे 'कुत्सिते ५।३।७४' 'अज्ञाते ५।३।७३' इति के, कुब्रह्मयज्ञके। पुरुषस्य भावः कर्म वेति विग्रहे पुरुषशब्दात् 'हायनान्तयुवादिभ्योऽण् ५।१।१३०' इति युवादित्वादणि आदिवृद्धौ पौरुषम्।

तिङन्तः—ञिभी भये इति धातोः 'हेतुमति च ३।१।२६' णिचि, वृद्धौ भायि इत्यस्य धातुत्वाल्लङि अभाययत्। भयकर्तुः अनुक्तत्वेऽपि 'गतिबुद्धिप्रत्य[illegible] वसानार्थ० १।४।५२' इति कर्मसंज्ञायां द्वितीया। शरैरिति करणे तृतीया।

वाच्यपरिवर्तनम्—अमुना रामेण गेहेनर्दी भीरुर्भवान् यद् अभाव्यत, तेन न पौरुषेण भूयते ॥ ४१ ॥

सम्प्रति रामकर्तृकं धनुर्भङ्गमन्यथयति—

चिर-कालोषितं जीर्णं कीटनिष्कुषितं धनुः ।
किं चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके ॥ ४२ ॥

अन्वयः—रामेण क्षत्रियकान्तिके चिरकालोषितं जीर्णम् कीटनिष्कुषितं धनुः यदि भग्नम्, ( अत्र ) चित्रम् किम् ? ( न किमपि इति काकुः ) ।

हिन्दी—रामने कुत्सित क्षत्रियोंके समीप बहुत दिनोंसे रखा हुआ पुराना कीड़ोंसे खालिया गया धनुष यदि तोड़ दिया तो इसमें आश्चर्य्य क्या है ? ( कुछ भी नहीं ) ।

व्याख्या—रामेण दाशरथिना, क्षत्रियकान्तिके कुत्सितराजन्यसमीपे, चिरकालोषितम् दीर्घसमयस्थितम्, जीर्णम् पुराणम्, कीटनिष्कुषितम् घुणादिकृमिभक्षितम्, धनुः कार्मुकम्, यदि चेत्, भग्नम् खण्डितम्, ( तदा अत्र ) चित्रम् आश्चर्यम् किम् ? ( न किमपि अद्भुतम् ) ।

कोशः—'मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' ।
'धनुश्चापो धन्वशरासनकोदण्डकार्मुकम्' ।

समासः—क्षत्रियकाणाम् अन्तिकम्, तस्मिन् । चिरकालम् उषितम् 'कालाध्वनोः० २।३।५' इति द्वितीयायाम् 'अत्यन्तसंयोगे च २।१।२९' इति समासः । कीटैः निष्कुषितम् तृतीयेति योगविभागात् समासः ।

कृदन्तः—जॄष् वयोहानौ इति धातोः क्तप्रत्यये, 'ॠत इद्धातोः ७।१।१००' इतीत्वे, 'हलि च ८।२।७७' इति दीर्घे, 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८।२।४२' इति निष्ठानत्वे नपुंसकम् । निस् पूर्वकात् कुष धातोः निष्ठातकारे 'इण् निष्ठायाम् ७।२।४७' इति इटि निष्कुषितम् । 'उदुपधात्० १।२।२१' इति कित्वाद् गुणाभावः । भञ्जो आमर्दने इति धातोः निष्ठाक्ते, 'ओदितश्च ८।२।४५' इति निष्ठा-तस्य नत्वे, 'चोः कुः ८।२।३०' इति कुत्वे भग्नम् ।

वाच्यपरिवर्तनम्—रामः धनुः भग्नवान्, किं चित्रेण केन भूयते ? ॥ ४२ ॥

खरदूषणनिधनमन्यथयति—

वन-तापस-के वीरौ विपक्षे गलिताऽऽदरौ ।
किं चित्रं यदि साऽवज्ञौ मम्रतुः खर-दूषणौ ॥ ४३ ॥

अन्वयः—वनतापसके विपक्षे गलितादरौ सावज्ञौ वीरौ खरदूषणौ य मम्रतुः तर्हि चित्रम् किम् ? ( न किमपीति काकुः ) ।

हिन्दी—जंगली, निन्द्य, तपस्वी, शत्रुमें अनादर बुद्धि रखनेवाले, लापरवा वीर खरदूषण यदि मर गये तो इसमें आश्चर्य्य क्या है ? कुछ नहीं ।

व्याख्या—वनतापसके अरण्यनिन्द्यतपस्विनि, विपक्षे द्विषि ( रामे ), ग तादरौ अनास्थाकारकौ, सावज्ञौ अनवधानौ, वीरौ शूरौ खरदूषणौ, यदि चे मम्रतुः प्राणान् जहतुः, ( तर्हि ) चित्रम् आश्चर्यम् किम् ? न किमप्याश्चर्य

कोशः—'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ।' 'शूरो वीरश्च विक्रान्त

समासः—कुत्सितः तापसः तापसक इति कुत्सितेऽर्थे कनि, वने ताप वनतापसकः, तस्मिन् । गलित आदरः ययोः तौ । अवज्ञया सह वर्तमानौ ।

तिङन्तः—मृङ् प्राणत्यागे इति धातोः 'म्रियतेर्लुङ्लिङोश्च १।३।६१' इ नियमसूत्राल्लुङ्लिङोरेव मृङ आत्मनेपदविधानाल्लिटि परस्मैपदे मम्रतुः ।

वाच्यपरिवर्तनम्—गलितादराभ्यां सावज्ञाभ्यां वीराभ्यां खरदूषणाभ्या मम्रे । चित्रेण केन भूयते ।। ४३ ।।

सम्प्रति तमेव शत्रुत्वेनोपक्षिपति—

त्वं च भीरुः सु-दुर्बुद्धे ! नित्यं शरण-काम्यसि ।
गुणांश् चाऽपह्नुषेऽस्माकं, स्तौषि शत्रूंश् च नः सदा ।। ४४ ।।

अन्वयः—अरे सुदुर्बुद्धे ! त्वं च भीरुः, नित्यं शरणकाम्यसि । अस्माकं गुणान् अपह्नुषे, नः शत्रून् च सदा स्तौषि ।

हिन्दी—अरे अत्यन्त दुष्ट बुद्धिवाले ! तुम तो डरपोक हो । अतः बरा अपना रक्षक चाहते हो । हमारे गुणोंको तो छिपाते हो और हमारे शत्रुओं ही प्रशंसा करते हो !

व्याख्या—( अरे ) सुदुर्बुद्धे अत्यन्तदुष्टमते ! मारीच ! त्वं भीरुः भयशी नित्यम् सर्वदा, शरणकाम्यसि रक्षकमिच्छसि । अस्माकम् रावणस्य ( स्वप्रशं याम् बहुत्वम् 'अस्मदो द्वयोश्च १।२।५९' इति ), गुणान् शौर्यादीन्, अपह्न अपनयसि, नः अस्माकम्, शत्रून् रिपून्, सदा सर्वदा, स्तौषि नौषि ।

कोशः—'अधीरे कातरे त्रस्ते भीरुभीरुकभीलुकाः' । 'शरणं गृहरक्षित्रो

समासः—दुष्टा बुद्धिर्यस्य स दुर्बुद्धिः, अत्यन्तश्चासौ दुर्बुद्धिः सुदुर्बुद्धिः, त म्बुद्धौ सुदुर्बुद्धे । बहुव्रीहिगर्भो हि 'कुगतिप्रादयः २।२।१८' इति नित्यसमास



नः—'बहुवचनस्य वस्नसौ ८।१।२१' इति अस्माकम् इत्यस्य स्थाने नस् आदे

तिङन्तः—शरणमिच्छसीत्यर्थे 'काम्यचच ३।१।९' इति काम्यच्—शरणकाम्यसि। ह्नुङ् अपनये इति आदादिकस्य लटि अपोपसर्गयोगेऽपह्नुषे। ष्टुञ् स्तुती इति धातोर्लटि 'उतो वृद्धिर्लुकि हलि ७।३।८९' इति वृद्धौ स्तौषि।

वाच्यपरिवर्तनम्—त्वया भीरुणा शरणकाम्यते, गुणा अपह्नूयन्ते, शत्रवः स्तूयन्ते ॥ ४४ ॥

उपसंहरति स्व-वाक्यं रावणः—

शीर्षच्छेद्यमतोऽहं त्वां करोमि क्षिति-वर्धनम्।
कारयिष्यामि वा कृत्यं विजिघृक्षुर् वनौकसौ ॥ ४५ ॥

अन्वयः—अतः अहम् त्वाम् शीर्षच्छेद्यं (कृत्वा) क्षितिवर्द्धनं करोमि। वा वनौकसौ विजिघृक्षुः कृत्यं कारयिष्यामि। अकिञ्चनत्वं ध्वनयति वनौकसाविति।

हिन्दी—इस कारण मैं तुम्हारा शिर काटकर मार डालूंगा या (रामलक्ष्मण) जङ्गलियोंको विग्रहद्वारा दण्डदेनेकी इच्छा रखने वाला मैं (वही) (तुमसे) कार्य्य कराऊंगा।

व्याख्या—अतः अस्मात् कारणात्, अहम् रावणः, त्वां मारीचं, शीर्षच्छेद्यं शिरस्कर्तनयोग्यमित्येवम्, क्षितिवर्द्धनं भूसमेधनं मृतं, करोमि करिष्यामि। वा अथवा, वनौकसौ काननिवासिनौ, विजिघृक्षुः विग्रहं चिकीर्षुः दिदण्डयिषुः,(अहम्) कृत्यं तत्सम्बन्धि कार्य्यं, त्वां कारयामि कारयिष्यामि सम्पादयिष्यामि इति।

कोशः—'उत्तमाङ्गं शिरः शीर्षं मूर्द्धानौ मस्तको ऽस्त्रियाम्'।

समासः—वनम् ओकः ययोः, तौ। शीर्षस्य छेदः, तम् अर्हतीति शीर्षच्छेद्यं—'शीर्षच्छेदाद्यत् ५।१।६५' इति यत्। 'हृक्रोरन्यतरस्याम् १।४।५३' इति प्रयोज्यकर्तुः त्वाम् इति कर्मत्वम्। क्षितेः वर्द्धनः क्षितिवर्द्धनः, तम्।

कृदन्तः—वृधु वर्द्धने इति ण्यन्ताद् धातोः 'नन्दिग्रहि० ३।१।१३३' इति ल्युटि वर्द्धनः (६ पद्ये), ततः समासः। विग्रहम् इच्छतीति विग्रहे विपूर्वकात् ग्रह धातोः 'सनि ग्रहगुहोश्च ७।२।१२' इति इण्निषेधे 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च १।२।८' इति सनः कित्वात् 'ग्रहिज्या० ६।१।१६' इति सम्प्रसारणे, 'होढः ८।२।५१' इति ढत्वे, 'एकाचो बशो भष्० ८।२।३७' इति भष्भावे, 'षढोः कः सि ८।२।४१' ककारे, षत्वे, जिघृक्षेत्यस्मात् 'सनाशंसभिक्ष उः ३।२।१६८' इति उप्रत्यये जिघृक्षुः। 'न लोकाव्यय० ६।३।३९' इति कर्मषष्ठ्याः प्रतिषेधः वनौकसाविति।

तिङन्तः—'कृधातोर्हेतुमति च ३।१।२६' इति णिचि, वृद्धौ, कारि इत्यस्य धातुत्वात् कारयिष्यामीति।

वाच्य०——मया शीर्षच्छेद्यस्त्वं क्षितिवर्द्धनः क्रियते । विजिघृक्षुणा कृत्यं कारयिष्यसे। (प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः) इति नियमोऽत्र ज्ञेयः।

शिक्षा——आत्मविनाशायैव तं विनाशयितुं विभीषयति इति विधेः प्राब सूचयति ॥ ४५ ॥

इतो मारीचः स्वरक्षार्थं प्रवृत्तः तदनुकूलम् वक्ति——

तमुद्यत-निशातासिं प्रत्युवाच जिजीविषुः ।
मारीचोऽनुनयन्-त्रासाद् अभ्यमित्र्यो भवामि ते ॥ ४६ ॥

अन्वयः——जिजीविषुः उद्यतनिशातासिं तं त्रासात् अनुनयन् मारीचः 'ते अभ्यमित्र्यो भवामि' इति प्रत्युवाच ।

हिन्दी——खड्ग उठाए हुए रावणके डरसे जीनेकी इच्छावाले मारी चापलूसी करते हुए 'मैं तेरे शत्रुके सम्मुख जाऊँगा' ऐसा उत्तर दिया ।

व्याख्या——जिजीविषुः प्राणिनिषुः, उद्यतनिशातासिम् आकृष्टतीक्ष्णखड्ग तम् दशाननम्, त्रासात् भयात्, अनुनयन् स्ववशयन्, मारीचः तन्नामा राक्षसः, तव ( रावणस्य ), अभ्यमित्र्यः शत्रुसन्मुखगः, भवामि अस्मि, ( इति ) प्रत्युवा उत्तरयाञ्चकार । अभिप्रायविशेषणः परिकरालङ्कारः ।

कोशः——'सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि' ।
'तूण्यां खड्गे तु निस्त्रिंशं चन्द्रहासासिरिष्टयः' ।
'चतुर्दश दरत्रासौ भीतिर्भीः साध्वसं भयम्' ।

समासः——उद्यतः निशातः असिः येनेति त्रिपदबहुव्रीहिः, तम् ।

तद्धितान्तः——अभ्यमित्रमलंगच्छतीत्यर्थे 'अभ्यमित्राच्छ च ५।२।१७' इ प्राक्षिके यति अभ्यमित्र्यः ।

कृदन्तः——जीव धातोः सन्नन्तात् 'सनाशंसभिक्ष उः ३।२।१६८' इति उप्र जिजीविषुः ।

तिङन्तः——ब्रूञ् व्यक्तायां वाचि इति धातोः प्रतिपूर्वात् लिटि, 'ब्रुवो व २।४।५३' इति वचादेशे, द्वित्वे, अभ्यासकार्ये, 'लिट्यभ्यासस्योभयेषाम् ६।१।१ इत्यभ्यासस्य सम्प्रसारणे प्रत्युवाच ।

वाच्य०——जिजीविषुणा अनुनयता मारीचेन 'अभ्यमित्र्येण भूयते' इत्यू

शिक्षा——अदृष्टम् बलात्कारयति स्वाभीष्टम् ॥ ४६ ॥

सम्प्रति स्वकर्तव्यं तत्कर्तव्यं च सहैव सूचयति मारीचः——

हरामि राम-सौमित्री मृगो भूत्वा मृगा-युवौ ।
उद्योगमभ्यमित्रीणो यथेष्टं त्वं च सं-तनु ॥ ४७ ॥

अन्वयः—(अहम्) मृगो भूत्वा मृगद्युवौ रामसौमित्री हरामि। अभ्यमित्रीणः त्वम् यथेष्टम् उद्योगम् सन्तनु।

हिन्दी—मैं मृग बनकर मृगोंसे खेलनेवाले रामलक्ष्मणको हर लेता हूँ, तुम शत्रुके सन्मुख जाकर यथेष्ट उद्योग करो।

व्याख्या—( अहम् ) मृगः कनकहरिणः भूत्वा, ( माययेति शेषः ) सम्पद्य, मृगद्युवौ हरिणक्रीडकौ, रामसौमित्री राघवलक्ष्मणौ, हरामि अपवाहयामि। अभ्यमित्रीणः अरिसन्मुखोपसर्पी, त्वम् रावणः, यथेष्टम् स्वेच्छानुरूपम्, उद्योगम् प्रयत्नम्, सन्तनु विस्तारय। मृगभावे मृगद्युत्वं हेतुरिति काव्यलिङ्गालङ्कारः।

कोशः—'मृगे कुरङ्गवातायुहरिणाजिनयोनयः'।

समासः—रामश्च सौमित्रिश्चेति रामसौमित्री। इष्टमतिक्रम्य यथेष्टम्। पदार्थानतिवृत्तौ अव्ययीभावः। अभ्यमित्र्यमित्याद्युक्तम् ( ४६ पद्ये )।

कृदन्तः—मृगैर्दीव्यति इत्यर्थे सुबन्तोपपदे 'क्विप् च ३।२।७६' इति क्विपि, 'च्छ्वोः शूडनुनासिके च ३।४।१९' इति वकारस्य ऊठि, यणि च कृते मृगद्यू-शब्दात् उवङि औविभक्तौ कर्मणि रूपम्।

तिङन्तः—सम्पूर्वस्य तनु विस्तारे इति धातोर्लोटि 'तनादिकृञ्भ्य उः ३।१।७९' उविकरणे 'उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६' इति हेर्लुकि सन्तनु।

वाच्यपरिवर्तनम्—मया मृगेण भूत्वा मृगद्युवौ रामसौमित्री ह्रियेते, अभ्यमित्रीणेन त्वया उद्योगः सन्तन्यताम्।

शिक्षा—हितमुपदिश्यमानोऽप्ययम् मामेव हन्तुमुद्यत इत्यहमस्मादात्मानं मोचयामि। अतोऽशुभस्य कालहरणमिति शिक्षयति ॥ ४७ ॥

मारीचकर्म कविर्वक्ति—

ततश् चित्रीयमाणोऽसौ हेम-रत्न-मयो मृगः।
यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥ ४८ ॥

अन्वयः—ततः चित्रीयमाणः हेमरत्नमयः सीतायाः यथामुखीनः बहु लोभयन् असौ मृगः पुप्लुवे।

हिन्दी—उसके बाद ( साश्चर्यमय ) चित्र-विचित्र हेममय मृग बना हुआ सीताके सामने बहुत लुभाता हुआ वह ( मारीच ) उछलने लगा।

व्याख्या—ततः रावणात्तदनन्तरम्, चित्रीयमाणः आश्चर्यमयः, हेमरत्नमयः



सुवर्णमणिमयः, सीताया जानक्याः, यथामुखीनः प्रतिबिम्बाश्रय इव सम्मुखीनः

बहु अधिकं, लोभयन् विमोहयन्, असौ मृगः मारीचः ( मायावित्वेन प्रसिद्धः पुप्लुवे बभ्राम ।

कोशः—'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ।'

समासः—हेम च रत्नं चेति द्वन्द्वे हेमरत्नयोः विकार इति विग्रहे 'मयड् तयोर्भाषायामभक्षाच्छादनयोः ४।३।१४३' इति मयटि हेमरत्नमयः । यथा दर्शनः इत्यर्थे 'यथामुखसम्मुखस्य दर्शनः खः ५।२।६' इति खे यथामुखीनः।

कृदन्तः—चित्रीयते इति चित्रीयमाणः । 'नमोवरिवश्चित्रङः क्यच् ३।१। इति क्यचि 'क्यचि च ७।४।३३' इति ईत्वे चित्रीयेत्यस्य धातुत्वात् चि आश्चर्ये इति ङित्वस्य 'अवयवकृतं लिङ्गं समुदायस्य भवति' इति परिभाषाव चित्रीयधातोरात्मनेपदित्वात् मुगागमे चित्रीयमाणः ।

तिङन्तः—प्लुङ् गतौ इति धातोः ङित्वाद् आत्मनेपदे लिटि 'द्विर्वचने १।१।५९' इति यणं निषिध्य, द्वित्वेऽभ्यासकार्ये, 'अचिश्नु० ६।४।७७' उवङि पुप्लुवे ।

वाच्यपरिवर्तनम्—हेमरत्नमयेण चित्रीयमाणेन मृगेण अमुना यथामुखीं बहु लोभयता पुप्लुवे ।

शिक्षा—अदृष्टस्य वशे जगदित्येव शिक्षयति पद्यम् ॥ ४८ ॥

सम्प्रति मैथिली मृगवधार्थं रामं नोदयति—

तेनाऽदुद्यूषयद् रामं मृगेण मृग-लोचना ।
मैथिली विपुलोरस्कं प्रावुवूर्षुर् मृगाजिनम् ॥ ४९ ॥

अन्वयः—मृगाजिनं प्रावुवूर्षुः मृगलोचना मैथिली विपुलोरस्कं रामम् मृगेण अदुद्यूषयत् । रामस्य मृगग्रहे प्रवृत्तिर्नतु वधे । वधस्तूभयोर्गौण एव ।

हिन्दी—मृगचर्म ओढ़नेकी इच्छावाली मृगाक्षी सीताने विशाल छाती रामको मृगका शिकार करनेके लिये प्रेरित किया ( कैसा मृगानुप्रास है )।

व्याख्या—मृगाजिनम् हरिणचर्म, प्रावुवूर्षुः आच्छादयितुमिच्छुः, मृगलो हरिणनयना, मैथिली सीता, विपुलोरस्कं विशालवक्षस्कं, रामं राघवं, तेन वि त्रेण, मृगेण हरिणेन, अदुद्यूषयत् दुद्यूषन्तं प्रेरयत् । रामोऽपि मृगेण देवितुमै तत्रैव सापि तं तेन देवितुं प्रैरयत् । रामेच्छामेव सीता समर्थयतिस्मेति ज्ञेय

कोशः—'अजिनं चर्म कृत्तिः स्त्री भैक्षं भिक्षाकदम्बकम्' ।
'उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः' ।
'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' ।

तिङन्तः—ष्मिङ् ईषद्धसने इति धातोः लिटि, द्वित्वेऽभ्यासकार्ये, षत्वे 'अचिश्नु० ६।४।७७' इतीयङि विसिष्मिये ।

वाच्यपरिवर्तनम्—वीक्षमाणेन रामेण विसिष्मिये ।। ५१ ।।

सम्प्रति रामकर्तृकं प्रहारमाख्याति—

चिरं क्लिशित्वा मर्मविद् रामो विलुभित-प्लवम् ।
शब्दायमानमव्यात्सीत् भयदं क्षणदाचरम् ॥ ५२ ॥

अन्वयः—मर्मविद् रामः चिरं क्लिशित्वा विलुभितप्लवम् शब्दायमानम् भयदं क्षणदाचरम् अव्यात्सीत् ।

हिन्दी—मर्मवेधी रामने देर तक कष्ट सहकर लुभावने छलाँग, मारने वाले 'हा लक्ष्मण' इस प्रकार ऊँचा शब्द करने वाले भयङ्कर राक्षसको मार डाला ।

व्याख्या—मर्मविद् मर्मवेधी, रामः दाशरथिः, चिरं बहुकालं, क्लिशित्वा परिश्रम्य आयस्य वा, विलुभितप्लवम् मनोहरगतिम्, शब्दायमानम् हा लक्ष्मणेत्युच्चैश्चिरंकुर्वन्तम्, भयदं भीषणम्, क्षणदाचरम् राक्षसम्, अव्यात्सीत् अवधीत् ।

समासः—विलुभिताः प्लवाः यस्य सः तम् ।

कृदन्तः—मर्माणि विध्यतीति विग्रहे द्वितीयान्तोपपदात् व्यध् धातोः क्विपि 'नहिवृतिव्यधि० ६।३।११६' इति पूर्वपददीर्घे, 'ग्रहिज्या० ६।१।१६' इति सम्प्रसारणे, सम्प्रसारणाच्च पूर्वरूपे मर्मविदिति । क्लिश उपतापे इति धातोः क्त्वाप्रत्यये, 'क्लिशः क्त्वानिष्ठयोः ७।२।५०' इति पाक्षिके इटि, 'मृडमृदगुधकुषक्लिशवदवसः क्त्वा १।२।७' इति कित्वाद् गुणाभावे क्लिशित्वेत्यस्य अव्ययत्वम् । लुभेः क्ते 'लुभो विमोहने ७।२।५४' इटि, 'उदुपधात् १।२।२१' इति कित्त्वाद् गुणाभावे लुभितम् ।

तिङन्तः—व्यध ताडने इति धातोः लुङि, 'वदव्रजहलन्तस्याचः ७।२।३' इति हलन्तलक्षणवृद्धौ, चर्त्वेऽडागमे अव्यात्सात् ।

वाच्यपरिवर्तनम्—मर्मविधा रामेण विलुभितप्लवः अव्याधि ।। ५२ ।।

इदानीं मैथिलीकर्तृकलक्ष्मणप्रेषणहेतुं प्राक्रमते कविः—

श्रुत्वा विस्फूर्जथु-प्रख्यं निनादं परिदेविनी ।
मत्वा कष्टाश्रितं रामं सौमित्रिं गन्तुमैजिहत् ।। ५३ ।।

अन्वयः—विस्फूर्जथुप्रख्यं निनादं श्रुत्वा कष्टाश्रितम् रामं मत्वा परिदेविनी (सीता) लक्ष्मणम् गन्तुम् ऐजिहत् ।

हिन्दी—वज्रके समान (मारीचके) शब्दको सुनकर कष्टमें पड़े रामको मानकर विलाप करनेवाली (सीताने) लक्ष्मणको रामके पास भेजना चाहा ।

व्याख्या—विस्फूर्जथुप्रख्यम् वज्रनिर्घोषसमम्, निनादम् शब्दम् ( मारी- स्येति शेषः ), श्रुत्वा आकर्ण्य, कष्टाश्रितं कृच्छ्रप्राप्तम्, रामम् राघवम्, म- बुद्ध्वा, परिदेविनी विलपन्ती ( सीता ), लक्ष्मणम् सौमित्रिम्, गन्तुम् या- ( रामं प्रति इति शेषः ), ऐजिहत् = ईहयाञ्चकार ।

कोशः—'स्फूर्जथुर्वज्रनिर्घोषे मेघज्योतिरिरंमदः' ।

समासः—विस्फूर्जथुः प्रख्या यस्य सः, तम् । कष्टम् आश्रितः, तम् । 'द्विती- श्रितातीतपतित० २।१।२४' इति सोपसर्गस्य समासः ।

कृदन्तः—टु-ओ-स्फूर्जा वज्रनिर्घोषे इति धातोः 'ट्वितोऽथुच् ३।३।८९' इ- अथुचि, व्युपसर्गयोगे पुंलिङ्गो विस्फूर्जथुशब्दः । निनदनम् निनादः, तम् । निपूर्वक- नद धातोः 'नौ गदनदपठस्वनः ३।३।६४' पाक्षिके घञि वृद्धौ पुंलिङ्गो निना- शब्दः । परिदेवने तच्छीला परिदेविनी । परिपूर्वात् देवृ देवने इति भौवादिक- धातोः 'सम्पृचानुरुधाङ्यमाङ्यस० ३।२।१४२' इति घिनुणि, 'ऋन्नेभ्यो ङी- ४।१।५' इति ङीपि परिदेविनी ।

तिङन्तः—ईहेर्ण्यन्ताद् लुङि 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८' इति च- 'द्विर्वचनेऽचि १।१।५९' इति अजादेशं निषिध्य, 'अजादेर्द्वितीयस्य ६।१।२' इ- हिमात्रस्य द्वित्वेऽभ्यासकार्ये, ततो 'णेरनिटि ६।४।५१' इति णेर्लोपे, आडा- वृद्धौ ऐजिहत् ।

वाच्यपरिवर्तनम्—परिदेविन्या सौमित्रिः गन्तुम् ऐहि ॥ ५३ ॥

इदानीमदृष्टम् सीताया लक्ष्मणमपवाहयितुं चेष्टते—

एष प्रावृषिजाऽम्भोदनादी भ्राता विरौति ते ।
ज्ञातेयं कुरु सौमित्रे भयात् त्रायस्व राघवम् ॥ ५४ ॥

अन्वयः—हे सौमित्रे प्रावृषिजाम्भोदनादी एष ते भ्राता विरौति, ज्ञातेयं कु- भयात् राघवं त्रायस्व ।

हिन्दी—हे लक्ष्मण ! वर्षाकालीन मेघके समान गर्जने वाले यह तुम्हारे भा- चिल्ला रहे हैं । भाईका काम करो । भयसे रामको बचाओ ।

व्याख्या—हे सौमित्रे हे लक्ष्मण ! प्रावृषिजाम्भोदनादी वार्षिकमेघघो- एषः अयम्, ते तव, भ्राता अग्रजः, विरौति आक्रोशति, ज्ञातेयम् बन्धुकर्तव्यं, कु- समाचर । भयात् भीतिहेतोः, राघवं रामम्, त्रायस्व रक्ष ।

कोशः—'ज्ञातेयं बन्धुता तेषां क्रमाद् भावसमूहयोः ।'



'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः' ।

समासः—प्रावृषिजश्चासौ अम्भोदः, कर्मधारयः। 'भीत्रार्थानां भयहेतुः १।४।२५' इत्यपादानसंज्ञायाम् पञ्चमी भयादिति।

तद्धितः—ज्ञातेः कर्म भावो वा इत्यर्थे सुबन्तात् 'कपिज्ञात्योर्ढक् ४।१।१२७' इति ढकि, तस्य एयादेशे ज्ञातेयम्। सुमित्रायाः अपत्यं पुमान् इत्यर्थे 'बाह्वादिभ्यश्च ४।१।९६' इति इञि सौमित्रिशब्दस्य सम्बुद्धौ सौमित्रे।

कृदन्तः—प्रावृषि जातः इत्यर्थे 'सप्तम्यां जनेर्डः ३।२।९७' इति डे, 'प्रावृट्शरत्कालदिवां जे ६।३।१५' इति सप्तम्या अलुकि, 'टेः ६।४।१४३' इति टिलोपे प्रावृषिजः। अम्भांसि ददातीत्यर्थे 'आतोऽनुपसर्गे कः ३।२।३' इति के अम्भोदः। तद्वन्नदतीति विगृह्य 'कर्तर्युपमाने ३।२।७९' इति णिनिः।

तिङन्तः—विपूर्वात् धातोः 'उतो वृद्धिर्लुकि हलि ७।३।८९' इति वृद्धौ विरौति।

वाच्यपरिवर्तनम्—प्रावृषिजाम्भोद-नादिना एतेन भ्रात्रा विरूयते, ज्ञातेयम् क्रियताम्, राघवः त्रायताम् ॥ ५४ ॥

लक्ष्मणो यथार्थमुत्तरयति—

राम-संघुषितं नैतन्, मृगस्यैव विवञ्चिषोः।
राम-स्वनित-सङ्काशः स्वान इत्यवदत् स ताम् ॥ ५५ ॥

अन्वयः—( अयि आर्ये ! ) एतत् रामसंघुषितं न, विवञ्चिषोः मृगस्य एव रामस्वनितसङ्काशः स्वानः—इति स ताम् अवदत्।

हिन्दी—आर्य्ये ! यह रामकी चिल्लाहट नहीं है, अपितु छलनेकी चाह रखने वाले मृगका ही रामचन्द्रके शब्दके समान बनाया हुआ शब्द है—ऐसा उन्होंने ( लक्ष्मणने ) उससे ( सीतासे ) कहा।

व्याख्या—( अयि आर्ये ! ) एतत् हा लक्ष्मण ! इत्याह्वानम्, रामसङ्घुषितम् राघव शब्दितम्, न नहि ( अस्ति इति शेषः )। विवञ्चिषोः छलनेच्छोः, मृगस्य कुरङ्गस्य, एव निश्चितम्, रामस्वनितसङ्काशः राघवस्वरतुल्यः, स्वानः शब्दः, इति इत्थम्, सः लक्ष्मणः, ताम् सीताम्, अवदत् अब्रवीत्।

कोशः—'साधारणः समानश्च स्युरुत्तरपदे त्वमी'।
'निभसङ्काशनीकाशप्रतीकाशोपमादयः'।

कृदन्तः—घुषिर् अविशब्दने इति भौवादिकात् धातोः 'नपुंसके भावे क्तः ३।३।११४' इति क्ते 'रुष्यमत्वर० ७।२।२८' इति पाक्षिके इटि, उदुपधादिति कित्वाद् गुणाभावे संघुषितम्। वञ्चु गतौ इति भौवादिकात्सनि 'विवञ्चिष-धातोः

'सनाशंसभिक्ष उः ३।२।१६८' इति उ प्रत्यये विवच्छिषोः। स्वननम् स्वानः स्वन धातोः 'स्वनहसोर्वा ३।३।७२' इति वैकल्पिको घञ्।

वाच्यपरिवर्तनम्—एतेन रामसंघुषितेन न ( भूयते ), रामस्वनितसङ्काशे स्वानेन ( भूयते ), तेन साऽवादि ॥ ५५ ॥

लक्ष्मणः स्वोक्तं श्लोकत्रयेण समर्थयति—

आप्यान-स्कन्ध-कण्ठांऽसं रुषितं सहितुं रणे।
प्रोर्णुवन्तं दिशो वाणैः काकुत्स्थं भीरु ! कः क्षमः ? ॥ ५६ ॥

अन्वयः—हे भीरु ! आप्यानस्कन्धकण्ठांसं रुषितं वाणैः दिशः प्रोर्णुवन्तं काकुत्स्थम् रणे सहितुम् कः क्षमः ? अस्तीति शेषः।

हिन्दी—हे भीरु ! चौड़े स्थूल स्कन्ध, कण्ठ और अंसवाले, क्रुद्ध, वाणोंसे दिशाओंको आच्छादित करनेवाले रामको संग्राममें सहन करनेके लिये कौन समर्थ है ?

व्याख्या—हे भीरु ! भयशीले ! आप्यानस्कन्धकण्ठांसम् स्थूलस्कन्धग्रीवांसम्, रुषितम् क्रुद्धम्, वाणैः इषुभिः, दिशः काष्ठाः, प्रोर्णुवन्तम् आच्छादयन्तम्, काकुत्स्थम् ककुत्स्थवंशीयम्, रणे युद्धे, सहितुम् सोढुम्, कः जनः, क्षमः समर्थः ( अस्ति )। न कोऽपीति काकुः। असहनहेतूक्तौ काव्यलिङ्गम्।

कोशः—'स्कन्धो भुजशिरोंसोऽस्त्री'।

'कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि'।

समासः—स्कन्धश्च कण्ठश्च अंसश्च तेषां समाहारः स्कन्धकण्ठांसम्। 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २।४।२' इति एकवद्भावे, आप्यानं स्कन्धकण्ठांसम् यस्य सः तम्, बहुव्रीहिर्द्वन्द्वगर्भः।

कृदन्तः—आङ्पूर्वात् प्यैङ् वृद्धौ इति धातोः 'निष्ठा ३।२।१०२' इति क्ते 'संयोगादेरातो धातोर्यण्वतः ८।२।४३' इति तस्य नत्वे आप्यानम्। अथवा ओप्यायी वृद्धौ इत्यस्य 'श्वीदितो निष्ठायाम् ७।२।१४' इति इण्निषेधे 'ओदितश्च ८।२।४५' इति तस्य नकारे, 'लोपो व्योर्वलि ६।१।६६' इति यलोपे आप्यानम्। पीभावस्तु 'आङ्पूर्वस्यान्धूधसोरेव ६।१।२८' इति नियमान्न भवति। रुष रोषे इति धातोः क्ते 'रुष्यमत्वर० ७।२।२८' इति वेटि, कित्वान्न गुणः रुषितः, तम्। सहेः शक्नोत्यर्थत्वात् 'शकधृष० ३।४।६५' इति तुमुनि 'तीषसह० ७।२।४८' इति वेटि सहितुम्। प्रपूर्वान् ऊर्णुञ् आच्छादने इति आदादिकस्य शतरि उवङि प्रोर्णुवन्तम्।



तद्धितान्तः—ककुत्स्थस्यापत्यम् काकुत्स्थः। 'शिवादिभ्योऽण् ४।१।११२

इत्यणि 'तद्धितेष्वचामादेः ७।२।११७' इत्यादिवृद्धौ 'यस्येति च ६।४।१४८' इत्यलोपः।

वाच्यपरिवर्तनम्—केन क्षमेण (भूयते) ॥ ५६ ॥

मृगागमनहेतुं विशदयति—

> देहं बिभ्रक्षुर-स्त्राऽग्नौ मृगः प्राणैर् दिदेविषन्।
> ज्या-घुष्ट-कठिनाऽङ्गुष्ठं राममायान् मुमूर्षया ॥ ५७ ॥

अन्वयः—अस्त्राग्नौ देहं बिभ्रक्षुः प्राणैर्दिदेविषन् मृगः ज्याघुष्टकठिनाङ्गुष्ठम् रामम् मुमूर्षया आयात्।

हिन्दी—अस्त्ररूपी अग्निमें देहको भूननेका अरमान लिये प्राणोंसे खेलनेकी इच्छा वाला मृग, मरनेकी इच्छासे प्रत्यञ्चाकी रगड़से कठिन अँगूठे वाले रामके पास आया है।

व्याख्या—अस्त्राग्नौ शरानले, देहं कायं, बिभ्रक्षुः बिभर्जिषुः, प्राणैः इषुभिः, दिदेविषन् चिक्रीडिषन्, ज्याघुष्टकठिनाङ्गुष्ठम् मौर्वीकर्षणकठोराङ्गुष्ठम्, रामम् राघवम्, मुमूर्षया प्राणत्यागेच्छया, आयात् आगच्छद्-इति। रूपकमसम्बन्धे सम्बन्धात्मिकाऽतिशयोक्तिश्च।

कोशः—'लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिञ्जिनी गुणः'।
'कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्'।

समासः—ज्यया घुष्टौ अत एव कठिनौ अङ्गुष्ठौ यस्य सः, तम्, तत्पुरुषगर्भितस्त्रिपदो बहुव्रीहिः। सव्यापसव्यकर्षणादङ्गुष्ठे द्वित्वम्। अस्त्रमेवाग्निः अस्त्राग्निः, मयूरव्यंसकादित्वाद् रूपक-समासः। 'दिवः कर्म च १।४।४३' इति करणसंज्ञया तृतीया प्राणैरिति।

कृदन्तः—भ्रष्टुमिच्छतीत्यर्थे भ्रस्ज पाके इति तौदादिकात्सनि 'सनीवन्तर्ध० ७।२।४९' इति इडभावपक्षे 'व्रश्चभ्रस्ज० ८।२।३६' इति षत्वे, 'षढोः कः सि ८।२।४१' इति कत्वे, बिभ्रक्षेत्यस्य धातुत्वात् 'सनाशंसभिक्ष उः ३।२।१६८' इति उप्रत्ययः। दिवः सनि 'सनीवन्तर्ध० ७।२।४९' इतीट्पक्षे शतृप्रत्ययेन रूपं दिदेविषन्। 'घुषिरविशब्दने ७।२।२३' इति निष्ठायामिडभावे रूपम् घुष्टम्। मृङ् प्राण-त्यागे इति धातोः सनि 'अज्झनगमां सनि ६।४।१६' इति दीर्घे 'उदोष्ठ्यपूर्वस्य ७।१।१०२' इत्युत्वे, 'हलि च ८।२।७७' इति दीर्घे, द्वित्वादिना मुमूर्षधातोः 'अ प्रत्ययात् ३।३।१०२' इति अप्रत्यये टापि मुमूर्षा।



वाच्य—बिभ्रक्षुणा दिदेविषता ज्याघुष्टकठिनाङ्गुष्ठः रामः आयायत ॥ ५७ ॥

उपसंहरति लक्ष्मणः स्ववाक्यम्—

शत्रून् भीषयमाणं तं रामं विस्मापयेत कः ? ।
मा स्म भैषीस् त्वयाऽद्यैव कृताऽर्थो द्रक्ष्यते पतिः ॥ ५८ ॥

अन्वयः—कः शत्रून् भीषयमाणं तं रामम् विस्मापयेत । मा स्म भैषीः त्वया अद्यैव कृतार्थः पतिः द्रक्ष्यते ।

हिन्दी—( ऐ भाभी ) शत्रुओंको कँपा देनेवाले उस प्रसिद्ध रामको कौन विस्मित कर सकता है ? डरो मत । अभी ही आप अपने कृतार्थ पतिको देख लेंगी ।

व्याख्या—कः अन्यः, शत्रून् विपक्षान्, भीषयमाणम् त्रासयन्तम्, तं प्रसिद्धं रामम्, विस्मापयेत विजित्य क्षुभितमपि कुर्यात् ? न कोऽपीति काकुः । ( हे भ्रातृजाये ! ) मा स्म भैषीः=नहि बिभीहि ( भीता मा भूरित्यर्थः ) । त्वया अद्य अधुना एव, निश्चयेन कृतार्थः सम्पादितकार्यः, पतिः भर्ता (रामः), द्रक्ष्यते साक्षात् कारिष्यते ।

कोशः—'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' ।
'धवः प्रियः पतिर्भर्त्ता जारस्तूपपतिः समौ' ।

समासः—कृतः अर्थो येन स कृतार्थः । 'न लोकाव्यय० २।३।६९' इति षष्ठीनिषेधे, कर्मणि द्वितीया शत्रूनिति ।

कृदन्तः—भीधातोर्णिचि 'भियो हेतुभये षुक् ७।३।४०' इति षुकि, 'भीस्म्योर्हेतुभये १।३।६८' इति तङि, शानचि, मुगागमे भीषयमाणम् । ष्मिङ् ईषद्धसने इति धातोर्णौ 'नित्यं स्मयतेः ६।१।५७' इत्यात्वे 'अर्ति० ७।३।३६' इति पुगागमे विस्मापयेत ।

तिङन्तः—'स्मोत्तरे लङ् च ३।३।१७६' इति भी धातोः लुङि 'सिचि वृद्धिः परस्मैपदेषु ७।२।१' वृद्धौ, मा भैषीः । दृश् धातोः कर्मणि लृटि, 'स्यसिच्सीयुट्तासिषु ६।४।६२' इति चिण्वदिडभावपक्षे 'सृजिदृशोर्झल्यमकिति ६।१।५८' इति अमागमे यणि द्रश्+स्यते. 'व्रश्चभ्रस्ज० ८।२।३६' इति षत्वे, कत्वे, षत्वे च द्रक्ष्यते ।

वाच्यपरिवर्त्तनम्—केन भीषयमाणः स रामः विस्माप्येत । ( त्वया ) मा भायि । त्वं कृतार्थं पतिं द्रक्ष्यसि ॥ ५८ ॥

सुदृढतथ्यवचनमपि लक्ष्मणम् प्रति अदृष्टनुन्ना सीता वाग्वज्रं विसृजति—

मायाल त्वयिनि ... मे ...



इच्छुः कामयितुं त्वं माम्, इत्यसौ जगदे तया ॥ ५९ ॥

अन्वयः—त्वं यायाः इति मे कामः। त्वं च गन्तुं न उत्सहसे। त्वं मां ामयितुम् इच्छुः इति तया असौ जगदे।

हिन्दी—तुम जाओ ऐसी मेरी इच्छा है, लेकिन तुम जाना नहीं चाहते। ुम मुझे चाहते हो, यह उसने उनसे कहा।

व्याख्या—त्वम् लक्ष्मणः, यायाः गच्छेः, इति इत्थम्, मे सीतायाः, कामः भिलाषः। त्वं च लक्ष्मणो हि, गन्तुम् यातुम, न उत्सहसे न सन्नह्यसि। (अतः) म्, माम् सीताम्, कामयितुम् कामिनीम् (कलत्रमिति यावत्) कर्तुम्, इच्छुः वणशीलः, इति इत्थम्, तया सीतया, असौ लक्ष्मणः, जगदे ऊचे। साध्यहेतूक्ता-नुमानालङ्कारः।

कोशः—'कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः'।

कृदन्तः—'शकधृषज्ञाग्ला० ३।४।६५' इति तुमुनि गन्तुम्। कमु कान्तौ इति तोः स्वार्थे 'कमेर्णिङ् ३।१।३०' इति णिङि कामिधातोः 'समानकर्तृकेषु मुन् ३।३।१५८'। 'विन्दुरिच्छुः ३।२।१६९' इति निपातनाद् इच्छुः।

तिङन्तः—'कामप्रवेदनेऽकच्चिति ३।३।१५३ इति लिङि, यासुटि, 'लिङः लोपोऽनन्त्यस्य ७।२।७९' इति सलोपे यायाः।

वाच्यपरिवर्तनम्—त्वया यायेत इति मे कामेन भूयते। त्वया न उत्सह्यते। च्छुना भूयते इति अमुम् जगाद।

शिक्षा—अदृष्टम् सर्वमप्यसम्भवं कारयतीति शिक्षयति पद्यम्॥ ५९॥

सम्प्रति सीतोद्वेजितो रुष्टो लक्ष्मणः शून्ये तां विहाय व्रजति—

मृषोद्यं प्रवदन्तीं तां सत्य-वद्यो रघूत्तमः।
निरगात् 'शत्रुहस्तं त्वं यास्यसी'ति शपन् वशी॥ ६०॥

अन्वयः—सत्यवद्यो वशी रघूत्तमः मृशोद्यं प्रवदन्तीं तां 'त्वं शत्रुहस्तं यास्यसि' इति शपन् निरगात्।

हिन्दी—सत्यवादी एवं जितेन्द्रिय लक्ष्मण मिथ्यावाद-भाषिणी सीताको ऐसा ाप देते हुए चल पड़े कि तुम शत्रुके हाथमें पड़ोगी।

व्याख्या—सत्यवद्यः सत्यभाषी, वशी संयमी, रघूत्तमः लक्ष्मणः, मृषोद्यं थ्यावादं, प्रवदन्तीं भाषमाणां, ताम् सीताम्, 'त्वम् अविवेकिनी, शत्रुहस्तं रिपु-ति, यास्यसि गमिष्यसि' इति इत्थं, शपन् शापं प्रयच्छन्, निरगात् निरगच्छत्। कृतविशेषणकः परिकरः।

कोशः—'सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति'।
'मृषा मिथ्या च वितथे यथार्थं तु यथायथम्'।

समासः—रघुषु उत्तमः। शत्रोः हस्तः, तम्।

कृदन्तः—सत्यं वदतीत्यर्थे 'कृत्यलुटो बहुलम् ३।३।११३' इति कर्तरि सत्यवद्यः। आहो 'वदः सुपि क्यप् च ३।१।१०६' इति चकाराद् यत्, ततः सत्यं वद्यमस्ति अस्यासौ सत्यवद्यः इति। 'अर्श आदिभ्योऽच् ५।२।१२७' इत्यचि सत्यवद्यः। मृषा वादो मृषोद्यमित्यत्र 'राजसूय० ३।१।११४' इति भावे क्यपि, निपातनत्वात्सम्प्रसारणे, नपुंसकत्वम्। अथवा 'वदः सुपि क्यप् च ३।१।१०६' इत्यनेन क्यपि साधु। वशनं वशः इत्यर्थे 'वशिरण्योरुपसंख्यानम् ३।३।५८' इति वार्तिकबलादपि ततः 'अत इनि ठनौ ५।२।११५' इतीन् वशी। शपन्निति शतृप्रत्ययान्तं कर्तरि साधु।

तिङन्तः—निःपूर्वाद् इण् गतौ इति धातोः 'इणो गा लुङि २।४।४५' इति गादेशे 'गातिस्था० २।४।७७' इति सिचो लुकि, अडागमे निरगात्।

वाच्यपरिवर्तनम्—सत्यवद्येन वशिना रघूत्तमेन मृषोद्यं प्रवदन्ती 'त्वया शत्रुहस्तः यास्यते' इति शपता निरगायि॥ ६०॥

ततोऽदृष्टनुन्नस्य' रावणस्य सीताहरणमिषेण कुटीचकसंन्यासिवेषेण कलापवेशः—

गते ऽस्मिन्, जल-शुचिः शुद्ध-दन् रावणः शिखी।[1]
जञ्जपूको ऽक्ष-माला-वान् धारयो मृदलाबुनः॥ ६१॥

अन्वयः—तस्मिन् गते जलशुचिः शुद्धदन् शिखी जञ्जपूकः अक्षमालावान् मृदलाबुनः धारयः रावणः समागत्य सीताम् ऊचे इति चतुर्थपद्येनान्वयः।

"द्वाभ्यां युग्ममिति प्रोक्तम् त्रिभिः श्लोकैर्विशेषकम्।

---

१. चतुर्धा संन्यासिनो भवन्ति-१ कुटीचकः २ बहूदकः ३ हंसः ४ परमहंसश्चेति। तत्र प्रथमस्य वस्त्रमात्रं कषायः यज्ञोपवीतशिखादिकं तिष्ठति, गृहे पुत्रादिभिः सह एव संस्थितिः। द्वितीयस्य गृहाद् बहिः स्थितिः। शिखासूत्रयोः पूर्ववद्धारणम्, भिक्षापि पुत्रगृहे, काषायाम्बरधारणं च। तृतीयस्य शिखासूत्रत्यागः, दण्डधारणम्, काषायाम्बरधारणम्, गृहत्यागः, द्विजातिभ्यो भिक्षाग्रहणम्। चतुर्थस्य दण्डादित्यागोऽपि। सर्वसंन्यासः। केवलं काषायवस्त्रधारणम्। 'निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः' इत्येवं स्थितिस्तस्य। रावणस्तु कुटीचकरूपेण समागत आसीदिति शिखी यज्ञसूत्री च।

कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ॥"

इति युग्मादिलक्षणम् ।

हिन्दी—उनके चले जानेपर स्नान-जलसे पवित्र, साफ दाँतवाला, शिखा-धारी, बुरी बात सोचनेवाला, रुद्राक्षकी मालावाला, तीर्थकी मृत्तिका और तुम्बीके कमण्डलु करमें लिये हुए रावण आकर सीतासे बोला ।

व्याख्या—तस्मिन् लक्ष्मणे, गते निस्सृते (सति सप्तमी), जलशुचिः स्नाना-शुद्धः, शुद्धदन् शुक्लदशनः, शिखी शिखावान्, जञ्जपूकः गर्हितजापी, अक्ष-मालावान् रुद्राक्षमालाधारी, मृदलाबुनः तीर्थमृत्तिकालाबुफलकमण्डलुनः, धारयः धारयिता, रावणः दशग्रीवो राक्षसराजः, समागत्य उपेत्य, सीतां जानकीम्, उवाद ।

कोशः—'अस्त्री कमण्डलुः कुण्डी व्रतिनामासनं वृषी' ।
'इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे' ।

समासः—जलेन शुचिः । शुद्धा दन्ता यस्य स शुद्धदन् । बहुव्रीहौ 'अग्रान्त० ५।४।१४५' इति दन्तस्य दत्रादेशे 'उगिदचाम्० ७।१।७०' इति नुमि, सुलोपे, संयोगान्तलोपे रूपम् । संयोगान्तलोपस्यासिद्धया नलोपो न । मृच्च अलाबूश्च अनयोः समाहारः मृदलाबु इति । समाहारद्वन्द्वे 'जातिरप्राणिनाम् २।४।६' इत्येकवद्-भावे नुम् । अन्यथापि क्षिद्धिरधस्तद्धिते द्रष्टव्या । ततः समाहारद्वन्द्वान्नुम् ।

तद्धितान्तः—शिखा अस्यास्तीति विग्रहे 'व्रीह्यादिभ्यश्च ५।२।११६' इति इनौ शिखी । मालावान् इत्यत्र मतुप् । अलाब्वा विकारः फलम् अलाबु इति विग्रहे 'तस्य विकारः ४।३।१३४' इत्यधिकारे 'ओरञ् ४।३।०।३९' इत्यञि, तस्य 'फले लुक् ४।३।०६३' इति लुकि, 'ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७, इति ह्रस्वे अलाबु ।

कृदन्तः—गर्हितं जपतीति विगृह्य 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हा-याम् ३।१।२४' इति यङि 'जपजभदहदशभञ्जपशां च ७।४।८६' इति नुकि यङन्तात् धातोः 'यजजपदशां यङः ३।२।१६६' इति ऊकञि 'यस्य हलः ६।४।४९' इति यलोपे जञ्जपूकः । धारयतीति विगृह्य 'अनुपसर्गाल्लिम्प० ३।१।१३८' इति शे गुणकार्ये च धारयः ।

तिङन्तः—ब्रूञ् धातोः लिटि, 'ब्रुवो वचिः २।४।५३' इति वच्यादेशे, द्वित्वे, 'वचिस्वपि० ६।१।१५' इति सम्प्रसारणे ऊचे ।



वाच्यपरिवर्तनम्—जलशुचिना इत्यादिना रावणेन सीता ऊचे ॥ ६१ ॥

रावणमेव विशिनष्टि—

कमण्डलु-कपालेन शिरसा च मृजान्वता ।
संवस्त्य लाक्षिके वस्त्रे मात्राः संभाण्ड्य दण्डवान् ॥ ६२ ॥

अन्वयः—कमण्डलु-कपालेन मृजावता शिरसा च ( उपलक्षितः ) ल
वस्त्रे संवस्त्य मात्राः सम्भाण्ड्य दण्डवान् रावणः समागत्य सीतामूचे-इति
पद्येन पूर्ववदन्वयः ।

हिन्दी—कमण्डलु और कपाल—भिक्षापात्र तथा मुड़ाए शिरसे युक्त
वस्त्र पहनकर कमण्डलुप्रभृति वस्तुओंको इकट्ठा करके दण्डधारण किये हुए
आकर सीतासे बोला ।

व्याख्या—कमण्डलुकपालेन कुण्डिकर्परेण, च पुनः, मृजावता नि
शिरसा मूर्ध्ना ( उपलक्षितः ), लाक्षिके लाक्षया रक्ते गैरिके, वस्त्रे वा
संवस्त्य परिधाय, मात्राः कमण्डलुप्रभृतीः सामग्रीः, सम्भाण्ड्य रा
संगृह्येति यावत्, दण्डवान् दण्डी रावणः, समागत्य सीतामूचे इत्यन्वयः ।

कोशः—'स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च' ।
'त्रिषु क्रूरेऽधमेऽल्पेऽपि क्षुद्रं मात्रा परिच्छदे' । (कमण्डलुः ६१ श्लो

समासः—कमण्डलुश्च कपालं च तयोः समाहारः 'जातिरप्राणिनाम् २
इत्येकवद्भावः ।

कृदन्तः—वस्त्रात् समाच्छादनेऽर्थे 'मुण्डमिश्र० ३।१।२०' इति णिचि
क्त्वा प्रत्यये, समोपसर्गेण समासे, क्त्वो ल्यपि संवस्त्य । भाण्डात् समा
'पुच्छभाण्डचीवराण्णिङ् ३।१।२०' इति णिङि पूर्ववत् क्त्वो ल्यपि संभाण्ड्य

तद्धितान्तः—लाक्षया रक्तमित्यर्थे 'लाक्षारोचनात् ठक् ४।२।२' इति
लाक्षिके ।

वाच्यपरिवर्तनम्—उपलक्षितेन दण्डवता रावणेन सीता ऊचे ॥ ६२ ॥

पुनस्तमेव विशिनष्टि—

अधीयन्नात्म-विद्-विद्यां धारयन् मस्करि-व्रतम् ।
वदन् अङ्गुलि-स्फोटं भ्रू-क्षेपं च विलोकयन् ॥ ६३ ॥

अन्वयः—आत्मविद्विद्याम् अधीयन्, मस्करिव्रतम् धारयन्, अङ्गुलि
बहु वदन्, भ्रू-विक्षेपं च विलोकयन् रावणः समागत्य सीतामूचे ।

हिन्दी—आत्मज्ञानियोंकी विद्या (उपनिषदों) को पढ़ता हुआ, परि
के व्रतको धारण करता हुआ, अङ्गुलियोंको बजा बजाकर बहुत बोलता हु

ौंहको चला चला कर ( इधर उधर ) देखता हुआ रावण सीताके पास
ाकर बोला ।

व्याख्या—आत्मविद्विद्याम् आत्मज्ञानि-शास्त्रम् ( उपनिषदमिति यावत् ),
धीयन् अकृच्छ्रेण पठन्, मस्करिव्रतम्( 'शान्तिर्वः श्रेयसी भूयान्मा कर्माणि कुरुत'
ति मस्करिव्रतम्) परिव्राजकनियमम्, अकृच्छ्रेण धारयन् दधानः,अङ्गुलीः कर-
ाखाः स्फोटयित्वा स्फोटयित्वा, बहु प्रभूतम्, वदन् जल्पन्, भ्रूक्षेपम् भ्रुवम् क्षिप्त्वा
प्त्वा, (इतस्ततः) विलोकयन् पश्यन् रावणः, सीताम् आगत्य, ऊचे इत्यन्वयः ।

कोशः—'भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी' ।

'अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः प्रदेशिनी' ।

समासः—आत्मविदां विद्या इति ताम् । मस्करिणां व्रतम् इति मस्करिव्रतम् ।

कृदन्तः—अधीते इत्यर्थे अधिपूर्वाद् इङ् अध्ययने इति धातोः 'इङ्धार्योः
त्रकृच्छ्रिणि ३।२।१३०' इति उभयत्रापि शतृप्रत्ययः । ततो गणकृत्येन रूप-
द्धिः । अङ्गुलीः पुनः पुनः स्फोटयित्वा, भ्रुवम् पुनः पुनः क्षिप्त्वेति विगृह्यो-
यत्र 'स्वाङ्गेऽध्रुवे ३।४।५४' इति णमुलि अङ्गुलिस्फोटम्, भ्रूक्षेपम् ।

वाच्यपरिवर्तनम्—अधीयता धारयता वदता विलोकयता ( रावणेन सीता
चे ) ॥ ६३ ॥

उपसंहरति चतुर्थपद्येन—

संदिदर्शयिषुः साम निजुहनूषुः क्षपाट-ताम् ।
चंक्रमावान् समागत्य सीतामूचे—सुखाभव ॥ ६४ ॥

अन्वयः—साम सन्दिदर्शयिषुः, क्षपाटताम् निजुहनूषुः, चङ्क्रमावान् रावणः
मागत्य 'सुखाभव' इति सीताम् ऊचे ।

हिन्दी—शान्ति दिखानेकी इच्छावाला, राक्षसपनको छिपानेकी इच्छावाला,
ढ़ी-मेढ़ी चालसे चलनेवाला रावण समीप आकर मेरे अनुकूल हो जाओ (ऐसा)
तासे बोला ।

व्याख्या—साम सान्त्वम् शान्तिमित्यर्थः, संन्दिदर्शयिषुः प्रकाशयितुम् इच्छुः,
पाटताम् कौणपताम्, निजुहनूषुः गोपनेच्छुः, चङ्क्रमावान् कुटिलगतिको
वणः, समागत्य समीपमेत्य, सुखाभव ममानुकूलवर्त्तिनी भव, इति सीताम्
नकीम्, ऊचे जगाद । साधुत्वानुमाने आशीर्वादो हेतुरिति अनुमानालङ्कारः ।

कोशः—'साहसं तु दमो दण्डः साम सान्त्वमथो समौ' ।



कृदन्तः—सम्पूर्वकात् दृश्धातोः ण्यन्तात् सनि ततः 'सनाशंसभिक्ष उः ३।२।

१६८' इति उ-प्रत्यये सन्दिदर्शयिषुः । एवं हि निपूर्वात् ह्नुङ् अपनयने धातोः सन्नन्ताद्रूपम्, 'अज्झनगमां सनि ६।४।१६' इति दीर्घः निजुह्नूषुः।

तद्धितान्तः—यङन्तात् चङ्क्रमातः 'तदस्यास्त्यस्मिन्निति मतुप् ५।२।९४' मतुपि 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८।२।९' इति मस्य वत्वे चङ्क्रम शब्दस्य 'अत्वसन्तस्य चाधातोः ६।४।१४' इति दीर्घे 'उगिदचाम्० ७।१।७०' नुमि सुलोपे, संयोगान्तलोपे, तस्याऽसिद्धत्वान्नलोपाभावे चंक्रमावान् इति। शब्दात् 'सुखप्रियादानुलोम्ये ५।४।६३' इति डाचि, टिलोपे, सुखाभवेति

वाच्य०—सन्दिदर्शयिषुणा निजुह्नूषुणा चंक्रमावता रावणेन सीता ऊचे।

रावणो वदति युग्मेन—

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीम् ।
कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता ॥ ६५ ॥

अन्वयः—( हे वरवर्णिनि ! ) तिथिप्रण्यः सायन्तनीं, पङ्कजानां दिवा[तनीं] कान्तिम् ( स्वीयया ) सदातन्या कान्त्या ह्रेपयन्ती शुचिस्मिता त्वं केति अ[ग्रि]म अन्वयः ।

हिन्दी—( हे सुन्दरि ! ) चन्द्रमाकी सन्ध्याको होनेवाली, कमलोंकी दि[नमें] रहने वाली कान्तिको ( अपनी ) बराबर विद्यमान कान्तिसे लजानेवाली, सुन्[दर] मुस्कुराहटवाली तुम कौन हो ?

व्याख्या—तिथिप्रण्यः चन्द्रस्य, सायन्तनीम् सन्ध्याकालिकीम्, पङ्कजानां तामरसानाम्, दिवातनीम् दिनभवाम्, कान्तिम्, (स्वीयया) सदातन्या उभय कालस्थायिन्या, कान्त्या द्युत्या, ह्रेपयन्ती लज्जयन्ती, शुचिस्मिता सुन्दरेषद्धा[स्या] त्वम् काऽसि इति शेषः। कान्तिह्रेपनसाध्ये सदातनीत्वं हेतुरित्यनुमानम्, उपमा[ना]दुपमेयस्याधिक्यप्रदर्शनाद् व्यतिरेको वेति सन्देहसङ्करः ।

समासः—शुचि स्मितं यस्याः सा ।

कृदन्तः—तिथीः प्रणयतीति विग्रहे 'सत्सूद्विष० ३।२।६१' इति क्विपि 'उपसर्गादसमा० ८।४।१४' इति णत्वे, तिथिप्रणीशब्दस्य षष्ठ्येकवचने 'अ[चि श्]नु० ६।४।७७' इत्यपोद्य 'एरनेकाचोऽसंयोगपूर्वस्य ६।४।८२' इति यण् । ह्री लज्जायाम् इति धातोः णिचि, 'अर्तिह्री० ७।३।३६' इति पुकि ह्रेपि धातो[ः] शतरि ह्रेपयत् शब्दात् 'उगितश्च ४।१।६ इति ङीपि, 'शप्श्यनोर्नित्यम् ७।१।८[१]' इति नुम् ह्रेपयन्ती ।

तद्धितान्तः—सायंभवा, दिवाभवा, सदा भवेत्यर्थे 'सायंचिरंप्राह्णे[प्रगे]

।३।२३' इति ट्युप्रत्यये, तस्य अनादेशे, तुटः तकारयोगे, सायन्तन-दिवातन-दातन-शब्देभ्यः 'टिड्ढाणञ् ४।१।१५' इति ङीपि, सायन्तनी दिवातनी सदा-नीत्यादि रूपाणि ।। ६५ ।।

का त्वमेकाकिनी भीरु ! निरन्वय-जने वने ।
क्षुध्यन्तोऽप्यघसन् व्यालास् त्वामपालां कथं न वा ।। ६६ ।।

अन्वयः—हे भीरु ! निरन्वयजने वने एकाकिनी त्वम् का (असि) ? क्षुध्य-: व्यालाः अपि त्वाम् कथम् न अघसन् ?

हिन्दी—हे भीरु ? निर्जन वनमें अकेली तू कौन है ? तुम-सी अरक्षिता को खे खूंखार जानवरोंने कैसे नहीं खालिया ?

व्याख्या—हे भीरु भयशीले, निरन्वयजने नरसञ्चाररहिते, वने कानने, काकिनी असहाया, त्वम् अज्ञाता, का कतमा ? ( असि ) इति शेषः । क्षुध्यन्तः बुभुक्षिताः, व्यालाः श्वापदाः हिंस्रसत्त्वा इति यावत्, अपालाम् रक्षकरहितां, ामज्ञातां, कथम् कस्मान्न नहि, अघसन् आदन् ? भक्षणे व्याल-हेतोर्विद्यमानता-मपि कार्यासिद्धया विशेषोक्तिः ।

कोशः—'भेद्यलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयोः' ।

समासः—निर्गतः अन्वयः येषाम् ते निरन्वयाः । 'प्रादिभ्यो धातुजस्य वाच्यो चोत्तरपदलोपः २।२।८४' इति वार्तिकबलात्समासे निरन्वया जना यस्मिन् तत्, स्मन्, पुनर्बहुव्रीहिः । अविद्यमानः पालः यस्याः इति विग्रहेऽपि तथैव समासः ।

तद्धितः—असहाया एकाकिनी । 'एकादाकिनिच्चासहाये ५।३।५२' इति शब्दाद् आकिनिच् प्रत्यये एकाकिन्शब्दात् 'ऋन्नेभ्यो ङीप् ४।१।६' इति ङीपि काकिनी ।

कृदन्तः—क्षुध् धातोः शतरि, गणकृत्ये क्षुध्यत् शब्दाज्जसि, 'उगिदचाम्० ।१।७० इति नुमि क्षुध्यन्तः । पाल रक्षणे इति चौरादिकात् पचाद्यचि पालः ।

तिङन्तः—अद भक्षणे इति धातोर्लुङि 'लुङ्सनोर्घस्लृ २।४।३७' इति घस्ला- 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु ३।१।५५' इति च्लेरङि अडागमेऽघसन् ।

वाच्यपरिवर्तनम्—एकाकिन्या त्वया कया भूयते । क्षुध्यद्भिर्व्यालैरपाला कथं न अघस्थाः ।। ६६ ।।

रावणः सर्वमपि स्वमनोभावं विवृणोति—

हृदयङ्गम-मूर्तिस् त्वं सुभगं-भावुकं वनम् ।
कुर्वाणा भीममप्येतद् वदा ऽर्थः केन हेतुना ।। ६७ ।।

अन्वयः—हृदयङ्गममूर्तिः त्वम् भीमम् अपि एतत् वनम् सुभगम्भावुकम् कुर्वाणा केन हेतुना अभ्यैः, एतत् वद ।

हिन्दी—हृदयमें रमजाने वाले स्वरूप वाली, भयानक वनको भी रमणीय बनानेवाली तुम किस कारणसे यहाँ आयी हो ? यह बताओ ।

व्याख्या—हृदयङ्गममूर्तिः मनोहरकाया, त्वम् भवती, भीमम् भयानकम् अपि, वनम् अरण्यम्, सुभगम्भावुकम् सौम्यम्, कुर्वाणा विदधती, केन हेतुना कारणेन, अभ्यैः अभ्यगच्छः, एतद् इति, वद कथय । सुभगकरणे हृदयङ्गममूर्तित्वस्य हेतुत्वेनोक्तौ काव्यलिङ्गम् ।

कोशः—'मूर्तिः काठिन्य-काययोः' ।

'दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्' ।

समासः—हृदयङ्गमा मूर्तिः यस्याः सा इति बहुव्रीहौ 'स्त्रियाः पुंवद्० ६।३।३४' इति पुंवद्भावः ।

कृदन्तः—हृदयं गच्छतीत्यर्थे 'गमश्च ३।२।४७' इति खचि 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुमागमे, टापि हृदयङ्गमेति ( ६।१०९ पद्येऽपि ) । असुभगं सुभगं भवतीति विग्रहे 'कर्तरि भुवः खिष्णुच्खुकञौ ३।२।५७' इति खुकञि, पूर्वसूत्रेण मुमागमे सुभगम्भावुकम् ।

तिङन्तः—अभि पूर्वाद् इ धातोर्लङि सिपि 'सार्वधातुकार्द्धधातुकयोः ७।३।८२' इति गुणे, 'आडजादीनाम् ६।४।७२' इति आडागमे, 'आटश्च ६।१।९०' इति वृद्धौ अभ्यैः ।

वाच्य०—हृदयङ्गममूर्त्या त्वया कुर्वाणया अभ्यैयत एतद् उद्यताम् ॥ ६७ ॥

कामुको रावणः स्वसदृशमेव वाक्यं प्रयुङ्क्ते—

सुकृतं प्रियङ्कारी त्वं कं रहस्युपतिष्ठसे ।
पुण्यकृत् चाटुङ्कारस् ते किङ्करः सुरतेषु कः ॥ ६८ ॥

अन्वयः—प्रियकारी त्वम् रहसि कं सुकृतम् उपतिष्ठसे ? कः पुण्यकृद् सुरतेषु ते चाटुकारः किङ्करः ? ( भवतीति शेषः ) ।

हिन्दी—प्रिय करने वाली तुम एकान्तमें किस पुण्यशालीके पास रहती हो ? कौन पुण्यकारी सुरतकर्ममें तुम्हारी खुशामद करनेवाला दास बनता है ?

व्याख्या—प्रियकारी प्रियकारिणी, त्वम् भवती, रहसि विविक्ते एकान्ते, कम् अज्ञातं, सुकृतम् पुण्यवन्तम्, उपतिष्ठसे सङ्गच्छसि ? कः अज्ञातः, पुण्य

धर्मशीलः, सुरतेषु सङ्गमकर्मसु, ते तव, चाटुकारः प्रियवादी, किङ्करः परिचारकः ( कस्तव पतिरित्यर्थः ) अस्ति इति शेषः ॥ ६८ ॥

कोशः—'नियोज्य-किङ्कर-प्रैष्य-भुजिष्य—परिचारकाः'।

'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः।'

'रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु।'

समासः—सुशोभनानि रतानि सुरतानि। 'कुगतिप्रादयः ५।२।१८' इति समासः।

कृदन्तः—शोभनं कृतवान् इति विग्रहे सुपूर्वात् कृ धातोः 'सुकर्मपापमन्त्रपुण्येषु कृञः ६।२।८९' इति क्विपि सुकृत्, तम्। प्रियम् करोतीत्यर्थे 'क्षेमप्रियमद्रेऽण् च ३।२।४४ इत्यणि टिड्ढाणञ्द्वयसज्० ४।१।१५' इति ङीपि प्रियकारी। पुण्यकृत् पूर्ववत्साधु। 'न शब्दश्लोक० ३।२।१३' इति टे निषिद्धे, 'कर्मण्यण् ३।२।१' इत्यणि धातोर्वृद्धिः चाटुकारः। किङ्कर इत्यत्र 'दिवाविभा० ३।२।२१' इति टः।

तिङन्तः—उपपूर्वात् स्थाधातोः 'उपान्मन्त्रकरणे १।३।२५' इत्यात्मनेपदे लटि 'पाघ्राध्मा० ७।३।७८' इति तिष्ठादेशे उपतिष्ठसे।

वाच्य०—प्रियकार्या त्वया कः सुकृत् उपस्थीयते? केन पुण्यकृता ते चाटुकारेण किङ्करेण ( भूयते )? कवेः शाब्दिकप्रयोगप्रदर्शनचातुर्यमेव सर्वम् ॥ ६८ ॥

रावणः तां पुनः प्रशंसति—

परिपर्युदधे रूपमा-द्युलोकाच्च दुर्-लभम्।
भावत्कं दृष्टवत्स्वेतदस्मास्वधि सु-जीवितम् ॥ ६९ ॥

अन्वयः—उदधेः परिपरि आ द्युलोकात् च दुर्लभम् भावत्कम् एतद् रूपम् दृष्टवत्सु अस्मासु अधि सुजीवितम् अस्तीति शेषः।

हिन्दी—समुद्र तक ही नहीं पृथ्वीसे लेकर स्वर्गलोक तक दुर्लभ आपका यह रूप देखने वाले हमलोगों का जीवन सफल है।

व्याख्या—उदधेः सागरात्, परि परि उदधिम् उल्लङ्घ्येत्यर्थः, आद्युलोकात् स्वर्गम् अभिव्याप्य, दुर्लभम्, दुष्प्राप्यम्, भावत्कम् भवदीयम्, एतत् पुरो दृश्यमानम् समीपवर्तीति यावत्, रूपम् सौन्दर्यम्, दृष्टवत्सु निरीक्षितवत्सु, अस्मासु रावणादिषु, अधि अस्मदधिकरणम् अस्मत्स्वामिकमिति यावत् वा, सुजीवितम् साधुजीवनम् सफलमित्यर्थः। जीवनसाफल्ये दुर्लभरूपदर्शनहेतोरुक्तत्वात् काव्यलिङ्गम्।

कोशः—'उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः।'

तद्धितः—भवतः इदम् इति विग्रहे 'भवतष्ठक्छसौ ४।२।११४' इति ठकि

तस्य 'ठक्छसोश्च पुंवद्भावो वाच्यः ६।३।३५' इति वार्तिकेन आहो 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव': इति सामान्य-नियमात्पुंवद्भावे 'इसुसुक्तान्तात्कः ७।३।६१' इति ककारे, आदिवृद्धौ, भावत्कमिति रूपविशेषणम् ।

कारकः—उदधेः इत्यत्र 'अपपरी वर्जने १।४।८८' इति परेः कर्मप्रवचनीयत्वात् 'कर्मप्रवचनीययुक्ते द्वितीया २।३।८' इति प्राप्ते 'पञ्चम्यपाङ्परिभिः २।३।१०' इति तदपवादिनी पञ्चमी । 'अपपरिवहिरञ्चवः पञ्चम्या २।१।१२' इति विभाषोक्तेः समासाभावे 'परेर्वर्जने ८।१।५' इति द्विर्भावः । अस्मासु इत्यत्र 'अधिरीश्वरे १।४।९७' इति कर्मप्रवचनीयत्वे 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी २।३।९' परत्वात्सप्तमी । एवम् आद्युलोकात् इत्यत्र 'आङ् मर्यादावचने १।२।८९' इति वचनग्रहणादभिविधावपि कर्मप्रवचनीयत्वेऽपि 'पञ्चम्यपाङ्परिभिः २।३।१०' इति पञ्चमी । 'आङ् मर्यादाभिविध्योः २।१।१३' इति विभाषया समासाभावः ।

वाच्यपरिवर्तनम्—सुजीवितेन ( भूयते ) ॥ ६९ ॥

पुनरपि रावणस्तां स्तौति स्वभावानुसारम्—

आपीत-मधुका भृङ्गैः सुदिवेवाऽरविन्दिनी ।
सत्-परिमल-लक्ष्मीका नाऽपुंस्काऽसीति मे मतिः ॥ ७० ॥

अन्वयः—भृङ्गैः आपीनमधुका सुदिवा अरविन्दिनी इव सत्परिमललक्ष्मीका अपुंस्का न असि इति मे मतिः, अस्तीति शेषः ।

हिन्दी—भँवरोंसे जिसका मधु थोड़ासा चूसा गया है ऐसी तथा स्वच्छदिवसवाली कमलिनीके समान अच्छे परिमलकी सुगन्धियुक्त तुम पुरुषसम्बन्ध-शून्य नहीं हो, ऐसी मेरी धारणा है ।

व्याख्या—भृङ्गैः भ्रमरैः, आपीतमधुका ईषद् भुक्तपुष्परसा, सुदिवा शोभनदिवसा (रविकिरणशालिनीति यावत्), अरविन्दिनी कमलिनी, इव यथा, सत्परिमललक्ष्मीका विमर्दोत्थगन्धशालिनी, त्वम् भवती, अपुंस्का पुरुषसम्बन्धशून्या, न नहि, असि भवसि, इति इत्थं, मे मम रावणस्य, मतिः बुद्धिः, अस्तीति शेषः ।

कोशः—'द्विरेफ-पुष्पलिड्-भृङ्ग-षट्पद-भ्रमरालयः' ।
'मधुमद्ये पुष्परसे क्षौद्रेऽप्यन्धंतमस्यपि' ।
'विमर्दोत्थे परिमलो गन्धे जन-मनोहरे' ।

समासः—आपीतं मधु यस्याः सा । 'शेषाद्विभाषा ५।४।१५२' इति कपि, टाप् । सुशोभनं दिवा यस्याः सा 'सुप्रात० ५।४।१२०' इत्यचि, आलोपे टापि, सुदिवा । अविद्यमानः पुमान् यस्याः नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः

२।२।२४' इति वार्तिकत्वलात्समासे, अपुंस्–शब्दात् 'उरः प्रभृतिभ्यः कप् ५।४।१५१' इति कपि, टापि, अपुंस्का। सती परिमल-लक्ष्मीः यस्याः इति बहुव्रीहिः। 'स्त्रियाः० ६।३।३४' इति सतीत्यस्य पुंवद्भावः। 'नद्यृतश्च ५।४।१५३' इति कपि, टापि, 'न कपि ७।४।१४' इति ह्रस्वनिषेधः।

वाच्य०—आपीतमधुकयेत्यादिना न भूयते। इति मे मत्या भूयते ॥ ७० ॥

भूयस्तां तथैव स्तौति—

मिथ्यैव श्रीः श्रियंमन्या श्रीमन्मन्यो मृषा हरिः।
साक्षात्कृत्याऽभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः ॥ ७१ ॥

अन्वयः—अहम् श्रियः श्रियं हरन्तीं त्वां साक्षात्कृत्य श्रीः मिथ्या एव श्रियंमन्या, हरिः मृषा श्रीमन्मन्य इति अभिमन्ये।

हिन्दी—लक्ष्मीकी शोभाको हरनेवाली तुमसी रूपवतीको देखकर मैं 'लक्ष्मी अपनेको झूठे लक्ष्मी मानती है, हरि झूठे अपनेको लक्ष्मीवाला मानता है' यह दावेके साथ मानता हूँ।

व्याख्या—अहम् रावणः, श्रियः लक्ष्म्याः, श्रियम् रूपसम्पत्तिं, हरन्तीम् अभिभवन्तीं, त्वाम् पुरोवर्त्तिनीं=भवतीं, साक्षात्कृत्य वीक्ष्य, 'श्रीः लक्ष्मीः, मिथ्या मुधा एव, निश्चितम् श्रियंमन्या आत्मानम् लक्ष्मीम्मन्या, 'हरिः विष्णुः मृषा वृथा (आत्मानम्) श्रीमन्मन्यः लक्ष्मीवन्मानी', इति अभिमन्ये हठात् स्वीकरोमि। अनुप्रासच्छटयोत्प्रेक्षाऽर्थालङ्कारः।

कोशः—'सम्पत्तिः श्रीश्च लक्ष्मीश्च विपत्त्यां विपदापदौ'।
'आनुकूल्यार्थकं प्राध्वम् व्यर्थके तु वृथा मृषा'।

कृदन्तः—साक्षात् कृत्वेति विग्रहे 'साक्षात्प्रभृतीनि च १।४।७४' इति गतिसंज्ञायां 'कुगतिप्रादयः २।२।१८' समासे, 'समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७' इति ल्यबादेशे साक्षात्कृत्य। श्रियमात्मानं मन्यते इति विग्रहे 'आत्ममाने खश्च ३।२।८३' इति खशि 'इच एकाचोऽम्प्रत्ययवच्च ६।३।६८' इत्यमि 'अचि श्नुधातु० ६।४।७७' इति इयङि, श्रियम्मन्यशब्दाट्टाप्। एवमेव श्रीमन्तमात्मानं मन्यते इति श्रीमन्मन्ये खशादिर्ज्ञेयः। 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधे श्रियमित्यत्र द्वितीया।

वाच्यपरिवर्तनम्—श्रियंमन्यया श्रिया श्रीमन्मन्येन हरिणा मृषा भूयते इति अभिमन्यते ॥ ७१ ॥

तथैव तां स्तौति--

नोदकण्ठिष्यताऽत्यर्थम्, त्वामैक्षिष्यत चेत् स्मरः ।
खेलायन्ननिशं नापि सजूःकृत्य रतिं वसेत् ॥ ७२ ॥

अन्वयः—स्मरः त्वाम् ऐक्षिष्यत चेद् अत्यर्थम् न उदकण्ठिष्यत (रतिं प्रतीति शेषः), नापि अनिशम् खेलायन् रतिं सजूःकृत्य वसेत् ।

हिन्दी--कामदेव तुमको देखता तो रतिके लिये अत्यन्त उत्कण्ठित नहीं होता और न निरन्तर क्रीडा करता हुआ रतिको सहचरी बनाकर ही रहता ।

व्याख्या—स्मरः कामः, त्वाम् भवतीम्, ऐक्षिष्यत अवालोकयिष्यत, चेत् यदि, ( तदा ) अत्यर्थम् अत्यन्तम्, न उदकण्ठिष्यत उत्कण्ठितो न अभविष्यत् ( रतिं प्रति)। नापि नैव, अनिशम् अविरतम्, खेलायन् क्रीडन्, रतिं स्वप्रियाम् तन्नाम्नीम्, सजूःकृत्य सहचरीं विधाय, वसेत् तिष्ठेत् । चेच्छब्दोक्तौ अतिशयोक्तिरलङ्कारः ।

कोशः—'कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः' ।
'सततानारताश्रान्तसन्तताविरतानिशम्' ।

कृदन्तः—खेला विलासे इति धातोः शतरि 'कण्ड्वादिभ्यो यक् ३।१।२७' इति यक् प्रत्यये खेलायन् ।

तिङन्तः—ईक्ष दर्शने, कठि शोके इति भौवादिकात् क्रियातिपत्तौ लृङ् ऐक्षिष्यत । इदित्वान्नुमि कण्ठ इत्यस्योत्पूर्वस्य उदकण्ठिष्यत् । वस निवासे । हेतुहेतुमद्भावे लिङ्--वसेत् ।

वाच्य०—स्मरेण त्वमैक्षिष्यथाश्चेन्न उदकण्ठिष्यत । खेलायता न उष्येत ॥७२॥

पुनस्तथैव तां स्तौति—

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का ।
कान्तिं नाऽभिमनायेत को वा स्थाणु-समोऽपि ते ॥ ७३ ॥

अन्वयः---का स्त्री वल्गूयन्तीं त्वां विलोक्य इह न मन्तूयति ? कः स्थाणुसमः अपि ते कान्तिम् विलोक्य न अभिमनायेत ।

हिन्दी—कौन स्त्री शोभाशालिनी तुझे देखकर इस जगत्में डाह नहीं करती और कौन शिवके समान ( जितेन्द्रिय ) भी तुझे देखकर उत्कण्ठित नहीं हो जायगा ?

व्याख्या --का अज्ञाता, स्त्री नारी, वल्गूयन्तीं शोभमानाम्, त्वां भवतीं, विलोक्य वीक्ष्य, इह अत्र = जगति, न नहि, मन्तूयति असूयति । कः अज्ञातः ( ना ), स्थाणुसमः शिवतुल्यः, अपि सम्भावनीयः, ते तव, कान्तिम् द्युतिम्,

विलोक्य वीक्ष्य, न नहि, अभिमनायेत उत्सुकायेत। किन्तु सर्वोऽप्युत्सुकायेत एव इति काकुः। (भिन्नकण्ठध्वनिर्धीरः काकुरित्यभिधीयते)। स्फुटमुपमोत्प्रेक्षासङ्करः।

कोशः—'व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः'।

'स्थाणुः शर्वेऽप्यथ द्रोणः काकेऽप्याजौ रवे रणः'।

कृदन्तः—वल्गु पूजामाधुर्य्ययोः, मन्तु रोपे इत्युभाभ्यां कण्ड्वादिधातुभ्यां यत्तरि यकं कृत्वा 'अकृत्सार्वधातुकयोर्दीर्घः ७।४।२५' इति दीर्घत्वम्। अनभिमना अभिमना भवेदित्यर्थे 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ३।१।१२' इति क्यङि, सलोपे, अभिपूर्वान्मनाय-धातोः सम्भावनायां लिङ्।

वाच्य०—कया स्त्रिया न मन्तूय्यते, स्थाणुसमेन अपि न अभिमनाय्येत ॥७३॥

पुनरपि स्तौति—

दुःखायते जनः सर्वः स एवैकः सुखायते।
यस्योत्सुकायमाना त्वं न प्रतीपायसेऽन्तिके ॥ ७४ ॥

अन्वयः—सर्वः जनः दुःखायते, स एव एकः सुखायते यस्य अन्तिके उत्सुकायमाना त्वं न प्रतीपायसे।

हिन्दी—सभी मनुष्य दुःखका अनुभव कर रहे हैं। वही एक पुरुष सुखका अनुभव करता है, जिसके पास तुम उत्कण्ठापूर्वक अनुकूल होती हो।

व्याख्या—सर्वः समस्तः, जनः लोकः, दुःखायते दुःखम् वेदयते, स एव निश्चितः, एकः एकलः, सुखायते सुखम् वेदयते। यस्य अज्ञातस्य, अन्तिके अभ्यर्णे, उत्सुकायमाना उत्कण्ठायमाना त्वम्, न नहि, प्रतीपायसे प्रतिकूलायसे। स सुखायते इति। यतो माया त्वमेवेदृशी गुणवती यं प्रति विद्या भूत्वाऽनुकूला भवसीति प्रत्यभिज्ञासिद्धान्तो ध्वन्यते।

कोशः—'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्'।

तिङन्तः—'सुखादिभ्यः कर्तृवेदनायाम् ३।१।१२' इति क्यङ्। अप्रतीपा प्रतीपा भवसीति प्रतीपायसे। 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ३।१।१२' इति क्यङ्।

कृदन्तः—अनुत्सुका उत्सुका भवसीति उत्सुकायमाना इत्यर्थे पूर्ववत् क्यङि, शानचि रूपम्।

वाच्यपरिवर्तनम्—सर्वेण जनेन दुःखाय्यते। तेन एकेनैव सुखाय्यते। त्वया उत्सुकायमानया न प्रतीपाय्यते ॥ ७४ ॥

सम्प्रति उपसंहरन् प्रष्टव्यं पृच्छति—

क: पण्डितायमानस् त्वामादायाऽऽमिष-सन्निभाम् ।
त्रस्यन् वैरायमाणेभ्यः शून्यमन्ववसद् वनम् ॥ ७५ ॥

अन्वय:—पण्डितायमान: क: आमिषसन्निभाम् त्वाम् आदाय वैरायमाणेभ्यः त्रस्यन् शून्यं वनम् अन्ववसत् ।

हिन्दी—अपनेको पण्डित समझता हुआ कौन व्यक्ति तुझे कोमलाङ्गीको लेकर वैर करने वालोंसे डरता हुआ शून्य वनमें रहता है ?

व्याख्या—पण्डितायमान: अपण्डितोऽपि पण्डितम्मानी, क: अज्ञात:, आमिष-सन्निभाम् मांससदृशीम् ( राक्षसत्वादुक्तिरियम् ), त्वाम् त्वा भवतीम्, आदाय गृहीत्वा, वैरायमाणेभ्य: विरोधं कुर्वद्भ्य:, त्रस्यन् बिभ्यत्, शून्यं निर्जनम्, वनम् काननम्, अन्ववसत् अध्यवात्सीत् । इत्थं स्वाकूतं विवृण्वन् राममाक्षिपति । स्फुटमुपमालङ्कार: ।

कोश:—'पिशितं तरसं मांसं पललं क्रव्यमामिषम्' ।

समास:—आमिषेण सन्निभाम् । तृतीयेति योगविभागात्समास: । वैरायमाणेभ्य: इत्यत्र 'भीत्रार्थानां भयहेतु: १।४।२५' इत्यपादानत्वात् पञ्चमी । वनमित्यत्र 'उपान्वध्याङ् वस: १।४।४८' इति कर्मतया द्वितीया ।

कृदन्त:—अपण्डित: पण्डितो भवतीत्यर्थे भृशादित्वात् क्यङि पण्डिताय धातो: शानचि पण्डितायमान: । वैरं कुर्वन्तीत्यर्थे 'शब्दवैरकलहाभ्रकण्वमेघेभ्य: करणे ३।१।१७' इति क्यङि वैराय-धातो: शानचि वैरायमाणशब्दसिद्धि: ।

तिङन्त:—वस निवासे इति धातोर्लङि अनु-इत्युपसर्गयोगे अन्ववसत् ।

वाच्यपरिवर्तनम्—केन पण्डितायमानेन त्रस्यता वनम् अन्वौष्यत ।

शिक्षा—सर्व: स्वानुरूपं चेष्टते इत्येव शिक्षयति रावणप्रलाप: ॥ ७५ ॥

सम्प्रति रामाक्षेपात्मकेन तद्वचसोद्दीप्ता सीता ब्रूते—

ओजायमाना तस्याऽर्घ्यं प्रणीय जनकाऽऽत्मजा ।
उवाच दश-मूर्धानं साऽऽदरा गद्गदं वच: ॥ ७६ ॥

अन्वय:—ओजायमाना सादरा जनकात्मजा तस्य अर्घ्यं प्रणीय दशमूर्द्धानं सगद्गदं वच उवाच ।

हिन्दी—ओजस्विनीरूप धारणकर एवम् आदरसहित जनकपुत्री उसे अर्घ्य देकर रावणसे टूटती हुई गद्गद वाणीमें बोली ।



व्याख्या—ओजायमाना ओजस्विनी भवन्ती ( पतिमधिक्षिपतीति ओजाय-

मानत्वे हेतुः), सादरा सन्मानयन्ती (संन्यासिवेशोऽआदरे हेतुः), जनकात्मजा जनकपुत्री, (क्षत्रिय-पुत्रीत्वम् अर्घ्यप्रदाने हेतुः) अर्घ्यम् पूजाद्रव्यम्, प्रणीय प्रदाय, दशमूर्द्धानं रावणम्, सगद्गदम् असुव्यक्तम् (क्रोधाद् इति भावः), उवाच व्याजहार । उत्प्रेक्षा-काव्यलिङ्गसङ्करः ।

कोशः—'मूल्ये पूजाविधावर्घोऽहोदुःखव्यसनेष्वघम् ।'
'व्याहार उक्तिर्लपितं भाषितं वचनं वचः' ।

समासः—दश मूर्द्धानो यस्य सः । आदरेण सहिता सादरा । 'तेन सहेति तुल्ययोगे ६।२।२८' इति बहुव्रीहिसमासे 'वोपसर्जनस्य ६।३।८२' इति सादेशः । जनकस्य आत्मजेति षष्ठीतत्पुरुषः ।

कृदन्तः—ओजः (ओजस्विनी) इवाचरतीति विग्रहे (ओजःशब्दो वृत्तिविषये तद्वति ज्ञेय इति कथनमत्र प्रमाणम्) 'कर्तुः क्यङ् सलोपश्च ३।१।११' इति क्यङि 'ओजसोऽप्सरसो नित्यम् पयसस्तु विभाषया' इति नियमान्नित्यसकारलोपे ओजाय-धातोः शानचि, मुगागमे, टापि ओजायमाना । प्रणीयेति प्रादिसमासे, क्त्वा, तस्य स्थाने ल्यपि णत्वम् ।

तिङन्तः—ब्रूञ् व्यक्तायां वाचि इति धातोर्लिटि, वच्यादेशे, द्वित्वादिकार्ये 'लिट्यभ्यासस्योभयेषाम् ६।१।१७' इत्यभ्याससम्प्रसारणे उवाच ।

वाच्य०—ओजायमानया जनकात्मजया सादरया दशमूर्द्धा वचः ऊचे ।

शिक्षा—सती स्त्री कस्यामप्यवस्थायां स्वपत्यधिक्षेपं सोढुं नार्हति ॥ ७६ ॥

सीता सम्प्रति रामविक्रमं यथार्थतो वर्णयति विशेषकैः—

महा-कुलीन ऐक्ष्वाके वंशे दाशरथिर् मम ।
पितुः प्रियंकरो भर्ता क्षेम-कारस् तपस्विनाम् ॥
निहन्ता वैर-काराणां सतां बहु-करः सदा ।
पारश्वधिक-रामस्य शक्तेरन्तकरो रणे ॥
अध्वरेष्विष्टिनां पाता पूर्ती कर्मसु सर्वदा ।
पितुर्नियोगाद् राज-स्वं हित्वा योऽभ्यागमद् वनम् ॥ ७७–७९ ॥

अन्वयः—महाकुलीनः ऐक्ष्वाके वंशे दाशरथिः मम भर्ता (अस्ति) । पितुः प्रियङ्करः, तपस्विनां क्षेमकारः, वैरकाराणां निहन्ता, सतां सदा बहुकरः, रणे पारश्वधिकरामस्य शक्तेः अन्तकरः, अध्वरेषु इष्टिनां पाता, सर्वदा कर्मसु पूर्ती, यः पितुः नियोगाद् राज्यं हित्वा वनम् अभ्यागमत् ।



हिन्दी—पिताके प्रियकारी, तपस्वियोंके कल्याणकर्ता, वैरियोंके घातक,

सज्जनोंके सर्वदा अनेक कार्य करनेवाले, संग्राममें परशुरामकी शक्तिका अन्त करनेवाले, यज्ञोंमें यज्ञकर्ताओंके रक्षक, सदा-इष्टापूर्त कामोंके करनेवाले, महान् कुल में उत्पन्न, इक्ष्वाकु वंशीय दशरथजीके पुत्र (श्रीराम) मेरे पति ( हैं ), जो पिता की आज्ञासे राज्य छोड़कर वनमें आकर रह रहे हैं।

व्याख्या—महाकुलीनः महाकुलोत्पन्नः, ऐक्ष्वाके इक्ष्वाकुनाम्नो राज्ञः सम्बन्धिनि, वंशे अन्वये, दाशरथिः दशरथनाम्नो राज्ञ आत्मजः (रामः), मम सीतायाः भर्ता पतिः, पितुः जनकस्य, प्रियङ्करः अभीप्सितकर्ता, तपस्विनां तापसानाम् क्षेमकारः कल्याणकर्ता, वैरकाराणाम् कलहकारिणाम्, निहन्ता घातकः, सतां सज्जनानाम्, सदा सर्वदा, बहुकरः अनेककार्य्यसाधकः, रणे युधि, पारश्वधिकरामस्य परशुधारकस्य रामस्य परशुरामस्येत्यर्थः, शक्तेः पराक्रमस्य, अन्तकरः नाशकः, अध्वरेषु यागेषु, इष्टिनां यज्वनाम्, पाता गोप्ता, सर्वदा सदा, कर्मसु कार्य्येषु, पूर्ती पूरणकर्ता ( इष्टापूर्तादिना ), यः मे भर्ता, पितुः स्वतातस्य, नियोगात् आदेशतः, राज्यम् प्राप्तं राज्याभिषेकम्, हित्वा त्यक्त्वा, वनम् काननम्, अभ्यागमत् अगात्। उदात्तालङ्कारः।

कोशः—'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः'।
'शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता'।
'वापीकूपतडागादिनिर्माणं पूर्तमुच्यते'।
'वहिर्वेदि च यद्दानमिष्टमित्युच्यते बुधैः'।
'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्'।

समासः—पारश्वधिकश्चासौ रामः पारश्वधिकरामः। कर्मधारयसमासः। महत् कुलम् यस्य स महाकुलः, तस्यापत्यम् इत्यर्थे 'महाकुलादञ्खञौ ३।१।१४१' इति खञि तस्येनादेशे महाकुलीनः।

तद्धितः—इक्ष्वाकूणामयम् ऐक्ष्वाकः—'तस्येदम् ४।३।१२९' इत्यणि 'दाण्डिनायन० ४।४।१७४' इति टिलोपनिपातनम्। परश्वधः प्रहरणमस्येत्यर्थे परश्वधाट्ठञ्च ४।४।५८' इति ठञि पारश्वधिकः। इष्टमेभिरिति विग्रहे 'इष्टादिभ्यश्च ५।२।८८' इति इनिः। 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् २।३।३६' इति वार्तिकबलात् अध्वरेष्विति सप्तमी। इष्टिनामिति तु पातेति कृद्योगे कर्मणि षष्ठी। पूर्ती इति तु पृणातेर्निष्ठायाम् 'उदोष्ठ्यपूर्वस्य ७।१।१०२' इत्युत्वे 'हलि च ८।२।७७' इति दीर्घे, 'न ध्याख्या... ८।२।५७' इति निष्ठानत्वप्रतिषेधः, ततः पूर्वादिनिप्रत्ययः। कर्मसु इति सप्तम्यपि पूर्ववदेव।

कृदन्तः—'क्षेमप्रियमद्रेऽण् च ३।२।४४' इत्यणि क्षेमकारः। खचि च प्रियङ्करः। 'दिवाविभा० ३।२।२१' इति टे, बहुकरः। निहन्तेति 'ण्वुल्तृचौ ३।१।१३३' इति तृज्ज्ञेयः।

तिङन्तः—अभि-आङ्-पूर्वात् गम्लृ गतौ इति धातोः 'पुषादिद्युताद्यॢदितः परस्मैपदेषु ३।१।५५' इति च्लेरङि अभ्यागमत्।

वाच्यपरिवर्तनम्—महाकुलीनेन दाशरथिना भर्त्रेत्यादि रामविशेषणे तृतीया। वनम् अभ्यगामि ॥ ७७–७९ ॥

रावणोत्तापकं वचो वक्ति सीता—

पतत्रि-क्रोष्टु-जुष्टानि रक्षांसि भय-दे वने।
यस्य बाण-निकृत्तानि श्रेणीभूतानि शेरते ॥ ८० ॥

अन्वयः—भयदे वने यस्य बाणनिकृत्तानि पतत्रिक्रोष्टुजुष्टानि रक्षांसि श्रेणीभूतानि शेरते ( इति पश्येति शेषः )।

हिन्दी—भयङ्कर वनमें जिनके बाणसे काटे गये पक्षियों और सियारोंके भक्ष्य बने हुए राक्षस पंक्तिबद्ध हो सो रहे हैं।

व्याख्या—भयदे भीतिदातृणि, वने अरण्ये, यस्य मे भर्तुः, बाणनिकृत्तानि शरच्छिन्नानि, पतत्रिक्रोष्टुजुष्टानि शकुन्तशृगालभक्ष्यमाणानि, रक्षांसि यातूनि, श्रेणीभूतानि पङ्क्तिशः, शेरते स्वपन्ति (गत्वा पश्येति शेषः)। भाविकालङ्कारः।

कोशः—'शकुन्त-पक्षि-शकुनि-शकुन्ति-शकुन-द्विजाः'।
'पतत्रिपत्रिपतग-पतत्पत्त्ररथाण्डजाः'।
'शृगाल-वञ्चक-क्रोष्टु-फेरु-फेरव-जम्बुकाः'।

समासः—बाणैः निकृत्तानि बाणनिकृत्तानि 'तृतीया० २।१।३०' इति योग-विभागात्समासः। पतत्रिणश्च क्रोष्टारश्च पतत्रिक्रोष्टारः, तैः जुष्टानि।

कृदन्तः—निपूर्वात् कृती छेदने इति धातोः कर्मणि क्तप्रत्यये सिद्धेन निकृत्त-शब्देन समासः। जुषी प्रीति-सेवनयोः इति धातोस्तथैव क्ते जुष्टानि।

तिङन्तः—शीङ् स्वप्ने इति आदादिकस्य लटि 'शीङो रुट् ७।१।६' इति रुडागमे 'शीङः सार्वधातुके गुणः ७।४।२१' इति गुणे शेरते।

वाच्यपरिवर्तनम्—पतत्रिजुष्टैः बाणनिकृत्तैः रक्षोभिः श्रेणीभूतैः शय्यते ॥८०॥

सीता पुनरपि रामं विवृणोति—

दीव्यमानं शितान् बाणानस्यमानं महा-गदाः।
निघ्नानं शात्रवान् रामं कथं त्वं नावगच्छसि ॥ ८१ ॥



१ भट्टि० द्वि०

अन्वयः—त्वम् शितान् बाणान् दीव्यमानम्, महागदाः अस्यमानम्, शात्रवान् निघ्नानम् रामम् कथं न अवगच्छसि ? ( इत्याश्चर्य्यमिति शेषः ) ।

हिन्दी—तुम तीखे बाणोंका प्रहार करने वाले, बड़ी गदाओंको फेंकने वाले, शत्रुओंको मार गिराने वाले रामको कैसे नहीं जानते हो ? (यह) तो आश्चर्य्य है।

व्याख्या—त्वम् रावणः, शितान् तीक्ष्णान्, बाणान् इषून्, दीव्यमानम् व्यवहरन्तम्, महागदाः वृहतः अस्त्रविशेषान्, अस्यमानम् तच्छीलं क्षिपन्तम्, शात्रवान् अरिसङ्घान्, निघ्नानं हन्तुं शीलम्, रामं राघवं, कथम् केन प्रकारेण, न नहि, अवगच्छसि जानासि (इत्याश्चर्यम्) । अवगमनस्य कारणसत्त्वेऽप्यवगमाभावाद् विशेषोक्तिः ।

कोशः—'पृषत्कबाणविशिखा अजिह्मगखगाशुगाः' ।
'कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ॥'

समासः—महत्यश्च ताः गदाः महागदाः, कर्मधारये 'पुंवत्कर्मधारयजातीयदेशीयेषु ६।३।४२' इति पुंवद्भावे, 'आन्महतः समानाधिकरणजातीययोः ६।३।४६' इत्यात्वे दीर्घे, जसि रूपम् ।

तद्धितः—शत्रव एव इत्यर्थे 'प्रज्ञादिभ्यः ५।४।३८' इति स्वार्थे अणि आदिवृद्धौ, 'ओर्गुणः ६।४।१४६' इति गुणावादेशौ ।

कृदन्तः—दीव्यमानम् अस्यमानम् निघ्नानमिति त्रिष्वपि परस्मैपदिषु धातुषु 'ताच्छील्यवयोवचन० ३।२।१२९' इति चानशि, शित्वात् सार्वधातुकतया यथाक्रमम् गणकृत्ये, दीव्यमानम् अस्यमानम्; 'गमहन० ६।४।९८' इति उपधालोपे, 'हो हन्तेः० ७।३।५४' इति कुत्वे निघ्नानम् ।

वाच्य०—दीव्यमानः अस्यमानः निघ्नानो रामः त्वया कथं नावगम्यते ।८१।

सीताऽदृष्टनुन्ना स्वयं रावणाभीष्टं स्वीयमेकाकिनीत्वं सूचयति—

भ्रातरि न्यस्य यातो मां मृगाविन् मृगयामसौ ।
एषितुं प्रेषितो यातो मया तस्या ऽनुजो वनम् ॥ ८२ ॥

अन्वयः—मृगाविन् असौ ( मद्भर्ता ) मां भ्रातरि न्यस्य मृगयां यातः । मया प्रेषितः तस्य अनुजः एषितुम् (तमिति शेषः) वनं यातः ( इत्थम् अहमेकाकिनी अस्मीति स्वयं सा तत्कामिनं तं सूचयतीति अहो अदृष्टमहिमा ) ।

हिन्दी—मृगके शिकारी मेरे पतिदेव मुझे अपने भाईके अधीन कर शिकारको चले गये हैं। मेरे भेजने पर उनके भाई भी उनको ढूंढनेके लिए वन चले गये हैं।



व्याख्या—मृगाविद् मृगव्याधः, असौ मद्भर्ता, भ्रातरि अनुजे, मां सीतां

न्यस्य समर्प्य (रक्षार्थमिति शेषः), मृगयाम् आखेटम्, यातः गतः। मया सीतया, प्रेषितः प्रेरितः, तस्य मद्भर्तुं रामस्य, अनुजः कनिष्ठः ( लक्ष्मण इत्यर्थः ), एषितुम् ज्ञातुम् (तमिति शेषः), वनम् काननम्, यातः गतोऽस्ति। काव्यलिङ्ग समालङ्कारश्च, अतः सन्देहसङ्करः।

कोशः—'आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्।'
'जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः।'

कृदन्तः—( २।७ श्लोके द्रष्टव्यो मृगाविध् शब्दः ) मृगाणाम् अन्वेषणम् इत्यर्थे 'भावे परिचर्य्या-परिसर्या-मृगयाऽटाट्यानामुपसंख्यानम् ३।३।१०१' इति वार्तिकेन निपातनात् मृगया-शब्दः सिध्यति। अनु पश्चाज्जात इत्यर्थे 'अन्येष्वपि दृश्यते ३।२।१०१' इति डे अनुजः।

वाच्यपरिवर्तनम्—मृगाविधा अमुना मृगयां यातेन ( भूयते ) वा मृगया याता। प्रेषितेन अनुजेन वनम् यातेन ( भूयते )।

शिक्षा—अदृष्टानुगो लोकः स्वयं स्वाहितमपि करोतीति॥ ८२॥

ज्ञातसारो रावणो निर्भयः क्रुद्धो वक्ति—

अथाऽऽयस्यन् कषायाऽक्षः स्यन्न-स्वेद-कणोल्वणः।
संदर्शिताऽन्तराकूतस् तामवादीद् दशाननः॥ ८३॥

अन्वयः—अथ आयस्यन् कषायाक्षः स्यन्नस्वेदकणोल्वणः सन्दर्शितान्तराकूतः दशाननः ताम् अवादीत्।

हिन्दी—सीताके कथनके बाद विचलित होता हुआ, क्रोधसे लाल नेत्रवाला, पसीनेसे लथपथ भीतरी अभिप्रायको प्रगट करता हुआ दशानन उससे बोला।

व्याख्या—अथ सीता-कथनानन्तरम्, आयस्यन् क्रोधादुच्चलन्, कषायाक्षः रक्तनेत्रः, स्यन्नस्वेदकणोल्वणः स्विन्नगात्रोदबिन्दुव्याप्तः, सन्दर्शितान्तराकूतः प्रकटितान्तराभिप्रायः, दशाननः दशास्यो रावण इत्यर्थः, ताम् सीताम्, अवादीत् अवोचत्। साकूतविशेषणतया परिकरः।

कोशः—'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्'।
'रागे क्वाथे कषायोऽस्त्री'-इति यादवः।

समासः—कषाये अक्षिणी यस्य सः बहुव्रीहौ 'सक्थ्यक्ष्णोः० ५।४।११३' इति षचि, 'नस्तद्धिते ६।४।१४४' इति टिलोपे कषायाक्षः। स्वेदानां कणाः स्वेदकणाः, तैरुल्वणः स्यन्नस्वेदकणोल्वणः।



कृदन्तः—यसु प्रयत्ने इति दैवादिकात् आङ् पूर्वात् शतरि आयस्यन्।

प्रस्रवणे इति धातोः क्ते 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८।२।४२' इति ध प्रत्ययदतोर्नत्वे स्यन्नः ।

तिङन्तः—अवादीत्—इत्यत्र वद व्यक्तायां वाचि इति धातोर्लुङि 'वदव्र ७।२।३' इति वैकल्पिकवृद्धिबाधिका वृद्धिः ।

वाच्यपरिवर्तनम्—आयस्यता कषायाक्षेण स्यन्नस्वेदकणोल्वणेन दशान साऽवादि ॥ ८३ ॥

उदरपूरं रामं निन्दति क्रुद्धो दशास्यः—

> कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम् ।
> को नग्न-मुषित-प्रख्यं बहु मन्येत राघवम् ॥ ८४ ॥

अन्वयः—कः कानिष्ठिनेयस्य कृते विवासितम् ज्यैष्ठिनेयम् नग्नमुषितप्रख्यं राघवम् बहु मन्येत ?

हिन्दी—कौन छोटी रानीके पुत्र (भरत) के लिये निकाल दिये गये बड़ी रानीके पुत्र नंगे निर्धनीके समान रामको बहुत मानेगा ?

व्याख्या—कः अज्ञातः, कानिष्ठिनेयस्य कनिष्ठाऽपत्यस्य भरतस्येत्यर्थः, कृते कार्याय, विवासितम् प्रवासितं, ज्यैष्ठिनेयं ज्येष्ठापत्यम्, नग्नमुषितप्रख्यम् लुण्ठित दिगम्बरतुल्यं, राघवं रामम्, बहु, (इति अव्ययम् क्रियाविशेषणं वा) अधिक मन्येत अवबुध्येत । न कोऽपि इति काकुः । अनुमानालङ्कारोऽत्र । विवासनादब मन्यत्वसाध्ये प्रख्यशब्दादुपमापीति सङ्करः ।

कोशः—'तूष्णींशीलस्तु तूष्णीको नग्नोऽवासा दिगम्बरे' ।

समासः—पूर्वं मुषितः पश्चान्नग्नः इति विग्रहे 'पूर्वकालैक० २।१।४९' इति समासे 'राजदन्तादिषु परम् २।२।३१' इति मुषितस्य परनिपाते नग्नमुषितः प्रख्या यस्य सः नग्नमुषितप्रख्यः तमिति व्यधिकरण-बहुव्रीहि-रूपम् ।

तद्धितः—कनिष्ठाया ज्येष्ठाया अपत्यमिति विग्रहे 'कल्याण्यादीनामिनङ् ४। १२६' इति ढकि, अन्त्यस्येनङादेशे च, आदिवृद्धौ कानिष्ठिनेय-ज्यैष्ठिनेयशब्दसिद्धिः

वाच्य०—केन विवासितो नग्नमुषितप्रख्यो राघवो बहु मन्येत ॥ ८४ ॥

तथैव तं न्यञ्चं करोति—

> राक्षसान् वटु-यज्ञेषु पिण्डी-शूरान् निरस्तवान् ।
> यद्यसौ कूप-माण्डूकि ! तवैतावति कः स्मयः ॥ ८५ ॥

अन्वयः—अयि कूपमाण्डूकि ! असौ वटुयज्ञेषु पिण्डीशूरान् राक्षसान् निरस्तवान्, एतावति तव कः स्मयः ?

हिन्दी—उसने कुब्राह्मणोंके यज्ञोंमें खानेमेंही बहादुर राक्षसोंको मारा है। हे कूपमाण्डूकि ! इसमें तुम्हे क्यों गर्व होता है ?

व्याख्या—अरे कूपमाण्डूकि अन्धुदर्दुरि ! असौ रामः, वटुयज्ञेषु कुब्रह्मोद्देषु, पिण्डीशूरान् भोजनभट्टान्, राक्षसान् यातुधानान्, यदि चेत्, निरस्तवान् पराजितवान्, एतावति एतावन्मात्रे कार्य्ये, तव कूपमाण्डूक्याः, कः अद्भुतः, स्मयः दर्पः ? न किमपि दर्पावहमिदं कार्य्यम् ? विना हेतुं कार्योत्पत्तिरिति विभावना।

कोशः—'पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा'।

'दर्पोऽवलोपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः'।

'गेहेनर्दी गृहेशूरः पिण्डीशूरश्च कथ्यते'।

समासः—पिण्ड्यामेव शूराः पिण्डीशूराः, तान्। कूपे माण्डूकी इवेति कूपमाण्डूकी तत्सम्बुद्धौ। उभयत्रैव 'पात्रेसमितादयश्च २।१।४८' इति समासः।

तद्धितः—मण्डूकस्यापत्यं स्त्री माण्डूकी 'ढक् च मण्डूकात् ४।१।११९' इति अणि, आदि वृद्धौ, 'टिड्ढाणञ्० ४।१।१५' इति ङीप्। एतत् परिमाणमस्येत्यर्थे 'यत्तदेतेभ्यः परिमाणे वतुप् ५।२।३८' इति वतुपि 'आ सर्वनाम्नः ६।३।९१' इति एतद आत्वे एतावति।

कृदन्तः—स्मि धातोः भावे 'एरच् ३।३।५६' स्मयः। धातूनामनेकार्थत्वाद-र्थान्तरम्।

वाच्यपरिवर्तनम्—अमुना पिण्डीशूरा राक्षसा यदि निरस्ताः तव केन स्मयेन ( भूयते ) ॥ ८५ ॥

सम्प्रति शिष्टगर्हितामात्मप्रशंसां तनोति—

मत्–पराक्रम–संक्षिप्त–राज्य–भोग–परिच्छदः।
युक्तं ममैव किं वक्तुं दरिद्राति यथा हरिः ॥ ८६ ॥

अन्वयः—हरिः मत्पराक्रम-संक्षिप्त-राज्य-भोग-परिच्छदः यथा दरिद्राति, ( तत् ) मम एव वक्तुम् युक्तं किम् ?

हिन्दी—राज्य और भोग सामग्रीका अपहरण होनेसे मेरे पराक्रमके द्वारा जिस प्रकार इन्द्र दरिद्र बन गया है, क्या यह मुझे ही कहना चाहिए ? ( नहीं )।

व्याख्या—हरिः इन्द्रः, मत्पराक्रम-संक्षिप्त-राज्यभोगपरिच्छदः रावण-विक्रमाऽपहृतराजकर्म-विलाससाधनः, यथा यद्वद्, दरिद्राति अकिञ्चनोऽस्ति, तत् एतद्, मम रावणस्य एव निश्चितम् वक्तुम् कथयितुम्, युक्तम् उचितम् किम् ? उक्तनिषेधादाक्षेपालङ्कारः।

कोशः—'यमानिलेन्द्र-चन्द्रार्क-विष्णु-सिंहांशुवाजिषु ।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' ॥
'शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता ।'

समासः—मम पराक्रमः मत्पराक्रमः । भोगस्य परिच्छदाः=भोगपरिच्छदा राज्यं च भोगपरिच्छदाश्च राज्यभोगपरिच्छदाः । मत्पराक्रमेण संक्षिप्ता रा भोगपरिच्छदाः यस्येति त्रिपद-बहुव्रीहिः ।

तिङन्तः—दरिद्रा दुर्गतौ इति आदादिकाद्धातोर्लटि दरिद्राति ।

वाच्यपरिवर्तनम्—हरिणा यथा दरिद्र्यते तेन युक्तेन ( भूयते ) किम् ( नहि ) । अत्र 'दरिद्रातेरार्द्धधातुके लोपो वक्तव्यः ६।४।११४' इति वार्ति बलादाकारलोपः ॥ ८६ ॥

स पुनरात्मानं प्रशंसति—

निर्-लङ्को वि-मदः स्वामी, धनानां हृत-पुष्पकः ।
अध्यास्तेऽन्तर्-गिरं यस्मात्, कस् तन् नाऽवैति कारणम् ॥ ८७ ॥

अन्वयः—धनानां स्वामी निर्लङ्कः हृतपुष्पकः विमदः सन् यस्मात् अन्त गिरम् अध्यास्ते, कः तत् कारणम् न अवैति ? ( सर्वं एवावैति इति काकुः ) ।

हिन्दी—धनोंके स्वामी कुबेर लङ्का छोड़कर गर्वरहित हो तथा पुष्प विमानके छिन जानेसे पर्वतोंके बीचमें रहते हैं, कौन उसका कारण नहीं जानता ? ( सभी तो जानते हैं ) ।

व्याख्या—धनानां वित्तानां, स्वामी ईश्वरः ( कुबेर इति यावत् ), निर्लङ्क त्यक्तस्वर्णपुरः, हृतपुष्पकः अपाकृतपुष्पकविमानः, विमदः निरुत्साहः, सन् भव यस्मात् यतः कारणात्, अन्तर्गिरम् कैलासमध्यम् (अलकापुरमित्यर्थः), अध्यास्ते अधिवसति । कः अज्ञातः, तत्कारणम् तं हेतुम्, न नहि, अवैति जानाति अहमेव तत्र कारणमिति सर्वं एव जानातीत्यर्थः ।

कोशः—'कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः ।
मनुष्यधर्मा धनदो राजराजो धनाधिपः' ॥
'कैलासस्थानमलका पूर्विमानं तु पुष्पकम्' ।

समासः—लङ्काया निर्गतः निर्लङ्कः । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या २।२।१९' इति वार्तिकबलात्समासे 'गोस्त्रियोरुपसर्जनस्य १।२।४८' इति ह्रस्वः । विगतो मदो यस्य सः । हृतं पुष्पकं यस्य स इति 'बहुव्रीहौ 'निष्ठा २।२।३६' इति पूर्वनिपातः । गिरौ इति विभक्त्यर्थेऽव्ययीभावे अन्तर्गिरि शब्दस्य. गिरश्च सेन

५।४।११२' इति टचि, अन्तर्गिरशब्दस्य 'अधिशीङ्स्थासां कर्म १।४।४६' इति कर्मसंज्ञायाम् 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः २।४।८३' इति अम्भावे अन्तर्गिरम् ।

तिङन्तः—अधिपूर्वात् आसुं उपवेशने इति आदादिकस्य लटि अध्यास्ते । अवपूर्वात् इण् गतौ इति धातोर्लटि पररूपापनोदिका 'एत्येधत्यूठ्सु ६।१।८९' इति वृद्धिः अवैति ।

वाच्यपरिवर्तनम्—स्वामिना निर्लङ्केन हृतपुष्पकेण विमदेन ( सता ) अन्तर्गिरमध्यास्यते, तत् कारणम् केन नावेयते ॥ ८७ ॥

सम्प्रति यमात्स्वोत्कर्षमाख्याति—

भिन्न-नौक इव ध्यायन् मत्-तो विभ्यद् यमः स्वयम् ।
कृष्णि-मानं दधानेन मुखेनाऽऽस्ते निरुद्यतिः ॥ ८८ ॥

अन्वयः—स्वयं मत्तो विभ्यद् यमः भिन्ननौकः इव ध्यायन् कृष्णिमानं दधानेन मुखेन निरुद्यतिः आस्ते ।

हिन्दी—अपने आप मुझसे डरते हुए यमराज काले मुखवाले ( चिन्तामग्न हो) उसी प्रकार निरुद्योगी बन बैठे हैं, जिस प्रकार जहाज डूब जानेपर व्यापारी।

व्याख्या—स्वयम् साक्षात्, मत्तः रावणात्, विभ्यत् त्रस्यन्, यमः शमनः, भिन्ननौकः भग्नपोतः वणिग्, इव यथा, ध्यायन् शोचन्, कृष्णिमानं मालिन्यं, दधानेन दधता, मुखेन लपनेन लक्षित', निरुद्यतिः त्यक्तोद्योगः, आस्ते तिष्ठति । उपमालङ्कारः ।

समासः—भिन्ना नौर्यस्य स इति बहुव्रीहौ 'उरः प्रभृतिभ्यः कप् ५।४।१५१' इति कप् । निर्गता उद्यतिर्यस्य सः । 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः २।२।२४' इति बलात् समासे, गतशब्दलोपे च निरुद्यतिः ।

तद्धितः—कृष्णस्य भावः कृष्णिमा 'वर्णदृढादिभ्यः ष्यञ्च ५।१।१२३' इति मादिमनिच्-प्रत्यये कृष्णिमन् शब्दः सिध्यति । मुखेनेत्यत्र 'इत्थम्भूतलक्षणे २।३।२१' इति तृतीया ।

कृदन्तः—उत् पूर्वात् यम उपरमे इति धातोः 'स्त्रियां क्तिन् ३।३।९४' इति क्तिनि, 'अनुदात्तोपदेशवनति० ६।४।३७' इति मलोपे उद्यतिः ।

वाच्य०—विभ्यता यमेन भिन्ननौकेन ध्यायता निरुद्यतिना आस्यते ॥८८॥

सम्प्रति साक्षादात्मानं प्रशंसति—

समुद्रोपत्यका हैमी पर्वतोऽधित्यका पुरी ।
रत्न-पारायणं नाम्ना लङ्केति मम मैथिलि ! ॥ ८९ ॥

अन्वयः—अरे मैथिलि ! समुद्रोपत्यका पर्वताधित्यका रत्नपारायणम् हैमी लङ्का इति नाम्ना मम पुरी ( अस्ति इति शेषः ) ।

हिन्दी—अरे मैथिलि ! समुद्रसे घिरी त्रिकूटाचलके ऊपर स्थित, रत्नोंकी खान, सोनेकी लङ्का नामकी मेरी पुरी है ।

व्याख्या—अरे मैथिलि जानकि ! समुद्रोपत्यका सागरपरिखा, पर्वताधित्यका त्रिकूटाचलोपरि स्थिता, रत्नपारायणम् सर्वोत्कृष्टमणि-शालिनी रत्नश्रेष्ठस्थानमित्यर्थः, हैमी सुवर्णमयी, लङ्का, इति इत्थं, नाम्ना अभिधानेन, मम रावणस्य पुरी राजधानी अस्ति ।

कोशः—'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ।'
'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' ।

समासः—समुद्रस्य उपत्यका या सा, पर्वतस्य अधित्यका या सा इत्यत्र कप्रत्ययाभावात् 'प्रत्ययस्थात्० ७।३।४४' इतीकारो न ।

तद्धितः—हेम्नः विकार इत्यर्थे 'प्राणिरजतादिभ्योऽञ् ४।३।१५४' इत्यणि टिलोपे 'टिड्ढाणञ् ४।१।१५' इति ङीप् हैमी । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः ५।२।३४' इति त्यकन् प्रत्ययः । इत्वनिषेधस्तूक्तः समासे ।

वाच्य०—समुद्रोपत्यकया हैम्या रत्नपारायणेन मम पुर्या ( भूयते ) ॥८॥

इदानीं स्वोद्देश्यमाख्याति—

आवासे सिक्त-संमृष्टे गन्धैस् त्वं लिप्त-वासिता ।
अर्पितोरु-सुगन्धि-स्रक् तस्यां वस मया सह ॥ ९० ॥

अन्वयः—अयि सीते ! तस्याम् सिक्तसंमृष्टे आवासे गन्धैः लिप्तवासिता अर्पितोरुसुगन्धिस्रक् त्वम् मया सह वस ।

हिन्दी—हे सीते ! उसी लङ्कामें सींचे और साफ-सुथरे भवनमें सुगन्धित तर-बतर विशाल पुष्पमालाओंसे सुसज्जित होकर तुम मेरे साथ रहो ।

व्याख्या—अयि सीते, तस्याम् लङ्कापुर्याम्, सिक्तसंमृष्टे पूर्वं सलिलार्द्रे पश्चान्मार्जनीपरिष्कृते, आवासे भवने, गन्धैः सुगन्धिद्रव्यैः, लिप्तवासिता पूर्वम् चर्चिता पश्चात् अगुरुचन्दनादिभिः भाविता, अर्पितोरुसुगन्धिस्रक् परिधापितविपुलसुगन्धि-पुष्पमाला, त्वम् सुन्दरी, मया रावणेन, सह सार्धं, वस तिष्ठ, रमस्वेति तात्पर्यं तत्र ।

कोशः—'वड्रोरुविपुलं पीन-पीव्नी तु स्थूलपीवरे' ।
'माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः' ।
'सूर्याणि वर्तयोगाः स्युर्भावितं वासितं त्रिपु' ।

समासः—पूर्वं सिक्तं पश्चात् मृष्टम्, तस्मिन् । 'पूर्वकालैक० २।१।४९' इति समासः । तथैव पूर्वं लिप्ता पश्चात् वासितेति । अर्पिता उर्वी सुगन्धिः स्रक् यस्यै सेति बहुपदबहुव्रीहिः । शोभनः गन्धो यस्यां सा सुगन्धिः इत्यत्र 'गन्धस्येदुत्पूतिसुसुरभिभ्यः ५।४।१३५' इति इत्वम् ।

वाच्य०—लिप्तवासितया अर्पितोऽसुगन्धिस्रजा त्वया उष्यताम् ॥ ९० ॥

ततश्च राक्षसभावं स्पष्टयति—

संगच्छ पौंस्नि ! स्त्रैणं मां युवानं तरुणी शुभे ।
राघवः प्रोष्य-पापीयान्, जहीहि तम-किं-चनम् ॥ ९१ ॥

अन्वयः—हे पौंस्नि शुभे ! तरुणी ( त्वम् ) स्त्रैणं युवानं मां संगच्छ । राघवः प्रोष्यपापीयान् ( अस्ति ) । अकिञ्चिनं तम् जहीहि ।

हिन्दी—हे पुरुषभोग्ये शुभ-सुन्दरि ! तुम तरुणी हो, इसलिये स्त्रियोंके उपयुक्त मुझ ऐसे तरुणके पास रहो और राज्यसे निष्कासित भ.री पापी एवं दरिद्री रामको भूल जाओ ।

व्याख्या—हे पौंस्नि पुंयोग्ये शुभे सुन्दरि ! (त्वम्) तरुणी युवतिः (असि), ( अतः ) स्त्रैणं स्त्रीयोग्यं, युवानं तरुणं, मां रावणं, संगच्छ मिल । राघवः रामः ( तु ), प्रोष्यपापीयान् देशान्तरं गतः, राज्यभ्रष्टः, पापवत्तरः (अस्ति) । (अतः) अकिञ्चनं दरिद्रं, तम् कुत्सितं, जहीहि त्यज ।

कोशः'—बालस्तु स्यान्माणवको वयस्यस्तरुणो युवा' ।
'स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे' ।
'अस्त्री पङ्कं पुमान् पाप्मा पाप किल्बिषकल्मषम्' ।

समासः—प्रोष्य पापीयान् इति विग्रहे 'मयूरव्यंसकादयश्च २।१।७२' इति ल्यबन्तेन सह समासः । अविद्यमानं किञ्चन यस्य स अकिञ्चनः । 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपश्च २।२।२४' इति वार्तिकबलात्समासः । 'सर्वनामाव्ययसंज्ञाया उपसर्जने प्रतिषेधः' इति अव्ययत्वनिषेधः ।

तद्धितः—पुमांसम् अर्हति पुंसे योग्या वा, स्त्रीम् अर्हति स्त्रियै योग्यः वा इत्यर्थे "स्त्रीपुंमाभ्यां नञ्स्नञौ भवनात् ५।१।८७' इति तौ प्रत्ययौ, ततः तद्धितकार्यम् । तरुणी पौंस्नीत्यत्र 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ४।१।१५' इति वार्तिकेन ङीप् । अतिशयेन पापवान् इत्यर्थे 'विन्मतोर्लुक् ५।३।६५' इति इयसुनि मतुपो लोपश्च पापीयान् । ततः प्रोष्येति ल्यबन्तेन समासः सत्ः ।

तिङन्तः—ओहाक् त्यागे इति जुहोत्यादिकस्य धातोर्लोटि 'ई हल्यघो ६।४।११३' इतीत्वे जहीहि। 'आ च हौ ६।४।११७' इति तु वैकल्पिकमेव।

वाच्यपरिवर्तनम्—तरुण्या त्वया स्त्रैणो युवाहं संगम्यै, राघवेण प्रोष्यपापीयसा (भूयते), अकिञ्चनः स हीयताम् ॥ ९१ ॥

पूर्वोक्तमेव द्रढयति—

> अश्नीत-पिबतीयन्ती प्रसिता स्मर-कर्मणि ।
> वशेकृत्य दश-ग्रीवं मोदस्व वर-मन्दिरे ॥ ९२ ॥

अन्वयः—अयि सुन्दरि ! अश्नीतपिबतीयन्ती स्मरकर्मणि प्रसिता दशग्रीवम् वशेकृत्य वरमन्दिरे मोदस्व।

हिन्दी—खाओ पीओ एवं सबकी स्वामिनी बनकर सुरतकर्ममें लगी हुई तुम दशग्रीवको वश में कर सुन्दर भवनमें आनन्दके साथ विहार करो (सीधे शब्दोंमें पटरानी बनानेका प्रस्ताव)।

व्याख्या—अयि सुन्दरि ! अश्नीतपिबतीयन्ती सततमश्नीत पिबत इत्येवं भृत्यजनान् आदेष्टुमिच्छती, स्मरकर्मणि कामव्यापारे, प्रसिता आसक्ता आधिक्येन व्यासेत्यर्थः, त्वम्, दशग्रीवं रावणं, वशेकृत्य अनुवर्तिनं विधाय, वरमन्दिरे सुन्दर भवने, मोदस्व हृष्य।

कोशः—'तत्परे प्रसृतासक्तौ।'
'कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि'।

समासः—अश्नीत पिबतेत्येवं सततं यस्यां क्रियायाम् अभिधीयते सा अश्नीतपिबता क्रिया इति 'मयूरव्यंसकादयश्च २।१।७२' इत्यत्र 'आख्यातमाख्यातेन क्रियासातत्ये' इति वचनात् समासे, ततः क्यचि, 'क्यचि च ७।४।३३' इतीत्वे, अश्नीतपिबतीय धातोः शत्रन्तात् ङीपि 'शप्श्यनोर्नित्यम् ७।१।८१' इति नुमि अश्नीतपिबतीयन्ती। स्मरस्य कर्मेति समासे 'प्रसितोत्सुकाभ्यां तृतीया च २।३।४५' इति सप्तमी। वशे कृत्वेत्यर्थे वशे इति सविभक्तिके 'साक्षात्प्रभृतीनि च १।४।७४' इति गतिसंज्ञया 'कुगतिप्रादयः २।२।१८' इति समासे विभक्तेश्चालुकि रूपम्।

वाच्यपरिवर्तनम्—अश्नीतपिबतीयन्त्या प्रसितया मुद्यताम् ॥ ९२ ॥

तथैव भूयः स्वभावं सुस्पष्टयति—

> मा स्म भूर् ग्राहिणी भीरु ! गन्तुमुत्साहिनी भव ।
> [illegible] च भूत्वा मे वक्षःसंमर्दिनी भव ॥ ९३ ॥

अन्वयः—अरे भीरु ! ग्राहिणी मा स्म भूः, गन्तुम् उत्साहिनी भव, उद्भासिनी च भूत्वा मे वक्षःसम्मर्दिनी भव ।

हिन्दी—अरे डरनेवाली सीते ! हठीली मत बनो, चलनेको उत्साहित होओ, चमक दमकवाली बनठन कर मेरी गोदमें खेलो ।

व्याख्या—अरे भीरु भयशीले सीते ! ग्राहिणी आग्रहवती, मा स्म भूः न भव, गन्तुम् चलितुम् ( मया सहेति शेषः ), उत्साहिनी अध्यवसायिनी, भव स्याः । उद्भासिनी दीप्तिमती, भूत्वा संभूय, मे मम ( रावणस्येत्यर्थः ), वक्षःसम्मर्दिनी उरःक्रीडिका, भव एधि ।

कोशः—'उत्साहोऽध्यवसायः स्यात्सवीर्यमतिशक्तिभाक्' ।
'उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः' ।

कृदन्तः—सम्मृद्नातीति विगृह्य 'नन्दिग्रहि० ३।१।१३४' इति णिनिः, 'ऋन्नेभ्यो ङीप् ४।१।५' इति ङीपि सम्मर्दिनी । ततः समासः । एवमेव ग्राहिणी उत्साहिनी उद्भासिनीत्यादि । गन्तुमिति ( ५९ पद्ये ) ।

वाच्यपरिवर्तनम्—ग्राहिण्या मा स्म भावि । उत्साहिन्या भूयताम् । उद्भासिन्या भूत्वा वक्षःसम्मर्दिन्या भूयताम् ॥ ९३ ॥

इदानीं सञ्जीवनीविद्याविदपि रावणोऽदृष्टनुन्नोऽकार्य्यं परस्त्रीहरणं करोति—

तां प्रातिकूलिकीं मत्वा जिहीर्षुर् भीम-विग्रहः ।
बाहूपपीडमाश्लिष्य जगाहे द्यां निशा-चरः ॥ ९४ ॥

अन्वयः—जिहीर्षुः भीमविग्रहः निशाचरः तां प्रातिकूलिकीं मत्वा बाहूपपीडम् आश्लिष्य द्यां जगाहे ।

हिन्दी—हरनेकी इच्छावाला भयानक शरीरी निशाचर उसे अपने प्रतिकूल पाकर बाहुओंसे पकड़कर आकाशमार्गसे ले चला ।

व्याख्या—जिहीर्षुः हरणेच्छुः, भीमविग्रहः भयङ्करदेहः, निशाचरो रात्रिचरः ( रावण इत्यर्थः ), ताम् पुरोवर्तिनीम् ( सीतामिति यावत् ), प्रातिकूलिकीम् अपष्ठुवर्तिनीं, मत्वा बुद्ध्वा, बाहूपपीडम् भुजोपश्लेषम्, आश्लिष्य गृहीत्वेत्यर्थः, द्याम् व्योम, जगाहे ययौ ।

कोशः—'प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ।'
'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ।'

समासः—भीमो विग्रहो यस्य सः ।

तद्धितः—प्रतिकूलं वर्तते इति विग्रहे सुबन्तात् 'तत्प्रत्यनुपूर्व० ५।४।‍ इति ठकि 'टिड्ढाणञ्० ४।१।१५' इति ङीप् ।

कृदन्तः—हृञ् हरणे इति भौवादिकात् सनि 'अज्झनगमां सनि ६।४।‍ इति दीर्घे, इरादेशे, द्वित्वादिकार्ये जिहीर्षधातोः 'सनाशंसभिक्ष उः ३।२।१६ इत्युः । बाहुभिरुपपीड्येत्यर्थे 'सप्तम्यां चोपपीड० ३।४।४९' इति चात् तृतीयान्‍ पपदे णमुलि 'तृतीयाप्रभृतीन्यन्यतरस्याम् २।२।२१' इति समासे बाहूपपीडम् इ‍ व्ययम् । दिव्शब्दात् कलापमते, पाणिनीये तु द्योशब्दादेन अमि 'औतोऽम्शस्‍ ६।१।९३' इति आत्वे द्याम् ।

तिङन्तः—गाहू विलोडने इति धातोर्लिटि द्वित्वे हलादिशेषे 'ह्र‍ ७।४।५९' इति ह्रस्वे 'कुहोश्चुः ७।४।६२' इति जकारे जगाहे ।

वाच्यपरिवर्तनम्—जिहीर्षुणा भीमविग्रहेण निशाचरेण द्यौर्जगाहे ।

शिक्षा—'अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः' इति ॥९४

रावणभयाद्वनस्थाः सत्त्वा अपि भयार्ता जाता इत्याख्याति—

> त्रस्यन्तीं तां समादाय यातो रात्रि-चराऽऽलयम् ।
> तूष्णीं भूय भयादासांचक्रिरे मृगपक्षिणः ॥ ९५ ॥

अन्वयः—मृगपक्षिणः त्रस्यन्तीं ताम् समादाय रात्रिञ्चरालयं यातः ( तस्माद् ) भयात् तूष्णीम्भूय आसाञ्चक्रिरे ।

हिन्दी—पशु पक्षी भी डरती सीताको लेकर राक्षसोंकी निवास भूमि‍ ले जाते हुए उससे ( रावणसे ) भयभीत होकर चुपचाप रह गये ।

व्याख्या—मृगपक्षिणः पशुशकुनयः, त्रस्यन्तीं बिभ्यतीं, तां सीतां, समाद‍ गृहीत्वा, रात्रिञ्चरालयम् राक्षसनिवासम् (लङ्काम्), यातः गच्छतः (रावणात्‍ भयात् त्रासात्, तूष्णीभूय मौनीभूय, आसाञ्चक्रिरे अतिष्ठन् ( न तु न्यवार‍ न्नित्यर्थः ) ।

कोशः—'पशवोऽपि मृगाः' । 'वेगः प्रवाह-जवयोरपि' ।
'मौने तु तूष्णीं तूष्णीकाम्' ।

समासः—रात्रिञ्चराणाम् आलयस्तम् । मृगाश्च पक्षिणश्चेति द्वन्द्वे 'विभा‍ वृक्ष० २।३।१२' इति समानजातीयानामिति वचनान्नैकवद्भावः पाक्षिकत्वाद्‍

कृदन्तः—रात्रौ चरतीत्यर्थे 'चरेष्टः ३।२।१६' इति 'रात्रेः कृति विभा‍ ६।३।७२' इति मुम् ( २।२३ पद्ये ) । तूष्णीम् भूत्वा इत्यर्थे तूष्णीम्‍ ३।४।६३' इति क्त्वाप्रत्यये, तेन 'क्त्वा च २।२।२२' इति समासे ल्यप् ।

तिङन्तः—आस उपवेशने इति धातोर्लिटि 'दयायासश्च ३।१।३७' इत्याम्ि कृञोऽनुप्रयोगे द्वित्वादौ आसाञ्चक्रिरे ।

वाच्यपरिवर्तनम्—मृगपक्षिभिः आसाञ्चक्रे ।

शिक्षा—असज्जनात्कस्य भयं न जायते इति ॥ ९५ ॥

अन्यायमसहमानस्तत्रत्यो जटायुः पक्षी रावणं निरुणद्धि—

> उच्चै रारस्यमानां तां कृपणां राम-लक्ष्मणौ ।
> जटायुः प्राप पक्षीन्द्रः परुषं रावणं वदन् ॥ ९६ ॥

अन्वयः—रावणं परुषं वदन् पक्षीन्द्रः जटायुः रामलक्ष्मणौ उच्चैः रारस्यमानां कृपणां तां ( सीताम् ) प्राप ।

हिन्दी—राम और लक्ष्मणको उच्च स्वरसे पुकारने वाली दुःखिनी सीताके पास पक्षियोंका राजा जटायु रावणको फटकारता हुआ आ पहुँचा ।

व्याख्या—रावणं दशास्यं, परुषं निष्ठुरं कठोरशब्दमिति यावत्, (नीच, क्व गच्छसि तिष्ठेत्यादि) वदन् अभिदधत्, पक्षीन्द्रः पतङ्गराजः, जटायुः सम्पातिभ्राता तन्नामा पक्षीत्यर्थः, रामलक्ष्मणौ राघवसौमित्री, उच्चैः स्वरं यथा स्यात्तथा रारस्यमानाम् भृशं पुनः पुनः क्रोशन्तीम्, कृपणां दीनां, तां (सीताम्), प्राप आजगाम ।

कोशः—'निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये ।'

कृदन्तः—पुनः पुनः भृशं रसतीति विग्रहे यङि द्वित्वेऽभ्यासकार्ये 'दीर्घोऽकितः ७।४।८३' इति दीर्घे रारस्येत्यस्य धातुत्वात् शानचि, रारस्यमान-शब्दात् टापि द्वितीयान्तम् इति ।

तिङन्तः—प्रपूर्वात् आप्लृ व्याप्तौ इति धातोर्लिटि द्वित्वादौ प्रापेति ।

वाच्यपरिवर्तनम्—वदता पक्षीन्द्रेण जटायुषा रारस्यमाना कृपणा सा प्रापे ।

शिक्षा—'न ह्रीङ्गितज्ञोऽवसरेऽवसीदति' इति । (इति प्रकीर्णकाण्डम्)॥९६॥

(सम्प्रति शाब्दिकः कविर्भट्टिः प्रारम्भतः प्रसृतं प्रकीर्णकाण्डं समापयन् इतोऽधिकारकाण्डं प्रारभते । तत्राष्टाध्यायीशब्दानुशासनस्य 'चरेष्टः ३।२।१६' इति ट-प्रत्ययाधिकारात् क्रमशः सूत्रस्थ-प्रत्यया आगमिष्यन्ति ! मध्ये मध्ये स्तोकरूपतः प्रकीर्णकाण्डसूत्राणामपि प्रक्षेपो यत्र कुत्र स्यादपि न तेनाधिकारकाण्डावसानं ज्ञेयमित्थं मध्ये मध्ये विच्छिद्यमानोऽप्ययमधिकार इत आरभ्य भट्टिकाव्यस्य नवमसर्गस्य नवाधिकशततमपद्यावधि णत्वाधिकारम् सर्गान्ते प्रकीर्णं यावत्प्रसृतोऽस्ति । इत आरभ्य भट्टिकाव्याध्ययनम् अष्टाध्यायीपुस्तकं हस्ते गृहीत्वा तत्तदधिकारसूत्राणि प्रयोगसाधने प्रयुञ्जतैव कर्तव्यम् । तेन सूत्रार्थावगतिः, सूत्रोपस्थितिः, प्रयोगसिद्धि-

भट्टिश्लोकार्थविवोधश्चेति बहूनि प्रयोजनानि सहैव सिध्यन्ति। विषयदृष्ट्यापि सीतापहारे तदन्वेषणार्थं रामविलापादि हनुमद्रावणसंवादान्तबोधः सुलभो भवति।

तत्र जटायू रावणं कुत्सयन् युद्धार्थमाह्वयते—

द्विषन्! वने-चराऽग्र्याणां त्वमादाय-चरो वने।
अग्र-सरो जघन्यानां मा भूः पूर्व-सरो मम॥ ९७॥

अन्वयः—हे द्विषन्! वने वनेचराऽग्र्याणाम् आदायचरः, जघन्यानाम् अग्रेसरः त्वम्, मम पूर्वसरो मा भूः।

हिन्दी—अरे दुष्ट ( द्वेषिन् )! वनमें मूर्धन्य तपस्वियोंको लेकर भक्षण करने वाले पापियोंमें अधमाधम तू मेरे सामनेसे नहीं जा सकता (अर्थात् ठहर जा)।

व्याख्या—अरे इति नीचसंबोधनम्। द्विषन् द्रोहिन्! वनेऽरण्ये, वनेचराग्र्याणाम् तपस्विश्रेष्ठानाम्, आदायचरः समाकृष्य भक्षकः, जघन्यानां पापिनाम्, अग्रेसरः अग्रणीः, त्वम् नराधम! मम जटायोः, पूर्वसरः प्रथमगन्ता, मा भूः न भव। अनुप्रासालङ्कारः।

समासः—वनेचरेषु अग्र्याः वनेचराग्र्याः, तेषाम्।

कृदन्तः—वने चरन्तीति विग्रहे 'चरेष्टः ३।२।१६' इति टः। आदाय चरतीति विग्रहे 'भिक्षासेनादायेषु च ३।२।१७' इति टः। अग्रे सरतीति विग्रहे 'पुरोऽग्रे० ३।२।१८' इति टः। पूर्वं सरतीति विग्रहे 'पूर्वे कर्तरि० ३।२।१९' इति टः। इत्येवं क्रमेणाधिकारसूत्राणि अभ्यस्यानि। क्रमेण प्रयोगाश्च साध्याः। उपपदसमासः 'उपपदमतिङ् २।२।१९' इति सूत्रेण कार्य्यः। एवं हि तत्तदधिकारे तत्तत्सूत्राणां क्रमेणोपस्थितिः कार्य्या। 'शाखादिभ्यो यत् ५।३।१०३ इति यत् जघन्यः।

तिङन्तः—मापूर्वकात् भूधातोः 'माङि लुङ् ३।३।१७५' इति लुङि 'गातिस्था० २।४।७७' इति सिचो लुकि 'न माङ्योगे ६।४।७४' इत्यडागमाभावः।

वाच्य०—आदायचरेण जघन्यानामग्रेसरेण त्वया पूर्वसरेण मा भावि।

शिक्षा—अन्यायप्रतीकारः सर्वैरेव कार्यः। नेदं मे कार्यमिति नोदासितव्यम् इति जटायुः पक्षी अपि रावणमपथपथिकं विरुन्धन् शिक्षयति सर्वान्॥ ९७॥

रावणस्यैव दोषमुद्घाटयति—

यशस्-कर-समाचारं ख्यातं भुवि दया-करम्।
पितुर्-वाक्य-करं रामं धिक् त्वां दुन्वन्तम्-त्रपम्॥ ९८॥



अन्वयः—यशस्करसमाचारम्, भुवि ख्यातम्, दयाकरम्, पितुर्वाक्यकरम् रामं दुन्वन्तम् अत्रपं त्वां धिक्।

हिन्दी—वह पक्षी ( अपने ) पंखोंके विस्तारको आकाशमें सभी मार्गोंमें घुमाता हुआ मांस और खून दिखाने वाले (निकाल देने वाले) चोंचसे प्रहारोंको करता हुआ युद्ध करने लगा।

व्याख्या—असौ जटायुः पक्षी, पक्षयोः छदयोः, वितानं विस्तारं, खे नभसि, सर्वपथीनम् समग्रमार्गव्यापकम्, धुन्वन् कम्पयन्, मांसशोणित-सन्दर्शम् पिशित-रक्तप्रदर्शम्, तुण्डघातम् चञ्चुप्रहारम्, अयुध्यत युद्धमकरोत्। अनुप्रासः।

कोशः—'गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम्'।

'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः'।

तद्धितान्तः—सर्वे च ते पन्थानः सर्वपथाः इति विग्रहे 'पूर्वकाल० २।१।४९ इति समासे 'ऋक्पूर० ५।४।७४' इत्याकारे, सर्वपथान् व्याप्नोति इति विग्रहे 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ५।२।७' इति खे सर्वपथीनम्।

कृदन्तः—मांसशोणितं कात्स्न्र्येन दृष्ट्वा इति विग्रहे 'कर्मणि दृशिविदोः साकल्ये ३।४।२९' इति णमुलि मांसशोणितसन्दर्शम्। तुण्डेन घातो यस्मिन्निति क्रियाविशेषणम्, व्यधिकरणबहुव्रीहिर्ज्ञेयः। भावे घञा कुत्वेन घात इति साधु।

तिङन्तः—युध सम्प्रहारे इति दैवादिकस्याकर्मकस्य लङि अयुध्यत इति रूपम्। अतएव तस्याकर्मकतया तद्योगे समानकर्मकत्वाभावेन तुण्डघातमित्यत्र न 'समानकर्तृकयोः'... 'तृतीयाप्रभृतीन्यन्यतरस्याम्'... 'हिंसार्थानां च० ३।४।४८' इति णमुल्, नापि च 'करणे हनः ३।४।३७' इति णमुल्। तत्र 'कषादिषु यथाविध्यनुप्रयोगः ३।४।४६' इति हनोऽनुप्रयोगाभावश्चेति स्थिरम्, किन्तु घञ् इत्युक्तमुपरि।

वाच्य०—अमुना धुन्वता अयुध्यत इति भावे एकवचनं रूपम्॥ १०१॥

युद्धप्रकारमेव पुनराह—

न बिभाय, न जिह्राय, न चक्लाम, न विव्यथे।
आघ्नानो विध्यमानोऽपि रणान्न निववृते न च॥ १०२॥

अन्वयः—( असौ ) आघ्नानः विध्यमानः अपि न बिभाय, न जिह्राय, न चक्लाम, न विव्यथे, न च रणात् निववृते।

हिन्दी—वह (पक्षी) मारता और मार खाता हुआ भी न डरा, न लज्जित हुआ, न थका, न व्यथित हुआ, एवं न संग्रामसे ही विमुख हुआ।

व्याख्या—(असौ पक्षी) आघ्नानः स्वयं प्रहरन्, विध्यमानः परेण हन्यमानः अपि, न बिभाय न तत्रास, न जिह्राय न ललज्ज, न चक्लाम न चुक्षोभ, न

६ भट्टि० द्वि०

विव्यथे न सञ्चचाल, न च नैव, रणात् समरात्, निववृते पराबभूव। क्रियाः कोऽलङ्कारः।

कृदन्तः—आङ् पूर्वात् हन् धातोः 'आङो यमहनः १।३।२०' इति आत्मने विहिते, शानचि, 'गमहनजन० ६।४।९८' इत्युपधालोपे, कुत्वे च आघ्नानः। व ताडने इति धातोः कर्मणि लटि, तस्य शानजादेशे, सार्वधातुके यकि, 'ग्रहिज्या ६।१।१६' इति सम्प्रसारणे विध्यमानः।

तिङन्तः—ञिभी भये, ह्री लज्जायाम्, क्लमु ग्लानौ, व्यथ भयसञ्चलन वृतु वर्तने इति धातूनां लिटि प्रथमपुरुषैकवचने रूपाणि। 'व्यथो लिटि ७ ६८' इत्यभ्यास-सम्प्रसारणं च। कित्वाच्च निववृते इत्यत्र न गुणः।

वाच्यपरिवर्तनम्—आघ्नानेन विध्यमानेन तेन न बिभ्ये, न जिह्रिये, चक्लमे, न विव्यथे, न निववृते ॥ १०२ ॥

जटायुकर्तृकं रथभङ्गमाह—

> पिशाच-मुख-धौरेयं स-च्छत्र-कवचं रथम्।
> युधि कद्-रथ-वद् भीमं बभञ्ज ध्वज-शालिनम् ॥ १०३ ॥

अन्वयः—(असौ) पिशाचमुख-धौरेयम् सच्छत्रकवचम् ध्वजशालिनं भीमं रथम् युधि कद्रथवत् बभञ्ज।

हिन्दी—पिशाचके समान मुखवाले घोड़ोंसे वाहित छत्र एवं कवच-संयुक्त तथा ध्वजा-पताकाओंसे सुशोभित रावणके भयङ्कर रथको भी युद्धमें तुच्छ रथके समान तोड़ डाला।

व्याख्या—पिशाचमुखधौरेयम् पिशाचवदनधूर्वहम्, सच्छत्रकवचम् सातपत्र सन्नाहम्, ध्वजशालिनम् पताकाशोभिनम्, भीमं भीषणम्, रथम् स्यन्दनम्, युधि आहवे, कद्रथवत् तुच्छस्यन्दनवत्, बभञ्ज व्यनाशयत्। उपमालङ्कारः।

कोशः—'धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः।'
'हैमं छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत्।'
'उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्।'

समासः—पिशाचस्येव मुखं येषां ते पिशाचमुखाः। पिशाचमुखाः धौरेया यस्य सः, तम्। छत्रं च कवचं च छत्रकवचे, छत्रकवचाभ्यां सह वर्तते इति सच्छत्रकवचः, तम् सच्छत्रकवचम्। 'तेन सहेति तुल्ययोगे २।२।२८' इति समासः। 'वोपसर्जनस्य ६।३।८२' इति सहस्य सादेशः। कुत्सितः रथः कद्रथः। कु

प्रादयः २।२।१८' इति समासे 'रथवदयोश्च ६।३।१०२' इति कदादेशे कद्रथशब्दात् 'तेन तुल्यं क्रिया चेद्वतिः ५।१।११५' इति वति प्रत्यये कद्रथवत् ।

तद्धितः—धुरं वहन्ति इति विग्रहे 'धुरो यड्ढकौ ४।४।७७' इति ढकि तस्यैयादेशे आदिवृद्धौ धौरेयाः ।

कृदन्तः—ध्वजेन शालते तच्छील इति विग्रहे 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति णिनिप्रत्यये ध्वजशाली, तम् ।

वाच्यपरिवर्तनम्—अमुना पिशाचमुख-धौरेयः सच्छत्रकवचः ध्वजशाली भीमः रथः बभञ्जे ॥ १०३ ॥

सम्प्रति आमाधिकारोऽग्रिमसर्गीय-चतुर्थपद्यावधि, तत्र सर्गान्तं जटायुयुद्धम्—

संत्रासयाञ्चकाराऽरिं, सुरान् पिप्राय पश्यतः ।
सन्त्याजयाञ्चकाराऽरिं सीतां विंशति-बाहुना ॥ १०४ ॥

अन्वयः—अथ ( असौ ) अरिं सन्त्रासयाञ्चकार, पश्यतः सुरान् पिप्राय, विंशतिबाहुना सीतां सन्त्याजयाञ्चकार ।

हिन्दी—इस युद्धमें उस पक्षीने शत्रुको डरा दिया, देखने वाले देवताओंको प्रसन्न कर दिया, एवं सीताको रावणसे छुड़वा लिया ।

व्याख्या—अथ अस्मिन् युद्धप्रसङ्गे, असौ पक्षी, अरिम् रिपुम्, सन्त्रासयाञ्चकार भीषयाञ्चकार, पश्यतः निरीक्षमाणान्, सुरान् विबुधान्, पिप्राय प्रसादयामास, विंशतिबाहुना दशाननेन, सीताम् जानकीम्, सन्त्याजयाञ्चकार अपाकारयामास । क्रियादीपकोऽलङ्कारः ।

समासः—विंशतिः बाहवो यस्य सः, तेन । अणि-कर्तुरनभिहिततया 'कर्तृकरणयोस्तृतीया २।३।१७' इति तृतीया ।

तिङन्तः—त्रसी उद्वेगे इति ण्यन्ताद्धातोः 'कास्प्रत्ययादाममन्त्रे लिटि ३।१।३५' इत्यामागमे आमस्यादन्तत्वादमित्वम् । ततः 'आमः २।४।८१' इति लिटो लुकि 'अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।५५' इत्ययादेशे णिलोपबाधके त्रासयाम् इत्यतः 'कृञ्चानुप्रयुज्यते लिटि ३।१।४०' इति लिट्परकस्य कृञोऽनुप्रयोगे, लिट्कृत्ये च त्रासयाञ्चकार इति । सम्पूर्वकात् अकर्मकत्रसेः अणि-कर्तुः अरेर्ण्यन्ते 'गतिबुद्धिप्रत्यव० १।४।५२' इति कर्मत्वम्, ततो द्वितीया । सन्त्याजयाञ्चकारेत्यस्यापि साधुत्वं पूर्ववत् ।



वाच्यपरिवर्तनम्—अमुना अरिः सन्त्रासयाञ्चक्रे । पश्यन्तः सुराः पिप्रियिरे । विंशतिबाहुना सीता सन्त्याजयाञ्चक्रे ॥ १०४ ॥

पुनर्जटायुरावणाहवमेवाख्याति कविः—

असीतो रावणः कासांचक्रे शस्त्रैर् निराकुलः ।
भूयस् तं वेभिदाञ्चक्रे नखतुण्डाऽऽयुधः खगः ॥ १०५ ॥

अन्वयः—असीतः शस्त्रैः ( सम्पन्नः अत एव ) निराकुलः रावणः कासाञ्च… नखतुण्डायुधः खगः तं वेभिदाञ्चक्रे ।

हिन्दी—सीतासे खाली हुआ शस्त्र-सम्पन्न होकर रावण उस जटायुको … शब्द कहने लगा । नख और चोंचसे प्रहार करने वाला पक्षी भी फिर-फिर … पर भरपूर प्रहार करने लगा ।

व्याख्या—असीतः सीतारहितः, शस्त्रैः आयुधैः खड्गादिभिः ( सहितः … एव ), निराकुलः अनुद्विग्नः, रावणः पौलस्त्यः, कासाञ्चक्रे कुत्सयाञ्चका… नखतुण्डायुधः नखरमुखप्रहरणः, खगः पक्षी, तम् रावणम्, भूयः पुनः पु… वेभिदाञ्चक्रे क्रियासमभिव्याहारेण भृशं विभेद चुक्षुदे । उभयत्र क्रियायां हेतो… दानात् काव्यलिङ्गम् ।

कोशः—'पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।

समासः—अविद्यमाना सीता यस्य सः असीतः, बहुव्रीहौ ह्रस्वे असीत… नखाश्च तुण्डं च नखतुण्डम् । द्वन्द्वे 'द्वन्द्वश्च प्राणि० २।४।२' इत्येकवद्भावे, … तुण्डम् आयुधं यस्य स नखतुण्डायुधः ।

कृदन्तः—खे गच्छतीति खगः । 'अन्येभ्योऽपि दृश्यते ३।२।१०१' इति डित्वाट्टिलोपे रूपम् ।

तिङन्तः—कासृ शब्दकुत्सायाम् इति धातोः 'कास्प्रत्ययादा० ३।१।… इत्यामि, अन्यदपि पूर्ववत् । वेभिद्य इति यङन्ताद्धातोर्लिटि पूर्वसूत्रेणैवामि '… हलः ६।४।४९' इति यलोपे वेभिदाम् लिट् इत्यतः पूर्ववत् कार्य्यम् ।

वाच्यपरिवर्तनम्—असीतेन निराकुलेन रावणेन कासाञ्चक्रे, नखतुण्डायु… खगेन स वेभिदाञ्चक्रे ॥ १०५ ॥

सम्प्रति उभौ वर्णयति—

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परम् ।
न वा पलाधाञ्चक्रे विर् दयाञ्चक्रे न राक्षसः ॥ १०६ ॥

अन्वयः—तौ क्रोधवशात् परस्परं हन्तुम् ईहाञ्चक्राते, विः न पलायाञ्चक्रे, राक्षसः न दयाञ्चक्रे ।

हिन्दी—वे दोनों क्रोधाभिभूत होकर एक दूसरेको मार डालनेकी चेष्टा करने लगे। न पक्षी भागा और न राक्षसने ही दया की।

व्याख्या—तौ जटायुरावणौ, क्रोधवशात् कोपावेशात्, परस्परम् अन्योऽन्यम्, हन्तुम् मारयितुम्, ईहाञ्चक्राते ईषतुः। विः पतत्री, न पलायाञ्चक्रे नहि पलायिष्ट, राक्षसः रात्रिञ्चरो वा अथवा, न नहि, दयाञ्चक्रे अन्वकम्पिष्ट। अनुप्रासेन सहैवार्थाऽलङ्कारो दृष्टान्तो निदर्शना वेति सङ्करः।

कोशः—८० अशीतितमे दृश्यः।

'नगौकोवाजिविकिरविविष्किरपतत्रयः।'

'राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः'।

तिङन्तः—ईह चेष्टायाम् इति धातोः लिटि 'इजादेश्च गुरुमतोऽनृच्छः ३।१।५६' इत्यामि सर्वं पूर्ववत्। 'दयायासश्च ३।१।३८' इत्यामि दयाञ्चक्रे। एवं परोपसर्गयोगे अय-गतौ इति भौवादिक-धातोः आमि, सर्वंकृत्ये च 'उपसर्गस्यायतौ ८।२।१९' इति लत्वञ्च ज्ञेयम्।

वाच्यपरिवर्तनम्—ताभ्याम् ईहाञ्चक्रे, विना न पलायाञ्चक्रे, राक्षसेन वा न दयाञ्चक्रे॥ १०६॥

इदानीमुपसंहरति तयोर्युद्धम्—

उपासाञ्चक्रिरे द्रष्टुं देव-गन्धर्व-किन्नराः।
छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात् पतत्रिणः॥ १०७॥

अन्वयः—देवगन्धर्वकिन्नराः द्रष्टुम् (युद्धमिति शेषः) उपासाञ्चक्रिरे, क्रव्यात् छलेन पतत्रिणः पक्षौ लोलूयाञ्चक्रे।

हिन्दी—देवता, गन्धर्व और यक्षलोग (युद्ध) देखनेके लिये पास आगये थे, राक्षसने छलसे पक्षीके पंख काट डाले।

व्याख्या—देवगन्धर्वकिन्नराः सुरगन्धर्वयक्षा देवयोनयः सुरेभ्योऽन्ये, द्रष्टुं निरीक्षितुम् (युद्धमिति शेषः), उपासाञ्चक्रिरे उपातस्थुः। क्रव्याद् राक्षसः, छलेन छद्मना माययेति यावत्, पतत्रिणः पतङ्गस्य, पक्षौ छदौ, लोलूयाञ्चक्रे भृशं पौनःपुन्येन चिच्छेद। अनुप्रासः। पक्षकर्तने छलस्य हेतोरुक्तौ काव्यलिङ्गम्।

कोशः—'गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम्'।

समासः—देवाश्च गन्धर्वाश्च किन्नराश्चेति द्वन्द्वः।

कृदन्तः—क्रव्यम् अत्तीति विग्रहे 'अदोनन्ने ३।२।६८' इति विट्, उपपदसमासः। दृश् धातोः तुमुनि 'सृजिदृशोर्झल्यमकिति ६।१।५८' इति अमागमः।

तिङन्तः—उपासाञ्चक्रिरे पूर्ववदाम् । लोलूयेति यङन्तादामि 'अतो लोपः ६।४।२८' इति अल्लोपे लोलूयामित्यतः पूर्ववत्कार्यम् ।

वाच्य०—देवगन्धर्वकिन्नरैः उपासाञ्चक्रे, क्रव्यादा पक्षौ लोलूयाञ्चक्राते।

शिक्षा—स्त्रीरक्षणे प्राणत्यागोऽपि महते फलाय भवतीति शिक्षयति पद्यम्।

इदानीं सर्गसमाप्तौ छन्दोऽन्तरेणोपसंहरति—

प्रलुठितमवनौ विलोक्य कृत्तं दशवदनः ख-चरोत्तमं प्रहृष्यन् ।
रथवरमधिरुह्य भीम-धुर्यं स्वपुरमगात् परिगृह्य रामकान्ताम् ॥ १०८ ॥

अन्वयः—अवनौ प्रलुठितम् कृत्तं खचरोत्तमं विलोक्य प्रहृष्यन् दशवदनः रामकान्ताम् परिगृह्य, भीमधुर्यं रथवरम् अधिरुह्य, स्वपुरम् अगात् ।

हिन्दी—पृथ्वीपर लुड़के हुए काटे गये श्रेष्ठ पक्षीको देखकर खुश हुआ रावण सीताको पकड़कर, भयानक घोड़ेवाले उत्तम रथपर चढ़कर, अपनी नगरीको चला गया।

व्याख्या—अवनौ धरायाम्, प्रलुठितम् निपतितम्, कृत्तम् खण्डितच्छदम्, खचरोत्तमम् पतगश्रेष्ठम्, विलोक्य दृष्ट्वा, प्रहृष्यन् मोदमानः, दशवदनः रावणः, रामकान्ताम् राघववल्लभाम् (सीताम्), परिगृह्य गृहीत्वा (समादायेत्यर्थः), भीमधुर्यं भीषणधौरेयं, रथवरम् स्यन्दनश्रेष्ठम्, अधिरुह्य आरुह्य, स्वपुरम् निजनगरम्, अगात् अगमत् । "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति छन्दः । विलोकनं, प्रहर्षणमधिरोहणं, परिग्रहणम्, पुरगमनमिति अनेकक्रियासु एकस्यैव रावणस्य कर्तुरन्वयात् क्रियादीपकालङ्कारः ।

समासः—खचरेषु उत्तमः खचरोत्तमः, तम् । भीमा धुर्या यस्मिन् सः, तम् । स्वस्य पूः इति षष्ठीसमासे, 'ऋक्पूरब्धूः पथामानक्षे ५।४।७४' इति समासान्ते अप्रत्यये स्वपुरम् ।

तिङन्तः—इण् धातोः लुङि 'इणो गा लुङि २।४।४५' इति गादेशे, 'गातिस्थाघु० २।४।७७' इति सिचो लुकि अगात् ।

वाच्यपरिवर्तनम्—प्रहृष्यता दशवदनेन स्वपुरम् अगायि ।

शिक्षा—'अदृष्टात्प्रेरितो जन्तुरवशः कर्मणि ध्रुवम्' इति अदृष्टप्रेरित एव रावणः स्वविनाशायैव सीतां हरतीति पश्यन्तु पाठकाः ॥ १०८ ॥

इत्यधिकार-काण्डे आत्मनेपदाधिकारे भट्टिमहाकाव्ये सीताहरणाख्यः पञ्चमः सर्गः ।

## [1]अथ षष्ठः सर्गः

अग्रेऽपि आमधिकारेणैव रावणावस्थां सीताहरणानन्तरमाख्याति—

> ओषाञ्चकार कामाऽग्निर् दश-वक्त्रमहर्-निशम् ।
> विदाञ्चकार वैदेहीं रामादन्य-निरुत्सुकाम् ॥ १ ॥

अन्वयः—कामाग्निः दशवक्त्रम् अहर्निशम् ओषाञ्चकार। (दशवक्त्रश्च) वैदेहीम् रामात् अन्यनिरुत्सुकाम् विदाञ्चकार।

हिन्दी—कामरूपी अग्निदेव रावणको दिन-रात जलाने लगे। रावण भी यह जान गया कि सीता रामके सिवाय दूसरेमें उत्कण्ठित होने वाली नहीं है।

व्याख्या—कामाग्निः मदनानलः, दशवक्त्रम् रावणम्, अहर्निशम् रात्रिन्दिवम्, ओषाञ्चकार ददाह। (स च) वैदेहीम् जानकीम्, रामाद् राघवात्, अन्यनिरुत्सुकाम् इतरानुत्कण्ठिताम्, विदाञ्चकार जज्ञौ। विना हेतुं कार्योल्लेखाद् विभावनाऽलङ्कारः, चकारानुप्रासश्च।

कोशः—'मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः।
कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः' ॥
'अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः।
आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥'

समासः—काम एव अग्निः 'मयूरव्यंसकादयश्च २।१।७२' इति समासः। दश वक्त्राणि यस्यासौ दशवक्त्रः। अन्यत्र निरुत्सुका अन्यनिरुत्सुका, ताम्। अहश्च निशा चेति समाहारद्वन्द्वे सर्वो द्वन्द्वो विभाषयैकद्भवतीति एकवद्भावे 'स नपुंसकम् २।४।१७' इति नपुंसकत्वे ह्रस्वे अहर्निशम् इति। 'कालाऽध्वनोरत्यन्तसंयोगे २।३।५' इति द्वितीया।

तिङन्तः—उष दाहे इति धातोः 'उषविद० ३।१।३८' इत्याम्। एवम् विदाञ्चकारेत्यत्रापि। रामाद् इति 'अन्यारादितरर्ते० २।३।२९' इति पञ्चमी।

वाच्यपरिवर्तनम्—कामाग्निना दशवक्त्र ओषाञ्चक्रे। तेन वैदेही अन्यनिरुत्सुका विदाञ्चक्रे ॥ १ ॥

---

१. पुस्तकान्तरेऽस्य सर्गस्य संख्या १४२ पद्यानि। इह १४६ पद्यानि।

रावणस्य मनःस्थितिमाह—

प्रजागराञ्चकारारेरीहास्वनिशमादरात् ।
प्रविभयाञ्चकाराऽसौ काकुत्स्थादभिशङ्कितः ॥ २ ॥

अन्वयः—काकुत्स्थात् अभिशङ्कितः असौ प्रविभयाञ्चकार। अरेः ई अनिशम् आदरात् प्रजागराञ्चकार च।

हिन्दी—रामचन्द्रसे अभिशङ्कित वह डरने लगा तथा शत्रुकी चेष्टा निरन्तर आदरके साथ सावधान रहने लगा।

व्याख्या—काकुत्स्थात् रामात्, अभिशङ्कितः त्रस्तः सन्, असौ राव विभयाञ्चकार अत्यन्तं विभाय। अरेः शत्रोः, ईहासु चेष्टासु, अनिशम् निरन्त आदरात् अभिनिवेशात्, प्रजागराञ्चकार जजागार। एकस्यानेकक्रियान्व दीपकम्।

कोशः—'इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः'।

कारकः—'भीत्रार्थानां भयहेतुः १।४।२५' इत्यपादानत्वात् पञ्चमी। आद दित्यत्र आदरं विधायेति 'ल्यब्लोपे कर्मण्यधिकरणे च २।३।२८' इति वार्ति बलात्पञ्चमी।

कृदन्तः—ईह चेष्टायामिति धातोः 'गुरोश्च हलः ३।३।१०३' इति स्त्रियाम् 'अ' प्रत्यये, स्त्रियामित्यधिकारात् 'अजाद्यतष्टाप् ४।१।४' इति टापि तासु ईहासु।

तिङन्तः—'भीह्रीभृहुवां श्लुवच्च ३।१।३९' इति आमि श्लुवद् द्वित्वेऽभ्य कार्ये, कृञोऽनुप्रयोगादिकार्ये विभयाञ्चकार। 'उषविद० ३।१।३८' इति पूर्व गामि प्रजागराञ्चकार।

वाच्यपरिवर्तनम्—अमुना अभिशङ्कितेन विभयाञ्चक्रे प्रजागराञ्चक्रे॥

पुनस्तामेवाह—

न जिह्रयाञ्चकाराऽथ सीतामभ्यर्थ्य तर्जितः।
नाप्यूर्जां बिभरामास वैदेह्यां प्रसितो भृशम् ॥ ३ ॥

अन्वयः—अथ सीताम् अभ्यर्थ्य तर्जितोऽसौ न जिह्रयाञ्चकार। वैदेह्यां भृ प्रसितोऽपि ऊर्जां न बिभरामास।

हिन्दी—सीताकी प्रार्थना करनेसे डांट खाने पर वह लजाता नहीं वैदेहीमें अत्यन्त आसक्त होता हुआ भी वह बलात्कार नहीं कर सका।

व्याख्या—अथ लङ्कानयनानन्तरं सीताम् जानकीम्, अभ्यर्थ्य अनु (तथा) तर्जितः भर्त्सितः, असौ रावणः, न नहि, जिह्रयाञ्चकार जिह

वैदेह्याम् मैथिल्याम्, प्रसितः आसक्तः अपि, ऊर्जाम् बलम्, न नहि, विभराञ्चकार बभार ( बलात्कारं नहि कृतवानित्यर्थः ) । दीपक इहापि ।

कोशः—'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' ।

तिङन्तः—ह्री लज्जायाम् इति धातोर्लिटि 'भीह्री० ३।१।३९' इति पूर्वसूत्रादामादिकम् । एवम् विभरामासेति ।

वाच्य०—तर्जितेन न जिह्रयाञ्चक्रे, प्रसितेन न ऊर्जा विभराम्बभूवे ॥३॥

उपसंहरन्नाह—

विदांकुर्वन्तु रामस्य वृत्तमित्यवदत् स्वकान् ।
रक्षांसि रक्षितुं सीतामाशिषच्च च प्रयत्नवान् ॥ ४ ॥

अन्वयः—प्रयत्नवान् असौ रामस्य वृत्तं विदांकुर्वन्तु इति स्वकान् अवदत् । सीतां रक्षितुम् रक्षांसि च आशिषत् ।

हिन्दी—बड़ी मुस्तैदीसे रामके समाचारका पता लगाओ—ऐसा उसने अपने आदमियोंको कहा और सीताकी रक्षाके लिए राक्षसियोंको आज्ञा दी ।

व्याख्या—प्रयत्नवान् सावधानः ( असौ ), रामस्य राघवस्य, वृत्तम् उदन्तम्, विदांकुर्वन्तु जानन्तु, इति इत्थम्, स्वकान् स्वीयान् ( गूढपुरुषान् शुकसारङ्गादीन् इत्यर्थः ), अवदत् अभ्यधात् । सीताम् जानकीम्, रक्षितुम् अवितुम्, रक्षांसि रात्रिञ्चरीश्च, आशिषत् आदिशत् । ( दीपक एव ) ।

कोशः—'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः ।'

तद्धितः—अतिशयितो यत्नो यस्य असौ यत्नवान् इत्यर्थे यत्नशब्दात् 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥' इति अतिशयेऽर्थे मतुपि 'मतोर्वोऽयवादिभ्यः ८।२।९' इति मस्य वकारः । अनुकम्पिताः स्वे स्वकाः, तान् । 'अनुकम्पायाम् ५।३।७६' इति कन् ।

तिङन्तः—विदाङ्कुर्वन्तु—विद् ज्ञाने इति धातोः 'विदांकुर्वन्त्वित्यन्यतरस्याम् ३।१।४१' इति निपातनात् सिध्यति । शासु अनुशिष्टौ इति धातोः 'सर्तिशास्त्यर्तिभ्यश्च ३।१।५६' इत्यङि, 'शास इदङ्हलोः ६।४।२४' इत्युपधाया इत्वे, 'शासिवसि० ८।३।६०' इति षत्वेऽडागमे, आङ्योगे आशिषत् ।

वाच्यपरिवर्तनम्—यत्नवता (तेन) 'वृत्तम् विद्यताम्' इति स्वका औच्यन्त, रक्षांसि आशासिषत ॥ ४ ॥

रावणदशामुपवर्ण्येतः मारीचवधाद् विनिवृत्तं रामम् पद्यत्रयेण प्रकीर्णकाण्डे वर्णयति—

रामोऽपि हत-मारीचो निवर्त्स्यन् खर-नादिनः ।
क्रोष्टून् समश्रृणोत् क्रूरान् रसतो ऽशुभ-शंसिनः ॥ ५ ॥

अन्वयः—हतमारीचः निवर्त्स्यन् रामः अपि खरनादिनः क्रूरान् अशुभशंसिनः रसतः क्रोष्टून् समश्रृणोत् ।

हिन्दी—मारीचको मारकर लौटे हुए रामने भी गदहोंके समान शब्द करने वाले क्रूर (खूंखार) एवम् अशुभसूचक, चिल्लाते हुए गीदड़ोंके शब्दोंको सुना।

व्याख्या—हतमारीचः मारितमारीचराक्षसः, निवर्त्स्यन् निर्वर्तिष्यमाणः प्रत्यागमिष्यन् इत्यर्थः, रामः राघवः अपि, (तथा) खरनादिनः रासभराविणः कठोरशब्दं कुर्वतो वा, क्रूरान् भीषणान्, अशुभशंसिनः अनिष्टाभिभाषिणः, रसतः शब्दायमानान्, क्रोष्टून् फेरून्, समश्रृणोत् आकर्णयत् । समासगा आर्थी उपमा। काव्यलिङ्गं च, अतः संकरः ।

समासः—हतः मारीचो येन सः। क्रोष्टून् समश्रृणोदित्यत्र शब्दवतः तस्य शब्दाभेदेनाध्यवस्य श्रुवः कर्मत्वम् ।

कृदन्तः—वृतु वर्तने इति धातोः निपूर्वात् 'न वृद्भ्यश्चतुर्भ्यः ७।२।५९' इति इण्निषेधे, 'लृटः सद्वा ३।३।१४' इति शतरि 'वृद्भ्यः स्यसनोः १।३ ९२' इति परस्मैपदे निवर्त्स्यन् । खरवत् नदन्ति इत्यर्थे 'कर्तर्युपमाने ३।२।७९' इति णिनिः प्रत्यये खरनादिनः । अथवा खरं कठिनं यथा स्यात्तथा वदन्तीत्यर्थे तच्छीलाः, तथा अशुभं शंसन्ति तच्छीलाः इत्युभयत्रापि 'सुप्यजातौ०' ३।२।७८' इति णिनिद्वयं वा।

तद्धितः—सम् पूर्वात् श्रु श्रवणे इति धातोः 'समो गम्यृच्छिभ्याम् १।३।२९' इति सूत्रस्थ–वार्तिके अकर्मकाधिकारात् सकर्मकस्यात्र नात्मनेपदम् । परस्मैपदे 'श्रुवः शृ च ३।१ ७४' इति श्नु प्रत्यये, शृ इत्यादेशे च समश्रृणोत् ।

वाच्यपरिवर्तनम्—हतमारीचेन निवर्त्स्यता रामेण खरनादिनः क्रूराः अशुभशंसिनः क्रोष्टारः अश्रूयन्त ॥ ५ ॥

लक्ष्मणोपस्थितिमाख्याति—

आशङ्कमानो वैदेहीं खादितां निहतां मृताम् ।
स शत्रु-घ्नस्य सोदर्यं दूरादायान्तमैक्षत ॥ ६ ॥

अन्वयः—वैदेहीं खादितां निहतां मृतां वा आशङ्कमानः सः शत्रुघ्नस्य सोदर्यम् आयान्तम् दूराद् ऐक्षत ।

हिन्दी—वैदेही ( सीताजी ) खा ली गयी हैं या मार डाली गयी हैं या ( स्वयं ) मर गयी हैं—ऐसी शङ्का करने वाले रामने दूरसे शत्रुघ्नके सहोदर ( भाई ) को आते हुए देखा।

व्याख्या—वैदेहीम् विदेहदुहितरम् ( सीतामित्यर्थः ), खादिताम् ( व्याघ्रादिभिः ) भक्षिताम्, निहताम् ( राक्षसैः ) मारिताम्, मृताम् ( स्वयं भयात् ) त्यक्तजीविताम्, आशङ्कमानः (दुर्निमित्तात्) कल्पयमानः, सः रामः, शत्रुघ्नस्य कनिष्ठदाशरथेः, सोदर्यं, सहजम् ( ज्येष्ठभ्रातरम्—लक्ष्मणमित्यर्थः ), आयान्तम् आगच्छन्तम्, दूरात् आराद्, ऐक्षत अपश्यत्। उत्प्रेक्षया कर्मकारकस्यानेकक्रियान्वयाद्दीपकश्चेति सङ्करः।

कोशः—'समानोदर्यसोदर्यसगर्भ्यसहजाः समाः।'
'आराद् दूरसमीपयोः'।

कारकः—'दूरान्तिकार्थेभ्यो द्वितीया च २।३।३५' इति पञ्चमी दूरादिति।

तद्धितः—'सोदराद्यः ४।४।१०९' इति समानोदरे शयित इत्यर्थे यप्रत्यये 'विभाषोदरे ६।३।८८' इति समानस्य सादेशः।

कृदन्तः—आङ् पूर्वाद् भौवादिकात् शकि शङ्कायाम् इति धातोः शानचि आशङ्कमानः। एवम् आङः या धातोः शतरि आयान्तम्।

वाच्यपरिवर्तनम्—आशङ्कमानेन तेन सोदर्यः आयान् ऐक्ष्यत ॥ ६ ॥

उपसंहरन् कविर्ब्रूते—

सीतां सौमित्रिणा त्यक्तां सध्रीचीं त्रस्नुमेकिकाम्।
विज्ञायाऽमंस्त काकुत्स्थः-क्षये क्षेमं-सुदुर्लभम् ॥ ७ ॥

अन्वयः—काकुत्स्थः सौमित्रिणा त्यक्तां सध्रीचीं त्रस्नुम् एकिकां सीतां विज्ञाय क्षये क्षेमं सुदुर्लभम् अमंस्त।

हिन्दी—रामने लक्ष्मणसे छोड़ दी गयी सहचरी, भयशीला, अकेली सीताको जानकर 'घर पर कुशल है' इस आशाको छोड़ दिया।

व्याख्या—काकुत्स्थः रामः, सौमित्रिणा लक्ष्मणेन, त्यक्तां परिहीणां, सध्रीचीं सहचरीम्, त्रस्नुम् भयशीलाम्, एकिकाम् एकाकिनीम्, सीताम् जानकीम्, विज्ञाय तदाकारतः विदित्वा, क्षये निलये, क्षेमं कुशलम्, सुदुर्लभम् अतिदुष्प्राप्यम्, अमंस्त अज्ञासीत्। अनेकविशेषणानां विज्ञानेऽन्वयाद्दीपकेन सहानुमानालङ्कार इति सङ्करः।

कोशः—'त्रासुकं भीरुकं भयम् कुशलं क्षेममस्त्रियाम्।'

समासः—अत्यन्तं दुर्लभम् सुदुर्लभम्। 'कुगतिप्रादयः २।२।१८' इति स
तद्धितः—एकैव एकिका'-एकादाकिनिच्चासहाये ५।३।५२' इति च
कन् प्रत्यये टापि 'प्रत्ययस्थात् ७।६।४४' इति इत्वे, एकिकाम् ।

कृदन्तः—दुर् पूर्वात् लभ धातो. दुःखेन लभ्यते इत्यर्थे 'ईषद्दुःसु० ३।३।१
इति खल् । सहाञ्चतीत्यर्थे 'ऋत्विक्० ३।२।५९' इति क्विन्, 'सहस्य स
६।३।९५' इति सध्र्यादेशे 'अञ्चतेश्चोपसंख्यानम् ४।१।६' इति वार्तिकब
ङीप् । 'अचः ६।४।१३८' इत्यकारलोपः, 'चौ ६।३।१३८' इति दीर्घ
सध्रीची, ताम् । क्षीयतेऽस्मिन् इति अधिकरणे अच् क्षयः=गृहम् ।

वाच्यपरिवर्तनम्—काकुत्स्थेन क्षेमः सुदुर्लभः अमानि ॥ ७ ॥

इतः परं द्विकर्मकान् दुहादीन् पद्यत्रयेणाख्याति[1]—

> सोऽपृच्छल्-लक्ष्मणं सीतां याचमानः शिवं सुरान् ।
> रामं यथास्थितं सर्वं भ्राता ब्रूते स्म विह्वलः ॥ ८ ॥

अन्वयः—सुरान् शिवं याचमानः सः लक्ष्मणं सीताम् अपृच्छत् । विह्व
भ्राता रामं यथास्थितं सर्वं ब्रूतेस्म ।

हिन्दी—देवताओंसे शुभकी कामना करनेवाले रामने लक्ष्मणसे सीता
बारेमें पूछा । विह्वल ( लक्ष्मणने ) रामसे ठीक-ठीक सब कह दिया ।

व्याख्या—सुरान् अमरान्, शिवम् भद्रम्, याचमानः प्रार्थयमानः, सः राम
लक्ष्मणं सौमित्रिम्, सीताम् जानकीम्, अपृच्छत् अन्वयुङ्क्त । विह्वलः विक्लव
भ्राता लक्ष्मणः, रामं राघवं, यथास्थितं यथावृत्तं, सर्वम् समग्रम्, ब्रूतेस्म वद
स्म । सुरान्, लक्ष्मणम् रामम् च, त्रिष्वपि 'अकथितं च १।४।५१' इति कर्मसंज्ञा
शिवम्, सीताम्, यथास्थितं, सर्वम् इत्यत्र 'कर्तुरीप्सिततमं कर्म १।४।४९' इ
कर्मसंज्ञा । उभयत्र कर्मणि द्वितीया । रामस्यानेकक्रियान्वयाद् दीपकः । इ
ऊनविंशति पद्यान्तं दीपकच्छटा दृशोलिमा ।

कोशः—'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ।'
'प्रश्नोऽनुयोगः पृच्छा च ।'

वाच्यपरिवर्तनम्—याचमानेन तेन लक्ष्मणः सीताम् अपृच्छयत, विह्वले
भ्रात्रा रामः यथास्थितं सर्वम् उच्यते स्म ॥ ८ ॥

---

1. दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं विबुधैः ॥

विलापप्रकारमेवाख्याति युग्मेन—

इहाऽऽसिष्टाऽशयिष्टेह सा, स-खेलमितोऽगमत् ।
अग्लासीत् संस्मरन्नित्थं मैथिल्या भरताऽग्रजः ॥ १२ ॥

अन्वयः—सा (सीता) इह आसिष्ट, इह अशयिष्ट, इतः सखेलम् अगमत् । इत्थम् मैथिल्याः संस्मरन् भरताग्रजः अग्लासीत् ( तया विनेति शेषः ) ।

हिन्दी—वह ( सीता ) यहाँ बैठती थी, यहाँ सोती थी, यहाँसे खेल करती हुई जाती थी—इस प्रकार सीताकी स्मृति करते हुए रामचन्द्रजी म्लान हो रहे थे ।

व्याख्या—सा सीता, इह अस्मिन् प्रदेशे, आसिष्ट उपविशतिस्म । इह अत्र स्थले, अशयिष्ट शेते स्म । इतः अस्मात् स्थानात्, सखेलम् सक्रीडम्. अगमत् गच्छति स्म । इत्थम् इति, मैथिल्याः सीतायाः, संस्मरन् चिन्तयन्, भरताग्रजः रामः, अग्लासीत् ग्लायतिस्म, तया विनेति शेषः ।

कोशः—'व्याजोऽपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम्' ।

तद्धितः—'इदमो हः ५।३।११' इति हप्रत्यये 'इदम इश् ५।३।३' इति इशादेश इह ।

कारकः—'अधीगर्थदयेशां कर्मणि २।३।५२' इति कर्मणि षष्ठी मैथिल्या इति ।

तिङन्तः—आस उपवेशने, शीङ् स्वप्ने इति आदादिकयोर्लुङि आसिष्ट, अशयिष्ट । ग्लै म्लै हर्षक्षये इति धातोः 'आदेच उपदेशेऽशिति ६।१।४५' इत्यात्वे 'यमरमनमातां सक् च ७।२।७३' इति सिच इटि, धातोः सगागमे च अग्लासीत् । 'पुषादिद्युताद्यॢदितः परस्मैपदेषु ३।१।५५' इति च्लेरङि अगमत् ।

वाच्य-—तया आसि, अशायि, अगामि । संस्मरता भरताग्रजेन अग्लायि ।

तथैव पुनस्तत्प्रलापमाख्याति—

इदं नक्तं-तनं दाम पौष्पमेतद् दिवा-तनम् ।
शुचेवोद्बध्य शाखायां प्रग्लायति तया विना ॥ १३ ॥

अन्वयः—( भरताग्रजः ) इदम् नक्तन्तनम्, एतत् दिवातनं पौष्पं दाम तया विना शुचा शाखायां ( आत्मानम् ) उद्बध्य इव प्रग्लायति ( इति तर्कयन् अग्लासीत् ) ।

हिन्दी—भरतके ज्येष्ठ भाई ( राम ) यह ( शाखामें लटकती ) रातकी और यह दिनकी पुष्पमाला सीताके बिना मानों कि शाखामें अपनेको फांसी देकर मर गयी है—ऐसा तर्क करते हुए म्लान हो रहे थे ।

व्याख्या—[ भरताग्रजः ( रामः ) शाखायां लम्बमानं दाम विकल्पयति] इदम् शाखायां लम्बमानम्, नक्तन्तनम् रात्रिगम्, एतत् पुरो दृश्यमानम्, दिवा-तनम् दिनभवम्, पौष्पम् कौसुमम्, दाम माल्यम्, तया सीतया, विना पृथक्, शुचा शोकेन, शाखायाम् विटपे, (आत्मानम्) उद्वध्य ऊर्ध्वं वद्ध्वा, इव मन्ये (मृता) प्रग्लायति प्रम्लायति ( इति वितर्कयन् अग्लासीदिति पूर्वेणान्वयः ) ।

कोशः—'दिवाह्नीत्यथ दोषा च नक्तं च रजनावपि ।'

तद्धितः—दिवातनम्, नक्तन्तनम् उभयत्रापि 'सायं-चिरम्० ४।३।२३' इति ट्यु तुटौ । पुष्पाणामिदम् इत्यर्थे 'तस्येदम्० ४।३।१२०' इत्यण् पौष्पम्, दाम विशेषणम् ।

वाच्यपरिवर्तनम्—अनेन नक्तन्तनेन, एतेन दिवातनेन पौष्पेण दाम्ना प्रम्लायते ( इति भरताग्रजेन अग्लायि ) ॥ १३ ॥

भूयस्तद्विलापमाह—

ऐक्षिष्महि मुहुः सुप्तां यां मृता ऽऽशङ्कया वयम् ।
अ-काले दुर्मरमहो, यज् जीवामस् तया विना ॥ १४ ॥

अन्वयः—( पुरा ) वयं सुप्तां यां मृताशङ्कया मुहुः ऐक्षिष्महि । अहो अकाले दुर्मरम् यत् तया विना ( साम्प्रतम् ) जीवामः ।

हिन्दी—( पहले ) हमलोग सोई हुई सीताको मर जानेकी शङ्कासे बार-बार देखते थे । हाय, अकालमें मरना नहीं होता, जो उसके विना भी आज हम जी रहे हैं !

व्याख्या—वयम् अहं त्वं च, सुप्ताम् निद्रितां, यां सीताम्, मृताशङ्कया गतजीवितेति सन्दिह्य, ( प्रेमाधिक्यात् ) मुहुः पौनःपुन्येन, ऐक्षिष्महि अद्राक्ष्म (स्पृशामः स्म) । अहो आश्चर्यम्, अकाले असमये, दुर्मरम् मरणाभावः ( मरणमसम्भवि इत्यर्थः ) । यत् कारणम्, तया सीतया, विना पृथगपि, वयम् ( साम्प्रतम् ), जीवामः प्राणान् धारयामः ।

कोशः—'व वा यथा तथैवैवं साम्येऽहो ही च विस्मये' ।

कारकः—'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् २।३।३२' इति विनायोगे तयेति तृतीया । 'अस्मदो द्वयोश्च १।२।५९' इति द्वित्वेऽपि वहुत्वम् ।

कृदन्तः—( दुःखेन ) मर्तुमशक्यम् इत्यर्थे 'ईषद्दुःसुषु० ३।३।१२६' इति खलि दुर्मरम् ।



वाच्य०—अस्माभिः सुप्ता या ऐक्षि । दुर्मरेण भूयते । यत् जीव्यते ॥१४॥

रामविलापगाम्भीर्यं दर्शयन् प्रकीर्णकं समाप्य सिजधिकारं सापवादं वक्ति—

अ-क्षेमः परिहासो ऽयं, परीक्षां मा कृथा मम।
मत्तो मा ऽन्तर्धिथाः सीते! मा रंस्था जीवितेन नः॥ १५॥

( इत आरभ्य ३४ श्लोकावधि सम्प्रति सापवादस्य सिचोऽधिकारेण रामविलापमाह। 'च्लि लुङि ३।१।४३' इत्यतः क्रमशः सूत्राणां प्रयोगेषु प्रवृत्तिरिति, अष्टाध्यायीपुस्तकं हस्ते धृत्वा स्वयं प्रयोगाः साध्या लुङ्लकारीया इति )।

अन्वयः—(हे सीते) अयं परिहासः अक्षेमः। मम परीक्षां मा कृथाः। मत्तः मा अन्तर्धिथाः। नः जीवितेन मा रंस्थाः।

हिन्दी—अयि सीते! यह दिल्लगी घातक है। मेरी परीक्षा मत करो। मुझसे छिपी न रहो। मेरे जीवनसे मत खेलो ( नहीं तो मैं मर जाऊँगा यही विलापका गाम्भीर्य है )।

व्याख्या—( हे सीते ) अयम् वर्तमानः, एषः परिहासः ( अन्तर्धानरूपा क्रीडा ), अक्षेमः अकल्याणकरः। मम रामस्य, परीक्षां परीक्षणम्, मा कृथाः मा कार्षीः ( असह्यत्वात् )। मत्तः मत्सकाशात्, मा अन्तर्धिथा अन्तर्धानं मा गमः। नः अस्माकम्, जीवितेन असुभिः, मा रंस्थाः मा क्रीडीः ( अत्र रामोक्तौ क्वचिदेकत्वम् क्वापि बहुत्वन्तु बुद्धिविभ्रमाज्ज्ञेयम् )।

कोशः—'द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च।'
'आयुर्जीवितकालो ना जीवातुर्जीवनौषधम्।
पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम्॥'

समासः—न क्षेमः अक्षेमः। 'अन्तर्द्धौ येनादर्शनमिच्छति १।४।२८' इत्युपादानात् मत्त इत्यत्र पञ्चमी।

तिङन्तः—अस्मद् शब्दात् 'पञ्चम्यास्तसिल् ५।३।७' इति तसिलि, 'प्रत्ययोत्तरपदयोश्च ७।२।९८' इति मदादेशे मत्त इति पञ्चम्यन्तं 'तद्धितश्चासर्वविभक्तिः १।१।३८' इत्यव्ययम्।

कृदन्तः—परिहसनम् इत्यर्थे 'भावे ३।३।१८' इति घञि, 'उपसर्गस्य० ६।३।१२२' इति पाक्षिके दीर्घे परिहासः परीहास इति रूपद्वयम्।

तिङन्तः—डुकृञ् करणे इति तानादिकाद्धातोर्लुङि 'च्लि लुङि ३।१।४३' शपोऽपवादके च्लौ, तस्य 'च्लेः सिच् ३।१।४४' इति सिचि, 'उश्च १।२।१२' इति सिचः कित्वाद् गुणाभावे 'ह्रस्वादङ्गात् ८।२।२७' इति सिचो लोपे, 'न माङ्योगे

६।४।७४' अडागमाभावे मा कृथाः । एवम् मा अन्तर्धिथाः । अत्र 'स्थाघ्वोरि
१।२।१७' इति कित्वमित्त्वमिति विशेषः ।

वाच्यपरिवर्तनम्—अनेन परिहासेन अक्षेगेण भूयते । परीक्षा मा ऽकारि
मा अन्तर्धायि । मा रमि ॥ १५ ॥

अधिकारकाण्डफलम् पमुदीरयन् विलापमेव वर्णयति—

> अहं न्यवधिषं भीमं, राक्षसं क्रूर-विक्रमम् ।
> मा घुक्षः पत्युरात्मानं मा न श्लिक्षः प्रियं प्रिये ! ॥ १६ ॥

अन्वयः—( अयि ) प्रिये ! अहम् क्रूरविक्रमम् भीमं राक्षसम् न्यवधिषम्
पत्युः आत्मानम् मा घुक्षः । प्रियम् ( माम् ) मा न श्लिक्षः ( आश्लिष एवं
काकुः ) ।

हिन्दी—अयि प्रिये ! मैंने भयानक पराक्रमी भयङ्कर राक्षसको मार डा
है । ( अपने ) पतिसे अपनेको मत छिपाओ । मुझ प्रियको आकर अव
आलिंगन करो ।

व्याख्या—( अयि ) प्रिये वल्लभे ! अहम् रामः, क्रूरविक्रमम् भीषणप
क्रमम्, भीमम् भयानकम्, राक्षसम् निशाचरम्, न्यवधिषम् न्यहनम्, पत्
वल्लभात् ( मत्तः ), आत्मानम् स्वम्, मा घुक्षः मा संवृथाः । ( माम् ) प्रिय
प्राणवल्लभम्, मा न श्लिक्षः मा न परिरब्धाः ( आलिङ्गय एवेति काकुः ) ।

कोशः—'शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता' ।

समासः—क्रूरः विक्रमो यस्य सः । 'सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषे
इति नामनव्याहारात् निश्चयार्थोऽवसेयः । पत्युरित्यत्र 'ख्यत्यात्परस्य ६।१।११
इत्युत्वम् ।

तिङन्तः—हन्तेर्लुङि 'लुङि च २।४।४३' इति हनो वधादेशे न्यवधिषम्
गुह धातोः लुङि 'शल इगुपधादनिटः क्सः ३।१।४५' च्लेः क्सादेशे, 'हो ढः ८
२१' ढत्वे, भष्भावकत्वषत्वानि, अडागमनिषेधे घुक्षः । एवं 'श्लिष आलिङ्गने ३
४६' इति क्से 'षढोः कः सि ८।२।४१' षः के, सः पे, तयोः संयोगे श्लिक्ष इति

वाच्यपरिवर्तनम्—मया क्रूरविक्रमः भीमः राक्षसः न्यवधि । आत्मा प
मा गाहि । प्रिये ! मा न श्लेषि ॥ १६ ॥

भूयो विलपति रामः—

> मा स्म द्राक्षीर् मृषा दोषं, भक्तं मां वाक्...
> शैलं ...धिप्यद् वामा, नदीं नु प्रत्यदुद्रुवत् ॥ १७ ॥

अन्वयः—अयि प्रिये ! मृषा दोषम् मा स्म द्राक्षीः । मा भक्तं माम् अतिचिक्लिशः ( स्वयमनुमिनोति ) । ( अथवा ) वामा ( प्रतिकूला सती सा ) शैलं नु अशिश्रियत्, नदीं नु प्रति अदुद्रुवत् ।

हिन्दी—अयि प्रिये ! व्यर्थ दोष मत देखो । मुझ भक्तको अधिक क्लेश न दो । क्या प्रतिकूल होकर वह पर्वत पर चढ़ गयी, या नदीकी ओर दौड़ गयी है ?

व्याख्या—अयि प्रिये ! मृषा मिथ्या, दोषम् दूषणम्, मा स्म द्राक्षीः न ऐक्षिष्ठाः । भक्तं सेवकं, मां रामम्, मा अतिचिक्लिशः अधिकं न विक्लेशय (स्वयमनुमिनोति) । (अथवा) वामा प्रतिकूला सती, शैलम् पर्वतम्, अशिश्रियत् असेविष्ट, नु किम् । नदीं सरितं प्रति, अदुद्रुवत् अगमत्, नु किम् (इति वितर्के) ।

कोशः—'मृषा मिथ्या च वितथे यथार्थं तु यथातथम्' ।

तिङन्तः—मा द्राक्षीरिति । दृशिर् प्रेक्षणे इति धातोः 'स्मोत्तरे लङ् च ३।३।१७६' इति चाल्लुङि, क्सस्य 'न दृशः ३।१।४७' इति निषेधे, च्लेः सिचि, 'सृजिदृशोर्झल्यमकिति ६।१।६८' इत्यमि, 'वदव्रजहलन्तस्याचः ७।२।३' इति वृद्धौ, 'व्रश्चभ्रस्ज० ८।२।३६' इति षत्वे, 'षढोः कः सि ८।२।४१' कत्वे, षत्वे च रूपम् । क्लिशेर्ण्यन्ताल्लुङि, च्लौ, तस्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८' इति चङि, 'णौ चङ्युपधाया ह्रस्वः ७।४।१' इति ह्रस्वे, ततः 'णेरनिटि ६।४।५१' इति णिलोपे, क्लिश् इत्यस्य द्वित्वेऽभ्यासकार्येऽडागमाऽभावे अतिचिक्लिशः । अशिश्रियदुद्रुवदिति पूर्वसूत्रेण चङि, द्वित्वेऽभ्यासकार्ये 'अचिश्नु० ६।४।७७' इतीयङुवङौ ।

वाच्यपरिवर्तनम्—दोषो मास्म दर्शि । भक्तोऽहं (त्वया) मा अतिक्लेशयिषि । वामया शैलोऽश्रायि, नदी प्रत्यद्रावि नु ॥ १७ ॥

रामस्यैव दशां वर्णयन्ति—

ऐ वाचं देहि धैर्यं नस् तव हेतोरसुस्रुवत् ।
त्वं नो मतिमिवा ऽधासीर् नष्टा प्राणानिवाऽदधः ॥ १८ ॥

अन्वयः—ऐ वाचं देहि, तव हेतोः नः धैर्यम् असुस्रुवत् । नष्टा त्वं नः मतिम् अधासीः इव, प्राणान् अदध इव ।

हिन्दी—ऐ (सीते) ! बोलो, तुम्हारे लिये हमारा धैर्य टूट गया है । खोई हुई तूने हमारी बुद्धि और प्राणोंको मानो पी लिया है ।

व्याख्या—ऐ हे ( सीते ) ! वाचम् वाणीम्, देहि दत्स्व ( सम्भाषस्वेति यावत् ) । तव सीतायाः, हेतोः कारणात्, नः अस्माकम् (रामलक्ष्मणयोरित्यर्थः), धैर्यम् धीरता, असुस्रुवत् अदुद्रुवत् । नष्टा अदृश्यभूता, त्वम् सीता, नः अस्माकम्,

मतिम् बुद्धिम्, अधासीः अपा इव, प्राणान् असून्, अदध इव अधासीः ननु ( इह इवेति उत्प्रेक्षायाम् ) ।

कोशः—'हेतुर्ना कारणं वीजं निदानं त्वादिकारणम्' ।

कृदन्तः—मन् धातोः 'स्त्रियां क्तिन् ३।३।९४' इति क्तिनि अनुदात्तोपदेश० ६।४।३७' नलोपे मतिः । णश अदर्शने इत्यस्य क्तप्रत्यये 'व्रश्च० ८।२।३६' इति षत्वे, ष्टुत्वे, टापि नष्टाः ।

तिङन्तः—दा-धातोर्लोटि 'घ्वसोरेद्धा० ६।४।११९' इत्येत्वेऽभ्यासलोपे देहि। धेट् पाने इति धातोर्लुङि 'विभाषा धेट्श्व्योः ३।१।४९' इति वैकल्पिके चङि, द्वित्वादिकार्ये, 'आतो लोप इटि च ६।४।६४' इत्यालोपे अदधः । पक्षे 'यमरम० ७।२।७३' इति सगिटोः अधासीः ।

वाच्यपरिवर्तनम्—ऐ वाग् दीयताम् । धैर्येणास्नावि । नष्टया त्वया मतिर्धायि । प्राणा अधायिषत ॥ १८ ॥

पुनरपि कथयति—

> रुदतो ऽशिश्वियच् चक्षु-रास्यं हेतोस् तवाऽश्वयीत् ।
> म्रिये ऽहं मां निरास्थश् चेन् मा न वोचश् चिकीर्षितम् ॥ १९ ॥

अन्वयः—( ऐ सीते ) तव हेतोः रुदतः ( मे ) चक्षुः अशिश्वियत्, आस्यम् अश्वयीत् । ( त्वम् ) मां निरास्थः चेद् अहम् म्रिये । चिकीर्षितम् ( निजम् ) मा न वोचः ( अवश्यं ब्रूहि इति ) ।

हिन्दी—ऐ सीते तुम्हारे निमित्त रोते-रोते मेरी आँखें तथा मुख सूज गये हैं । यदि तुम मुझे निराश करोगी तो मैं मर जाऊँगा । अपनी इच्छा अवश्य कहो ।

व्याख्या—(ऐ सीते !) तव अन्तर्हितायाः, हेतोः कारणात्, रुदतः अश्रुबिन्दुश्चतः, ( मे ) चक्षुः नयनम्, अशिश्वियत् अस्फायिष्ट, आस्यन् मुखम्, अश्वयीत् अप्यायिष्ट। ( त्वम् ) माम् स्वपतिम्, निरास्थः उपेक्षिष्ट चेद्, अहम् रामः, म्रिये प्राणान् त्यजामि । ( त्वम् ) चिकीर्षितम् कर्तुमिष्टम् ( निजम् ), मा न वोच मा नहि वादीः ( अवश्य वद ) ।

कोशः—'लोचनं नयन नेत्रमीक्षणं चक्षुरक्षिणी' ।

कृदन्तः—कृ धातोः सनि 'इको झल् १।२।९' इति कित्वेन गुणाभावे 'अज्झनगमां सनि ६।४।१६' इति दीर्घे, 'ऋत इद्धातोः ७।१।१००' रपरे इत्वे

'हलि च ८।२।७७' इति दीर्घे, षत्वे, चिकीर्ष इत्यस्य धातुत्वात् क्त प्रत्यये, इटि, 'अतो लोपः ६।४।४८' इति अलोपे चिकीर्षितम् ।

तिङन्तः—अशिश्वियत्—अत्र 'विभाषा धेट्श्व्योः ३।१।४९' इति पूर्वसूत्रेणैव चङि, द्वित्वादौ 'अचि० ६।४।७७' इतीयङ् । अश्वयीदित्यत्र चङोऽभावे च्लेः सिचि, 'ह्म्यन्तक्षण० ७।२।५' इति वृद्धिनिषेधे, अडागमे अश्वयीत् । मृङ् प्राणत्यागे इति धातोः लटि 'म्रियतेर्लुङ्लिङोश्च १।३।६१' इति नियमात्तङि 'रिङ् शयग्लिङ्क्षु ७।४।२८' इति रिङि इयङि च कृते म्रियेे । निर्पूर्वात् असु क्षेपणे इति धातोर्लुङि 'अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२' इति च्लेरङि 'अस्यतेस्थुक् ७।४।१७ इति थुगागमे निरास्थः । एवमेव वोचः । 'वच उम् ७।४।२०' इति उमागमो विशेषः ।

वाच्यपरिवर्तनम्—चक्षुषा आस्येन अश्वायि । ( त्वया ) अहं निरासिषि चेत् मया म्रियते । ( त्वया ) चिकीर्षितम् मा न वक्षि ॥ १९ ॥

सम्प्रति लक्ष्मणं तद्विषयं पृच्छति—

लक्ष्मणाऽऽचक्ष्व, यद्याख्यत् सा किञ्चित् कोप-कारणम् ।
दोषे प्रतिसमाधानमज्ञाते क्रियतां कथम् ॥ २० ॥

अन्वयः—अये लक्ष्मण ! सा कोपकारणम् किञ्चिद् यदि आख्यत् ( तद् ) आचक्ष्व । अज्ञाते दोषे कथं प्रतिसमाधानं क्रियताम् ?

हिन्दी—अये लक्ष्मण ! सीताने क्रोधका कारण कुछ यदि कहा हो तो उसे कहो । अज्ञात दोष कैसे दूर किये जा सकते हैं ?

व्याख्या—हे लक्ष्मण सौमित्रे ! सा सीता, कोपकारणम् क्रोधहेतुम्, किञ्चित् किमपि ( कथनीयम् ), यदि चेत्, आख्यत् अभ्यधात्, ( तद् ) आचक्ष्व कथय । अज्ञाते अविदिते, दोषे दूषणे, कथं केन प्रकारेण, प्रतिसमाधानम् मार्जनम् ( प्रत्युत्तरमिति यावत् ), क्रियताम् विधीयताम् ( अनुष्ठीयतामित्यर्थः ) । यद्यर्थकल्पनयातिशयोक्तिः, अप्रतिसमाधानेऽज्ञानहेतूक्तौ काव्यलिङ्गमिति सङ्करः ।

कोशः—'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' ।

तिङन्तः—आङ्पूर्वात् चक्षिङ् व्यक्तायां वाचि इति धातोर्लोटि स्व-प्रत्यये, शपो लुकि, 'षढोः कः सि ८।२।४१' षस्य ककारे, 'स्कोः संयोगाद्योः० ८।२।२९' इति कलोपे, सकारस्य 'आदेशप्रत्यययोः ८।३।५९' इति षत्वे, कृषोः क्षकारे आचक्ष्व । आख्यत् इत्यत्र ख्या प्रकथने अथवा आङ् पूर्वस्य तस्यैव 'चक्षिङः ख्याञ् २।४।५४' इति ख्याञादेशे पूर्वसूत्रेण च्लेरङि 'आतो लोप इटि च ६।४।६४' इति आलोपे आख्यत् ।

वाच्यपरिवर्तनम्—तया कोपकारणम् यदि आख्यायि (तद्) आचक्ष्यताम्; अहं प्रतिसमाधानम् करवै ॥ २० ॥

सम्प्रति रामविलापमुपसंहरंस्तस्य मूर्च्छामाह—

इह सा व्यलिपद् गन्धैः स्नान्तीहाऽभ्यषिचज् जलैः ।
इहा ऽहं द्रष्टुमाह्वं तां, स्मरन्नेवं मुमोह सः ॥ २१ ॥

अन्वयः—सा इह गन्धैः ( स्वाङ्गानि ) व्यलिपत् । इह स्नान्ती जलैः आत्मानम् अभ्यषिचत् । अहं तां द्रष्टुम् इह आह्वम् । एवं स्मरन् स मुमोह ।

हिन्दी—यहाँ वह सुगन्धित द्रव्योंसे अपने अङ्गोंको लेपती थी । यहाँ स्नान करती हुई जलसे अपनेको तथा मुझे सींचती थी । यहाँ मैंने उसे देखनेके लिये बुलाया था । इस प्रकार स्मरण करते हुए रामचन्द्रजी मूर्छित हो गये ।

व्याख्या—सा सीता, इह अस्मिन् स्थाने, गन्धैः चन्दनादिद्रव्यैः, ( आत्मानम् ) व्यलिपत् अचर्चयत् । इह अत्र स्थले, स्नान्ती गात्र-शुद्धिं कुर्वती, जलैः वारिभिः, ( आत्मानम् ) अभ्यषिचत् अभ्यसौषीत् ( हस्तयन्त्रमुक्तैरित्यर्थः ) । इह अस्मिन् प्रदेशे, अहम् रामः, तां सीतां, द्रष्टुम् अवलोकयितुम्, आह्वम् आकारयम् । एवम् इत्थम्, स्मरन् अधीयन्, स रामः, मुमोह मुमूर्च्छ ( विलापैस्तस्य गतोऽभूत् ) । दीपकः काव्यलिङ्गं चेति संकरः ।

कोशः—'आपः स्त्री भूम्नि वार्वारि सलोल सलिलं जलम् ।

तिङन्तः—अभिपूर्वात् षिच क्षरणे इति तौदादिक-धातोः लुङि, 'लिपिसिचिह्वश्च ३।१।५३' इति च्लेरङि, अडागमे, 'प्राक्सितादड्व्यवायेऽपि ८।३।६३' इति षत्वे, यणि अभ्यषिचत् । एवम् अलिपत् । आह्वम् इत्यत्र आतो लोपो विशेषः ।

वाच्यपरिवर्तनम्—तया व्यलेपि आत्मा । स्नान्त्या आत्मा अहं च अभ्यषिक्ष्वहि । मया आह्वायि । एवं स्मरता तेन मुमुहे ॥ २१ ॥

इतः प्रभृति सिजधिकारेणैव रामदशामाख्याति—

तस्याऽलिपत शोकाऽग्निः स्वान्तं काष्ठमिव ज्वलन् ।
अभिस्वैवाऽनिलः शीतो वने तं न त्वजिह्लदत् ॥ २२ ॥

अन्वयः—ज्वलन् शोकाग्निः काष्ठम् इव तस्य स्वान्तम् अलिपत । वने शीतः वायुः तम् अलिप्त एव, न तु अजिह्लदत् ।

हिन्दी—जलते हुए शोकरूपी अग्निदेवने ( सूखे ) काष्ठके समान उनके हृदयको दीप्त किया । वनमें शीतल वायुने भी उनको दीप्त ही किया, सुख नहीं दिया ।

व्याख्या—ज्वलन् दीप्यमानः, अग्निः वह्निदेवः, काष्ठम् शुष्कतृणम्, इव यथा, तस्य रामस्य, स्वान्तम् हृदं, अलिपत अधाक्षीत् ( अत्र लेपो दाहः )। शीतः शिशिरः, अनिलः वायुदेवः, तम् रामम्, अलिप्त दीपितवान्, एव निश्चयतः, न तु अजिह्लदत् नं आननन्दत् (न नन्दयति स्मेति यथावत्)। रूपकोपमाविशेषोक्तीनां संकरः।

कोशः—'स्वान्तं हृन्मानसं मनः'।
'अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः'।
'शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः'।

समासः—शोक एक अग्निः। 'मयूरव्यंसकादयश्च १।२।७२' इति रूपक-तत्पुरुष-समासः।

तिङन्तः—अलिपत अलिप्त इति—'आत्मनेपदेष्वन्यतरस्याम् ३।१।५४' इति वैकल्पिके च्लेरङि, अङभावे च, झलो झलि ८।२।२६' इति सिचो लोपे रूपद्वयम्। अजिह्लदत्—ह्लादेर्ण्यन्तात् 'णिश्रिद्रु० ३।१।४८' इति च्लेरङि, 'णौ चङ्युपधाया ह्रस्वः ७।४।१' इति ह्रस्वे, णेर्लोपे, द्वित्वेऽभ्यासकार्येऽडागमेऽजिह्लदत्।

कृदन्तः—'क्षुब्धस्वान्त० ७।२।१८' इति निपातनात् स्वान्तमिति साधुः।

वाच्यपरिवर्तनम्—ज्वलता शोकाग्निना स्वान्तं शीतेनानिलेन अलेपि एव, काष्ठमिवालेपि एव, न अह्लादि ॥ २२ ॥

पुनः रामदशामेवाख्याति—

स्नानभ्यषिञ्चताऽम्भोऽसौ रुदन् दयितया विना।
तथा ऽभ्यषिक्त वारीणि पितृभ्यः शोक-मूर्च्छितः ॥ २३ ॥

अन्वयः—स्नान् असौ दयितया विना शोकमूर्छितः रुदन् (स्वशिरसि) अम्भः अभ्यषिञ्चत। तथा शोकमूर्च्छितः रुदन् पितृभ्यः वारीणि अभ्यषिक्त।

हिन्दी—स्नान करते हुए ( रामचन्द्रजीने ) प्रियाके विना शोकमूर्च्छित हो पितरोंके लिये रोते हुए जल दान ( तर्पण-कर्म ) किया।

व्याख्या—स्नान् स्नानं कुर्वन्, असौ रामः, दयितया प्रियया, विना पृथक्, शोकमूर्च्छितः मन्युविमूढः, रुदन् अश्रु विमुञ्चन्, ( स्वशिरसि ) अम्भः अम्बु, अभ्यषिञ्चत क्षिप्तवान्। तथा तद्वत्, शोकमूर्च्छितः मन्युविमूढः, पितृभ्यः अग्निष्वात्तादिभ्यः, वारीणि तोयानि, अभ्यषिक्त अदत्त ( तर्पितवान् इत्यर्थः )। दीपक-काव्यलिङ्ग-समासोक्तीनां संकरः।



कोशः—'अम्भोर्णस्तोय-पानीयनीरक्षीराम्बुशम्बरम्'।

तिङन्तः—पूर्वसूत्रेणैवात्मनेपदे लुङि वैकल्पिकोऽङ् अभ्यपिचत, अङ अभ्यषिक्त इति । 'प्राक् सितादड्व्यवायेऽपि ८।३।६३' षत्वम् इति विशेषः।

वाच्यपरिवर्तनम्—स्नाता अमुना शोकमूर्च्छितेन रुदता अम्भः अभ्यषि वारीणि अभ्यपिक्षत ॥ २३ ॥

तथैव रामदशामाख्याति—

तथाऽऽर्तोऽपि क्रियां धर्म्यां स काले नाऽमुचत् क्वचित् ।
महतां हि क्रिया नित्या छिद्रे नैवाऽवसीदति ॥ २४ ॥

अन्वयः—तथा आर्तः अपि सः धर्म्यां क्रियाम् क्वचित् काले न अमुचत् महतां नित्या क्रिया छिद्रे ( अपि ) नैव अवसीदति ।

हिन्दी—उस प्रकार दुःखी होते हुए भी उन्होंने धार्मिक क्रियाओंको छोड़ा, क्योंकि बड़े लोगोंकी नित्य-क्रियाएँ विपत्तिमें भी विलुप्त नहीं होतीं।

व्याख्या—तथा तेन प्रकारेण, आर्तः व्यथितोऽपि, सः रामः, धर्म्यां धार्मि क्रियां सन्ध्यावन्दनादिकाम्, क्वचित् कदाचिदपि, काले समये, न नहि, अमु अत्याक्षीत् । हि यतः, महताम् सताम् ( शिष्टानामिति यावत् ), नित्या नि क्रिया धर्मानुष्ठितिः, छिद्रे व्यसने, अपि निश्चयेन, नैव नहि हि, अवसी नश्यति । विशेषसमर्थकं सामान्यमित्यर्थान्तरन्यासोऽलङ्कारः ।

कोशः—'शाश्वतस्तु ध्रुवो नित्य-सदातन-सनातनाः' ।
'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्' ।

तद्धितः—धर्मादनपेता धर्म्या 'धर्मपथ्यर्थन्यायादनपेते ३.४।९२' इति अलोपे, टापि धर्म्या ।

कृदन्तः—कृ धातोः 'कृञः श च ३।३।१००' इति श प्रत्यये, 'रिङ् शयग्लिङ्क्षु ७।४।२८' इति रिङ्, ततः 'अचिश्नु० ६।४।७७' इतीयङि क्रिय टापि, दीर्घे—क्रिया ।

तिङन्तः—मुच्लृ मोचने इति तौदादिकाद्धातोः लुङि, च्लौ, तस्य लृदित च्लेरङि अमुचत् । षद्लृ विशरणगत्यवसादनेषु इति धातोः लटि, शे, 'पाघ्रा ७।३।७८' इति सीदादेशे अवसीदति ।

वाच्यपरिवर्तनम्—आर्तेन तेन धर्म्या क्रिया न अमोचि । नित्यया क्रिय अवसद्यते ॥ २४ ॥

क्रुद्धस्य रामस्य शूराह्वानमाह—

आह्वास्त स मुहुः शूरान् ... मुहुरह्वत राक्षसान् ।
एत सीताद्रुहः संख्ये प्रत्यर्थयत राघवम् ॥ २५ ॥

वाच्यपरिवर्तनम्—लिप्सुना रामेण गिरिः अन्वसर्पि । आयोधनम् अशासि ॥

इतश्चतुर्भिः पद्यै रामोक्तमेवाख्याति—

सीतां जिघांसू सौमित्रे राक्षसावारतां ध्रुवम् ।
इदं शोणितमभ्यग्रं संप्रहारेऽच्युतत् तयोः ॥ २८ ॥

अन्वयः—अये सौमित्रे ! सीतां जिघांसू राक्षसौ ध्रुवम् आरताम् । तयो.
हारे इदम् शोणितम् अभ्यर्णम् अच्युतम् ।

हिन्दी—हे लक्ष्मण ! सीताके मारनेकी इच्छावाले दो राक्षस निश्चय ही
आये हैं । उनके युद्धमें यह ताजा खून गिरा पड़ा है ।

व्याख्या—अये सौमित्रे लक्ष्मण ! सीतां जानकीं, जिघांसू जिहिंसिषू, राक्षसौ
ी, ध्रुवम् निश्चितम्, आरताम् आगमताम् । तयोः राक्षसयोः, सम्प्रहारे
, इदम् पुरोवर्ति, अभ्यर्णम् अभ्यग्रम्, शोणितम् रक्तम्, अच्युतत् अपतत् ।
क्षा ध्रुवशब्दोक्त्या ।

कोशः—'सम्प्रहाराभिसम्पातकलिसंस्फोटसंयुगाः'। (अभ्यग्रकोशः ६-१४६)॥

कृदन्तः—हन्तुमिच्छत इत्यर्थे हन्तेः सनि, द्वित्वेऽभ्यासकार्ये, जिहन् स इति
तो 'अभ्यासाच्च ७।३।५५' इति कुत्वेन हस्य घत्वे, 'अज्झनगमां सनि
।१६' इति दीर्घेऽनुस्वारे, पूर्वसूत्रेण उप्रत्यये, सुपि, द्विवचने जिघांसू ।

तिङन्तः—आङ्पूर्वात् ऋधातोः लुङि 'सर्तिशास्त्यर्तिभ्यश्च ३।१।५६' इति
, 'ऋदृशोऽङि गुणः ६।४।१६' इति गुणे आरताम् । च्युतिर् क्षरणे इति
र्मकात् लुङि, 'इरितो वा ३।१।५७' इति पाक्षिकेऽङि अच्युतत् ।

वाच्यपरिवर्तनम्—जिघांसुभ्यां राक्षसाभ्याम् आरि । अभ्यग्रेण अनेन
गतेन अच्योति ॥ २८ ॥

तदेव द्रढयति—

इदं कवचमच्योतीत् साऽश्वोऽयं चूर्णितो रथः ।
एह्यमुं गिरिमन्वेष्टुमवगाहावहे द्रुतम् ॥ २९ ॥

अन्वयः—इदं कवचम् अच्योतीत्, अयं साश्वः रथः चूर्णितः । एहि, सीताम्
ष्टुम् अमुम् गिरिम् द्रुतम् अवगाहावहे ।

हिन्दी—यह कवच गिरा है । यह घोड़ेके सहित रथ चूर्ण-चूर्ण हो गया
। हे लक्ष्मण ! चलो, सीताको ढूंढ़नेके लिये इस पर्वत पर जल्दी अभी-अभी
ा जाय ।

व्याख्या:—इदम् एतत् पुरो दृश्यमानम् इत्यर्थः, कवचम् अच्योतीत्,

अपप्तत् । अयम् एषः, साश्वः सहयः, रथः स्यन्दनः, चूर्णितः भग्नः (… शेषः)। (अये लक्ष्मण !) एहि चल, (सीताम्) अन्वेष्टुम् मार्गयितुं … मिति यावत्, अमुम् इमम् महान्तमित्यर्थः, गिरिम् अचलम्, द्रुतम् शीघ्रं … गाहावहे सर्वत आक्रामावः । स्फुटोऽत्रानुमानालङ्कारः ।

कोशः—'उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्' ।

समासः—अश्वैः सह वर्तते इति 'तेन सहेति तुल्ययोगे २।२।२८' इति … वोपसर्जनस्य ६।३।८२' इति सहस्य सादेशे साश्वः ।

कृदन्तः—अनु पूर्वाद् इष् धातोः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३… इति तुमुनि, गुणे, 'कृन्मेजन्तः १।१।३९' इति अव्ययसंज्ञया समानं रूपम् …

तिङन्तः—च्युतिर् धातोः 'इरितो वा ३।१।५७' इति सूत्रस्य पाक्षि… पक्षे सिचि अच्योतीत् ।

वाच्यपरिवर्तनम्—अनेन कवचेनाच्योति । अनेन साश्वेन चूर्णितेन … एयताम् । असौ गिरिः अवगाह्यते ॥ २९ ॥

पुनः समर्थयति—

> मन्युर् मन्ये[1] ममाऽस्तम्भीद् विषादोऽस्तभदुद्यतिम् ।
> अजारीदिव च प्रज्ञा, बलं शोकात् तथाजरत् ॥ ३० ॥

अन्वयः—मम मन्युः मन्ये अस्तम्भीत्, विषादः उद्यतिम् अस्तभत्, … अजारीद् इव, तथा बलम् शोकात् अजरत् ।

हिन्दी—मेरे शोकने गलेकी नाड़ियोंको रूँध दिया है । विषादने उ… रोक दिया है । प्रज्ञा मानो बुढ़ा गयी है । बल भी शोकसे जीर्ण हो गया है ।

व्याख्या—(अये लक्ष्मण !) मम रामस्य, मन्युः शोकः, मन्ये गल… अस्तम्भीत् स्तब्धवान् । विषादः विषण्णता, उद्यतिम् उद्योगम, अस्तभत् त… अरुधदित्यर्थः । प्रज्ञा बुद्धिः, अजारीद् जीर्णा जाता, इव मन्ये । तथा तद्वत्, सत्त्वम्, शोकात् दैन्यात्, अजरत् जीर्णं जातम् । उत्प्रेक्षा ।

कोशः—'पश्चाद्ग्रीवा शिरा मन्या नाडी तु धमनी शिरा' ।
'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' ।

---

१. स्तम्भुः सौत्रो धातुरकर्मक इति पक्षे 'मन्ये' इति क्रियापदम् । शोकः अस्तम्भीत् स्तब्धोऽभूदिति मन्ये एकार्थः । मन्युनाऽस्तम्भीति वा… वृत्तिः । नायं [illegible] … सकर्मकत्वात् ।

तिङन्तः—अस्तम्भीत् अस्तभत्, अजारीत् अजरत्, उभयत्र 'जृस्तम्भु० ३।१।
५८' इति अङ्–सिचौ ज्ञेयौ। अङ्पक्षे ... पः पूर्वत्र, उत्तरत्र 'ऋदृशोऽङि
गुणः ७।४।१६' इति गुणः।
वाच्यपरिवर्तनम्—मन्युना मन्ये अस्तम्भिषाताम्। विषादेन उद्यतिः
स्तम्भि। प्रज्ञया बलेन च अजारि ॥ ३० ॥

जटायुवधमाख्याति—

गृध्रस्येहाश्वतां पक्षौ कृत्तौ वीक्षस्व लक्ष्मण !।
जिघत्सोर् नूनमापादि ध्वंसोऽयं तां निशाचरात् ॥ ३१ ॥

अन्वयः—(अये) लक्ष्मण ! वीक्षस्व, इह गृध्रस्य कृत्तौ पक्षौ अश्वताम्।
नूनम् अयं ध्वंसः तां जिघत्सोः निशाचरात् आपादि।

हिन्दी—हे लक्ष्मण ! देखो यहाँपर गिद्धके काटे हुए डैने फैले पड़े हैं। निश्चय
ही उसे (सीताको) खाजानेकी इच्छा रखनेवाले निशाचरसे यह (पक्षच्छेद
रूप) विनाश हुआ है।

व्याख्या—(अये) लक्ष्मण सौमित्रे ! वीक्षस्व अवलोकय, इह अस्मिन् स्थले,
गृध्रस्य गृध्रनाम्नः पक्षिणः, कृत्तौ छिन्नौ, पक्षौ पतत्रे, अश्वताम् वृद्धिम् अग-
ताम्। नूनम् निश्चयेन, अयम् पक्षच्छेदरूपः, ध्वंसः विनाशः, तां सीतां, जिघत्सोः
अत्तुमिच्छोः, निशाचरात् राक्षसात्, आपादि अजनि। उत्प्रेक्षालङ्कारः।

तिङन्तः—टुओश्वि गतिवृद्ध्योः इति धातोः 'जृस्तम्भु० ३।१।५८' इति
अङि 'श्वयतेरः ७।४।१८' इति इकारस्याकारे, पररूपे अश्वताम्। पद गतौ
इति धातोः कर्तरि लुङि, 'चिण् ते पदः ३।१।६०' इति च्लेश्चिणि, वृद्धौ, 'चिणो
लुक् ६।४।१०४' इति त–प्रत्ययस्य लुकि अपादि।

कृदन्तः—अद भक्षणे इति धातोः सनि, 'लुङ्सनोर्घस्लृ २।४।३७' इति
घस्लादेशे, द्वित्वादिकार्ये, 'सःस्यार्द्धधातुके ७।४।४९' इति सस्य तकारे जिघत्स
धातोः उप्रत्यये जिघत्सु-शब्दस्य पञ्चम्येक-वचने रूपम्। 'घेर्ङिति ७।३।१११' इति
गुणे, 'ङसिङसोश्च ६।१।११०' इति पूर्वरूपम्।

वाच्यपरिवर्तनम्—कृत्ताभ्यां पक्षाभ्याम् अश्वायि। वीक्ष्यताम् त्वया। अनेन
ध्वंसेन आपादि ॥ ३१ ॥

रामस्य तेजस्वितां निर्वक्ति—

क्रुद्धो ऽदीपि रघु-व्याघ्रो, रक्त-नेत्रो ऽजनि क्षणात्।
अबोधि दुःस्थं त्रैलोक्यं, दीप्तैरापूरि भानु-वद् ॥ ३२ ॥

अन्वयः—क्रुद्धः रघुव्याघ्रः अदीपि। क्षणात् रक्तनेत्रः अजनि। त्रैलो दुःस्थम् अबोधि। भानुवत् दीप्तैः आपूरि।

हिन्दी—रघुवंशियोंमें श्रेष्ठ रामचन्द्रजी क्रोधसे दमकने लगे। क्षणभरमें उनके नेत्र लाल हो गये। तीनों लोकोंकी स्थितिको असम्भव मानने लगे, उन्होंने त्रैलोक्यका नाश करनेका विचार किया और वे सूर्यके समान पूर्ण हो गये।

व्याख्या—क्रुद्धः कुपितः, रघुव्याघ्रः रघुश्रेष्ठः (रामः), अदीपि दीप्तो क्षणात् स्वल्पकालादेव, रक्तनेत्रः अरुणलोचनः, अजनि अभूत। त्रैलोक्यम् त्रयम्, दुःस्थम् दुःखस्थम्, अबोधि अमंस्त (अधुनैव त्रिलोकीं विनाशयामीत्य यत्)। भानुवत् रविः इव, दीप्तैः ओजोभिः, अपूरि पूर्णोऽभूत्। दीपकाल

कोशः—'भानुर्हंसः सहस्रांशुस्तपनः सविता रविः'।

समासः—रघुषु व्याघ्रः रघुव्याघ्रः। सप्तमीतत्पुरुषः। रक्ते नेत्रे यस्य

तद्धितः—त्रयो लोकाः त्रैलोक्यम् इत्यर्थे 'चातुर्वर्ण्यादीनां स्वार्थ उपसं नम् ५।१।१२४' इति वार्तिकबलाद् स्वार्थे ष्यञ् प्रत्यये त्रैलोक्यम्। भानुतु इत्यर्थे 'तेन तुल्यं क्रिया चेद्वतिः ५।१।११५' इति वतिः, भानुवत्।

तिङन्तः—अदीपि, अजनि, अबोधि, अपूरि इत्यत्र 'दीपजनबुध० ३।१। इति चिणि 'चिणो लुक् ६।४।१०४' इति त-शब्दस्य लुक्। 'जनि-वध्यो ७।३।३५' इति वृद्धिनिषेधेनाजनीति। अबोधीत्यत्र 'पुगन्तलघूपधस्य च ७।३। इति गुणोऽपि।

वाच्यपरिवर्तनम्—रघुव्याघ्रेण अदीपि। रक्तनेत्रेण अजनि। त्रैलोक्यं दुः अबोधि। भानुवत् दीप्तैः अपूरि॥ ३२॥

रामस्यैवोत्साहं वर्णयति—

अतायिस्योत्तमं सत्त्वमप्यायि कृत-कृत्य-वत्।
उपाचायिष्ट सामर्थ्यं तस्य संरम्भिणो महत्॥ ३३॥

अन्वयः—अस्य उत्तमं सत्त्वम् अतायि, कृतकृत्यवत् अप्यायि। संरम्भि तस्य महत् सामर्थ्यम् उपाचायिष्ट।

हिन्दी—रामचन्द्रजी का उत्तम बल बढ़ा, कृतकृत्यके समान बढ़ा। पूर्ण होनेसे उनकी अन्तःशक्ति भी बढ़ गयी।

व्याख्या—अस्य रामस्य, उत्तमं श्रेष्ठम्, सत्त्वम् बलम्, अतायि अवर्द्धिष्ट। कृत्यवत् समाप्तक्रियवत्, अप्यायि वृंहितम्। संरम्भिणः क्रोधिनः, तस्य रामस्य, बृहत्, सामर्थ्यम् वीर्यम्, उपाचायिष्ट स्वयमेव अवर्द्धिष्ट। अनेकक्रियासम्बन्धाद

कोशः—'संरम्भः सम्भ्रमे कोपे'। 'सत्त्वं बले स्थिरांशे च'।

तिङन्तः—अतायि, अप्यायि इत्यत्र पूर्वसूत्रेणैव च्लेश्चिणि तलुक् च। उपपूर्वात् चिञ् चयने इति धातोः कर्म-कर्तरि लुङि, 'अचः कर्मकर्तरि ३।१।६२' इति चिणः अभावे सिचि, चिण्वद्भावे इटि च उपाचायिष्ट।

वाच्य०—उत्तमेन सत्त्वेन अतायि. अप्यायि, सामर्थ्येन महता उपाचायि।

पुनरपि कथयति—

> अदोहीव विषादो ऽस्य, समरुद्धेव विक्रमः।
>
> समभावि च कोपेन, न्यश्वसीच्चाऽऽयतं मुहुः ॥ ३४ ॥

अन्वयः—अस्य विषादः अदोहि इव, विक्रमः समरुद्ध इव कोपेन समभावि। (अयम्) मुहुः आयतं न्यश्वसीत् च।

हिन्दी—रामचन्द्रका विषाद स्वयं ही मानो पूर्ण हो चला, मानो कि विक्रम (पराक्रम) भी स्वयं अवरुद्ध हो गया। तथा क्रोध उत्पन्न हो गया और वह बार-बार लम्बी साँस लेने लगे।

व्याख्या—अस्य रामस्य, विषादः खेदः, अदोहि स्वयं क्षरित इव प्रपूर्यते स्म इति मन्ये। विक्रमः अतिशक्तिता, समरुद्ध स्वयमवरुध्यते स्म इव इति मन्ये। कोपेन क्रुधा, समभावि सम्भूतम्। (अयम्) मुहुः भूयः, आयतम् दीर्घम्, न्यश्वसीत् निश्वसितवान्, च पुनः।

कोशः—'विक्रमस्त्वतिशक्तिता'। 'दवीयश्च दविष्ठं च सुदूरं दीर्घमायतम्'।

तिङन्तः—दुह प्रपूरणे इति धातोः कर्मकर्तरि लुङि, तङि, 'दुहश्च ३।१।६३' इति पाक्षिके चिणि अदोहि। पक्षे अदुग्ध। रुधिर् आवरणे इति धातोः कर्मकर्तरि लुङि, तङि 'कर्मवत्कर्मणा तुल्यक्रियः ३।१।८७' इति कर्मवद्भावेन प्राप्तस्य चिणः 'न रुधः ३।१।६४' इति निषेधे, च्लेः सिचि, 'झलो झलि ८।२।२६' इति सलोपे, 'झषस्तथोर्धोऽधः ८।२।४०' इति तस्य धकारे, 'झलां जश् झशि ८।४।५३' धस्य दत्वे अरुद्ध। श्वस प्राणने इति धातोर्लुङि 'ह्म्यन्तक्षण०७।२।५' इति वृद्धिनिषेधः।

वाच्यपरिवर्तनम्—विषादेन अदोहि। विक्रमेण समरोधि। कोपः समभूच्च। अनेन आयतं न्यश्वासि ॥ ३४ ॥

अथ श्लोकपञ्चकेन पञ्चपद्यात्मकेन रामक्रोधमेवाख्याति—

> अथाऽऽलम्ब्य धनू रामो जगर्ज गज-विक्रमः।
>
> 'रुणध्मि सवितुर् मार्गं भिनद्मि कुल-पर्वतान्' ॥ ३५ ॥

अन्वयः—अथ गजविक्रमः रामः धनुः आलम्ब्य जगर्ज । 'सवितुर्मार्गं रुणध्मि, कुलपर्वतान् भिनद्मि' इति ।

हिन्दी—हाथीके समान पराक्रमवाले रामचन्द्रजी धनु लेकर गरजने लगे—'मैं सूर्य्यके मार्गको बन्द करता हूं, कुल-पर्वतोंको विदीर्ण करता हूँ' ।

व्याख्या—अथ कोपानन्तरम्, गजविक्रमः हस्तिपराक्रमः, रामः रामचन्द्रः धनुः चापम्, आलम्ब्य गृहीत्वा, जगर्ज विस्फूर्जितवान् । सवितुः रवेः, मार्गं अध्वानं, रुणध्मि आवृणोमि, कुलपर्वतान् भारतीयकुलाचलान्, भिनद्मि विदारयामि । अनुप्रासच्छटया दीपकच्छटोनचत्वारिंशत्पद्यान्तं द्रष्टव्या ।

कोशः—'महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः ।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः' ।।

समासः—गजस्य विक्रम इव विक्रमो यस्य स इति विग्रहे 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च २।२।२४' इति वार्तिकबलात्समासे सुपो लुकि गजविक्रमः ।

तिङन्तः—रुध् धातोः 'रुधादिभ्यः श्नम् ३।१।७७' इति श्नमि अनुबन्धलोपे नस्य णत्वे रुणध्मि । एवं भिनद्मि । सर्वेऽपि रुधादिधातवोऽस्मिन्नधिकारे प्राय समाप्स्यन्ति ।

वाच्य०—गजविक्रमेण जगर्जे । मार्गो रुध्यते । कुलपर्वता भिद्यन्ते ।। ३५ ।।

क्रोधस्वरूपं निर्वक्ति—

रिणच्मि जलधेस् तोयं विविनच्मि दिवः सुरान् ।
क्षुणद्मि सर्पान् पाताले, छिनद्मि क्षणदा-चरान् ।। ३६ ।।

अन्वयः—जलधेस्तोयं रिणच्मि, सुरान् दिवः विविनच्मि, पाताले सर्पान् क्षुणद्मि, क्षणदाचरान् छिनद्मि ।

हिन्दी—मैं समुद्रसे जलको खाली कर डालता हूँ । देवताओंको स्वर्गसे पृथक् करता हूँ । पातालमें सर्पोंको कुचल डालता हूँ । राक्षसोंके दो टुकड़े-टुकड़े कर डालता हूँ ।

व्याख्या—जलधेः समुद्रात्, तोयं जलम्, रिणच्मि रिक्तीकरोमि । सुरान् देवान्, दिवः स्वर्गात्, विविनच्मि पृथक् करोमि । पाताले रसातले, सर्पान् भुजङ्गान्, क्षुणद्मि चूर्णयामि । क्षणदाचरान् राक्षसान्, छिनद्मि द्विधाकरोमि ।

कोशः—'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः' ।
'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः ।
सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्' ।।

तिङन्तः—रिचिर् विरेचने, विचिर् पृथग्भावे, क्षुदिर् पेषणे, छिदिर् द्वैधीकरणे इति सर्वेभ्यः श्नम् ।

वाच्यपरिवर्तनम्—मया तोयं रिच्यते । सुरा विविच्यन्ते । सर्पाः क्षुद्यन्ते । क्षणदाचराः छिद्यन्ते ॥ ३६ ॥

कविः रामस्य क्रोधं वर्णयति—

यमं युनज्मि कालेन समिन्धानोऽस्त्र-कौशलम् ।
शुष्कपेषं पिनष्म्युर्वीमखिन्दानः स्व-तेजसा ॥ ३७ ॥

अन्वयः—अस्त्रकौशलं समिन्धानः ( अहम् ) यमम् (अपि) कालेन युनज्मि । अखिन्दानः स्वतेजसा उर्वीं शुष्कपेषं पिनष्मि ।

हिन्दी—अस्त्र-चातुरीको बढ़ाता हुआ मैं यमराजको भी मृत्युसे भेट कराता हूँ । खिन्न न होता हुआ मैं पृथ्वीको सूखी-सूखी पीस डालता हूँ ।

व्याख्या—अस्त्र-कौशलम् आयुधप्रावीण्यम्, समिन्धानः संवर्द्धयन् ( अहम् ); यमम् कृतान्तम् ( अपि ), कालेन मृत्युना, युनज्मि तदधीनं करोमि ( सम्बध्नामीत्यर्थः ) । अखिन्दानः दैन्यमभजन् अश्राम्यन्नित्यर्थः, उर्वीम् वसुमतीम्, शुष्कपेषम् शुष्कां कृत्वा, पिनष्मि चूर्णयामि ।

कोशः—'सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा' ।
'कृतान्तो यमुनाभ्राता शमनो यमराड् यमः' ।

समासः—अस्त्रेषु कौशलम् । स्वस्य तेजः । न खिन्दानः अखिन्दान इति ।

कृदन्तः—ञिइन्धी दीप्तौ इति आत्मनेपदिनः धातोः शानचि, श्नमि 'श्नान्नलोपः ६।४।२३' इति धातुनकारलोपे 'श्नसोरल्लोपः ६।४।१११' इति श्नमोऽल्लोपे समिन्धानः । एवं खिन्दानः इति खिद दैन्ये इति धातुः । शुष्कम् पिष्ट्वेति विग्रहे 'शुष्कचूर्णरूक्षेषु पिषः ३।४।३५' इति णमुलि शुष्कपेषम् । 'कषादिषु यथाविध्यनुप्रयोगः ३।४।४६' इति अनुप्रयोगात् पिनष्मि प्रयोगः । पिष्लृ सञ्चूर्णने धातुः ।

वाच्य०—समिन्धानेन यमः युज्यते । अखिन्दानेन उर्वी पिष्यते ॥ ३७ ॥

तथैव पुनः वर्णयति—

भूतिं तृणध्मि यक्षाणां, हिनस्मीन्द्रस्य विक्रमम् ।
भनज्मि सर्व-मर्यादास्, तनच्मि व्योम विस्तृतम् ॥ ३८ ॥

अन्वयः—यक्षाणां भूतिं तृणध्मि, इन्द्रस्य विक्रमं हिनस्मि, सर्वमर्यादाः भनज्मि, विस्तृतं व्योम तनच्मि ।

हिन्दी—यक्षोंकी सम्पत्तिको उखाड़ सकता हूँ, इन्द्रके पराक्रमको नष्ट कर हूँ, सारी मर्यादाओंको मिट्टीमें मिलाता हूँ और विस्तृत आकाशको संकुचि करता हूँ।

व्याख्या—यक्षाणाम् एकपिङ्गादीनां, भूतिम् सम्पदं, तृणद्मि उत्सादयामि इन्द्रस्य शक्रस्य, विक्रमं पराक्रमं, हिनस्मि तृणेह्मि। सर्वमर्य्यादाः सकलव्यवस्था भनज्मि मर्दयामि। विस्तृतं विस्तीर्णं, व्योम गगनम्, तनच्मि सङ्कोचयामि।

कोशः—'यक्षैकपिङ्गलविल-श्रीद-पुण्यजनेश्वराः।'

'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्'।

तिङन्तः—तृदिर् हिंसाऽनादरयोः, तृह हिसि हिंसायाम्, भञ्जो आमर्दने तञ्चू सङ्कोचने इति धातुभ्यः श्नम्, नकारस्थले 'श्नान्नलोपः ६।४।२३' नलोपो ज्ञेयः।

वाच्यपरिवर्तनम्—भूतिस्तृद्यते मयेति शेषः। विक्रमो हिंस्यते। सर्वमर्यादा भज्यन्ते। विस्तृतं व्योम तच्यते॥ ३८॥

तस्य पराक्रमेण क्रोधमुपसंहरति—

न तृणेह्मीति लोकोऽयं मां विन्ते निष्-पराक्रमम्।
एवं वदन् दाशरथिरपृणग् धनुषा शरम्॥ ३९॥

अन्वयः—न तृणेह्मि (लोकम् इति शेषः) इति अयं लोकः मां निष्पराक्रमं विन्ते। एवं वदन् दाशरथिः धनुषा शरम् अपृणक्।

हिन्दी—( मैं ) लोगोंको मारता नहीं, इसलिये लोग मुझे पराक्रम-शून्य जानते हैं।। इस प्रकार बोलते हुए रामचन्द्रजीने धनुष पर बाण चढ़ा लिया।

व्याख्या—न नहि, तृणेह्मि हन्मि ( लोकमिति शेषः ), इति हेतोः, अयं एषः ( पुरो वर्तमान इत्यर्थः ), लोकः जनः (जातावेकत्वम्), मां रामं, निष्पराक्रमं सामर्थ्यशून्यं, विन्ते विचारयति। एवम् इत्थं, वदन् व्याहरन्, दाशरथिः रामः, धनुषा चापेन, शरम् इषुम्, अपृणक् अयुनक्।

अत्र सर्वत्र 'वर्तमानसामीप्ये वर्तमानवद्वा ३।३।१३१' इति भविष्यदर्थे लट् इति केचित्।

कोशः—'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्'।

तिङन्तः—तृणेह्मि, विन्ते, अपृणक् सर्वत्रैव तृह हिसि हिंसायाम्, विद विचारणे, पृची सम्पर्के इति धातुभ्यः श्नम्। लङि तु 'इतश्च ३।४।१००' इति इकारलोपाडागमौ। इति श्नमोऽधिकारः।

वाच्यपरिवर्तनम्—न तृह्यते इति अनेन लोकेन निष्पराक्रमोऽहं विद्ये। एवं वदता दाशरथिना शरः अपृच्यत ॥ ३९ ॥

इतो दीर्घबाहुवधान्तं अष्टपद्यात्मकप्रकीर्णकाण्डम् ४०-४७। तत्र प्रथमं लक्ष्मणो राममनुनयति—

न्यवर्तयत् सुमित्रा-भूस् तं चिकीर्षुं जगत्-क्षयम्।
तेजः क्षात्रं विवृण्वन्तं दिधक्षन्तमिवाऽनलम् ॥
ऐक्षेतामाश्रमादाराद् गिरिकल्पं पतत्रिणम्।
तं सीता-घातिनं मत्वा हन्तुं रामो ऽभ्यधावत ॥ ४०-४१ ॥

अन्वयः—सुमित्राभूः (लक्ष्मणः) दिधक्षन्तम् अनलम् इव जगत्क्षयं चिकीर्षुं क्षात्रं तेजः विवृण्वन्तं तं (रामम्) न्यवर्तयत्। (तौ) आश्रमाद् आराद् गिरिकल्पम् पतत्रिणम् ऐक्षेताम्। रामः तम् सीताघातिनं मत्वा हन्तुम् अभ्यधावत।

हिन्दी—लक्ष्मणने जला डालनेकी इच्छावाले अग्निके समान जगत्का क्षय कर देना चाहने वाले, क्षत्रियत्वका तेज दिखानेवाले रामको (इस कार्य्यसे) निवृत्त किया। उन दोनोंने आश्रमके पास ही पर्वताकार पक्षीको देखा। राम उसे सीताको मारनेवाला समझकर मारने दौड़े।

व्याख्या—सुमित्राभूः लक्ष्मणः, दिधक्षन्तं दग्धुमिच्छन्तम्, अनलम् अग्निमिव यथा, जगत्क्षयं संसारनाशं, चिकीर्षुम् कर्तुमिच्छुं, क्षात्रम् क्षत्रियसम्बन्धि, तेजः प्रभावं, विवृण्वन्तम् प्रकाशयन्तम्, तं रामम्, न्यवर्तयत् न्यरुधत्। (तौ) आश्रमात् तपोवनात्, आरात् समीपे, गिरिकल्पम्, पर्वततुल्यम्, पतत्रिणम् पक्षिणम्, ऐक्षेताम् अपश्यताम्। रामः राघवः, तम् पुरःस्थितम्, सीताघातिनम् जानकीमारकं, मत्वा विचार्य्य, हन्तुं मारयितुम्, अभ्यधावत वेगाद् उपासर्पत्। पूर्वपद्ये दीपकोपमयोः, द्वितीये उपमाकाव्यलिङ्गयोः सङ्करः।

कोशः—'तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु'।

कृदन्तः—दह भस्मीकरणे इति धातोः सन्नन्ताद् शतरि दिधक्षन्तम्। विपूर्वस्य वृञ् वरणे इति सौवादिकस्य शतरि विवृण्वन्तम्। सीतां हतवान् निन्दितमिदम् इत्यर्थे 'कर्मणि हनः ३।१।८६' इति णिनिः, 'हनस्तोऽचिण्णलोः ७।३।३२' इति नस्य तः—सीताघातिनम्। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३।३।१०' इति तुमुन् हन्तुम्।

तिङन्तः—निपूर्वात् वृतु वर्तने इत्यस्मात् ण्यन्ताल्लङि न्यवर्तयत्। धावु गति-शुद्धयोः इति भौवादिकाद् धातोः लङि स्वरितेत्त्वात् कर्त्रभिप्राये क्रियाफलात्तङि अधावत।

वाच्यपरिवर्तनम्—सुमित्राभुवा दिधक्षन् जगत्क्षयं चिकीर्षन् तेजो विभ्र स न्यवर्त्यत। गिरिकल्पः पतत्री ऐक्ष्यत। रामेण अभ्यधाव्यत ॥ ४१ ॥

रामं प्रति जटायोः कथनम्—

माऽऽवधिष्ठा जटायुं मां सीतां रामाऽहमैक्षिषि।
उपास्थितैवमुक्ते तं सखायं राघवः पितुः ॥ ४२ ॥

अन्वयः—हे राम! जटायुं मां मा आवधिष्ठाः, अहम् सीताम् ऐक्षिषि एवम् उक्ते राघवः पितुः सखायं तम् उपास्थित।

हिन्दी—हे राम! मैं जटायु हूँ। मुझे मत मारो। मैंने सीताको देखा है। ऐसा कहने पर राम पिताके मित्र जटायुके पास गये। अर्थात् उनसे मिले।

व्याख्या—हे राम राघव! जटायुम् त्वत्तातसखम्, मां ते पुरःस्थितं, मा आवधिष्ठाः नहि मारय। अहम् जटायुः, सीताम् मैथिलीम् ( रावणेन ह्रिय माणाम् ), ऐक्षिषि अद्राक्षम्। एवम् इत्थम्, ( तेन ) उक्ते अभिहिते ( सति ) राघवः रामः, पितुः जनकस्य, सखायं प्राणसमं मित्रम्, तम् जटायुम्' उपास्थि उपचरितवान्। दीपक-काव्यलिङ्गयोरेव सङ्करः।

कोशः—'अत्यागसहनो बन्धुः सदैवानुगतः सुहृत्।
एकक्रियं भवेन्मित्रं सखा प्राणसमो मतः' ॥

सुबन्तः—सखि शब्दस्यामि 'सख्युरसम्बुद्धौ ७।१।९२' इति णित्वाद् वृद्धौ वायादेशे सखायम्।

तिङन्तः—वध बन्धने इति धातोरनेकार्थत्वादात्मनेपदिन आङ्पूर्वात् लेटि लुङि रूपम्। माङो योगेऽटोऽभावे—आवधिष्ठाः। आङ्पूर्वस्यापि हनस्तु नात्मने पदम्। 'आङो यमहनः १।३।२८' इत्यत्राकर्मकादित्यनुवृत्तेः। अथवा मा आवधिष्ठा इति पृथक्पदं, मां जटायुं विद्धि इति शेषः। इत्येवं विन्यासे तु आङ् पूर्वस्य हनोऽकर्मत्वादेवात्मनेपदम्। वधादेशश्चापि सर्वं समञ्जसम्। उपपूर्वात् स्था-धातोः सङ्गतिकरणे आत्मनेपदित्वात् तङि 'स्थाघ्वोरिच्च १।२।१७' इतीत्वे 'ह्रस्वादङ्गात् ८।२।२७' इति सलोपे उपास्थित।

वाच्यपरिवर्तनम्—जटायुः अहम् मा आवधिषि। मया सीता ऐक्षि राघवेण सखा स उपास्थायि ॥ ४२ ॥

जटायुना वर्णितं वृत्तान्तमाह—

पप्रच्छ जानकी-वार्तां संग्रामं च पतत्रिणम्।
ततो रावणसङ्ग्रामं ... पततां वरः ॥ ४३ ॥

व्रणवेदनया ग्लायन् ममार गिरि-कन्दरे ।
रामोऽपि शोकसन्तप्तस्तस्यान्त्येष्ट्यामवर्तत ॥ ४४ ॥

अन्वयः—( समुपस्थितः रामः ) तम् पतत्रिणम् जानकीवार्ताम् संग्रामं च पप्रच्छ । ततः पततां वरः रावणं द्विषन्तम् आख्याय व्रणवेदनया ग्लायन् गिरि-कन्दरे ममार । शोकसन्तप्तः रामः अपि तस्य अन्त्येष्ट्याम् अवर्तत ।

हिन्दी—(जटायुकी परिचर्यामें लगे रामने) उस पक्षीसे जानकी एवं संग्राम-की बात पूछी । बादमें वह पक्षि-श्रेष्ठ ( रावण ) शत्रुको बताकर व्रणकी व्यथासे पीडित हो वनकी गुफामें मर गया । शोकसे दुःखी राम उसकी अन्त्येष्टिमें लग गये ।

व्याख्या—( समुपस्थितः रामः ) तम् जटायुम्, पतत्रिणम् पक्षिणम्, जानकी-वार्ताम् सीतोदन्तम्, संग्रामं सङ्गरम्, च तथा, पप्रच्छ पृष्टवान् । ततः प्रश्नानन्तरम्, पततां पक्षिणां, वरः श्रेष्ठः ( जटायुः ), रावणं दशास्यं, द्विषन्तम् शत्रुम्, आख्याय अभिधाय, व्रणवेदनया प्रहारव्यथया, ग्लायन् क्षुब्धः, गिरिकन्दरे पर्वतगुहायाम्, ममार अमृत । शोकसन्तप्तः विषाददुःखी, रामः राघवः, तस्य जटायोः, अन्त्येष्टि-क्रियायाम् दाहसंस्कारे, अवर्तत व्यापृतोऽभूत् । मृत्युहेतुर्व्रणवेदनाग्लानिरुक्तेति काव्यलिङ्गम् ।

समासः—व्रणकृता वेदना इति मध्यमपदलोपी समासः । जानक्याः वार्ता, गिरेः कन्दरम् इति तत्पुरुषः ।

कृदन्तः—'द्विषोऽमित्रे ३।२।१३१' इति शतरि द्विषन्तम् । यज् धातोः 'स्त्रियां क्तिन् ३।३।९४' इति क्तिनि षत्वष्टुत्वे इष्टिशब्देन सह अन्त्या चासौ इष्टिरिति कर्मधारयः ।

तिङन्तः—प्रच्छ ज्ञीप्सायाम्, मृङ् प्राणत्यागे इति धातुभ्याम् लिटि 'परस्मै-पदानां णलतुसुस्थलथुसणल्वमाः ३।४।८२' इति णलि द्वित्वादिकार्ये पप्रच्छ । एवम् 'म्रियतेर्लुङ्लिङोश्च १।३।६१' इति नियमात् तिप्, तस्य पूर्ववत् द्वित्वादि-कार्यम् । 'अचो ञ्णिति ७।२।११५' इति वृद्धि-विशेषः—ममार । वृतु वर्तने लङि अवर्तत ।

वाच्यपरिवर्तनम्—( तेन ) पप्रच्छे पतत्री जानकी-वार्ताम् संग्रामं च । पततां वरेण ग्लायता मम्रे ॥ ४३–४४ ॥

पुनः रामः किं कृतवानित्याह—



तस्यान्त्यम्बु-क्रियां कृत्वा प्रतस्थाते पुनर्वनम् ।
विषादमोविमांसौ तौ विचिन्वानाविततस्ततः ॥ ४५ ॥

अन्वयः—तस्य अग्न्यम्बुक्रियां कृत्वा विषादम् ईयिवांसौ इतस्ततः विचिन्वानौ तौ पुनः वनं प्रतस्थाते ।

हिन्दी—उस ( जटायु ) के अन्त्येष्टि-संस्कार—उदकदानादि और्ध्वदैहिक श्राद्धकर्म—करके विषादको प्राप्त हुए वे दोनों इधर-उधर ढूँढ़ते हुए पुनः वनकी ओर चल पड़े ।

व्याख्या—तस्य जटायोः, अग्न्यम्बुक्रियाम्-अन्त्येष्टिसंस्कारमुदकदानादि श्राद्धकृत्यं च, कृत्वा अनुष्ठाय, विषादम् खेदम्, ईयिवांसौ सम्प्राप्तौ, इतस्ततः यत्र तत्र, विचिन्वानौ मार्गयन्तौ ( सीताम् इति शेषः ) तौ रामलक्ष्मणौ, पुनः भूयः वनम् अरण्यम्, प्रतस्थाते चलितौ । अत्रापि काव्यलिङ्गम् ।

कोशः—'यत्तद्यतस्ततो हेतावसाकल्ये तु किञ्चन' ।

समासः—अग्निश्च अम्बु च अग्न्यम्बुनी, तयोः क्रिया अग्न्यम्बुक्रिया, ताम् ।

कृदन्तः—'उपेयिवाननाश्वाननूचानश्च ३।२।१०९' इति क्वसुप्रत्ययान्तनिपातनात् ईयिवस् शब्दः सिध्यति । तस्य द्विवचने 'उगिदचाम् ७।१।७०' इति नुमि, 'सान्तमहतः ६।४।१०' इति दीर्घे ईयिवांसौ । चिञ् चयने इत्यतः शानचि 'स्वादिभ्यः श्नुः ३।१।७३' इति श्नुप्रत्ये 'हुश्नुवोः सार्वधातुके ६।४।८७' इति यणि विचिन्वानौ । विपूर्वात् षद्लृ विशरणगत्यवसादनेषु इत्यस्य घञि विषादः ।

तिङन्तः—प्रपूर्वात् ष्ठा गतिनिवृत्तौ इति धातोः 'समवप्रविभ्यः स्थः १।३।२२' इत्यात्मने-पदे लिटि, द्वित्वे, 'शर्पूर्वाः खयः ७।४।६१' इति थकारशेषे, 'अभ्यासे चर्च ८।४।५४' इति चर्त्वेन तकारे, 'आतो लोप० ६।४।६४' इत्यालोपे प्रतस्थाते ।

वाच्य०—ईयिवद्भ्यां विचिन्वानाभ्यां ताभ्यां वनं प्रतस्थे ॥ ४५ ॥

वने तयोः आपन्निमग्नत्वमाह—

> सत्त्वानजस्रं घोरेण वनाऽपकर्षमश्नता ।
> क्षुध्यता जगृहाते तौ रक्षसा दीर्घ-बाहुना ॥ ४६ ॥

अन्वयः—वनापकर्षम् सत्त्वान् अजस्रं अश्नता क्षुध्यता दीर्घ-बाहुना घोरेण रक्षसा जगृहाते ।

हिन्दी—वनसे खींच-खींचकर जानवरोंको बराबर खानेवाले बुभुक्षित दीर्घबाहु भयङ्कर राक्षसने उन दोनोंको पकड़ लिया ।

व्याख्या—वनापकर्षं वनात् [illegible] सत्त्वान् प्राणिनः, अजस्रं निरन्तरं, अश्नता भुञ्जानेन, क्षुध्यता बुभुक्षमाणेन, दीर्घ-बाहुना आयतभुजेन, घोरेण भयङ्कर

रेण, रक्षसा राक्षसेन, तौ रामलक्ष्मणौ, जगृहाते गृहीतौ, आसादिषाताम् इत्यर्थः। साकूतविशेषणत्वात् परिकरालङ्कारः।

कोशः—'नित्यानवरताजस्रमप्यथातिशयो भर.'। 'सत्त्वमस्त्री तु जन्तुषु'।

समासः—दीर्घौ बाहू यस्य तत् दीर्घबाहु रक्षः। बहुव्रीहिः।

कृदन्तः—वनात् अपकृष्येति विग्रहे—'अपादाने परीप्सायाम् ३।४।५२' इति णमुलि 'तृतीया प्रभृतीन्यन्यतरस्याम् २।२।२१' इति समासे वनापकर्षम्। बलापकर्षमिति पाठेऽपि तथैव। नञ्पूर्वाज्जसः 'नमिकम्पि० ३।२।१६७' इति रप्रत्यये अजस्रम्। अश् धातोः क्र्यादिस्थात् शतरि अश्नता। एवम् दैवादिकात् क्षुध धातोः शतरि क्षुध्यता।

तिङन्तः—ग्रह उपादाने इति कर्मणि लिटि सम्प्रसारणे, द्वित्वेऽभ्यासकार्ये जगृहाते।

वाच्यपरिवर्तनम्—क्षुध्यत् समश्नत् दीर्घ-बाहु घोरं रक्षः तौ जग्राह ॥४६॥

प्रकीर्णकाण्डमुपसंहरन् दीर्घबाहुवधमाख्याति—

भुजौ चकृततुस् तस्य निस्त्रिंशाभ्यां रघूत्तमौ।
स छिन्न-बाहुरपतद् विह्वलो ह्लयन् भुवम् ॥ ४७ ॥

अन्वयः—रघूत्तमौ तस्य भुजौ निस्त्रिंशाभ्यां चकृततुः। छिन्न-बाहुः स विह्वलः भुवं ह्लयन् अपतत्।

हिन्दी—रघुवंशियोंमें श्रेष्ठ रामलक्ष्मणने उसकी भुजाओंको तलवारसे काट डाला। बाहु कट जानेसे विह्वल होकर वह पृथ्वीको कँपाता हुआ गिर पड़ा।

व्याख्या—रघूत्तमौ रघुश्रेष्ठौ रामलक्ष्मणौ, तस्य राक्षसस्य ( कबन्धस्य ), भुजौ बाहू, निस्त्रिंशाभ्यां असिभ्याम्, चकृततुः चिच्छिदतुः। छिन्नबाहुः कृत्तभुजः, विह्वलः विक्लवः, स कबन्धः, भुवम् धराम्, ह्लयन् चालयन्, अपतत् पपात। कर्तने शस्त्रस्य, विह्वलतायाः पतने हेतोरुक्तिरिति काव्यलिङ्गालङ्कारः स्पष्टः।

कोशः—'तूण्यां खड्गे तु निस्त्रिंश-चन्द्रहासासिरिष्टयः'।

समासः—रघुषु ( रघुवंश्येषु ) उत्तमौ। त्रिंशतः निर्गतौ निस्त्रिंशौ। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' २।२।१८ इति वार्तिकबलात्समासे, 'संख्यायास्तत्पुरुषस्य वाच्यः ( वा ) ५।४।७३' इति डच् निस्त्रिंशो अतिक्रान्तत्रिंशदङ्गुलिका-नित्यर्थः। छिन्नौ बाहू यस्य सः छिन्नबाहुः।

कृदन्तः—ह्वल चलने इति चौरादिकस्य ... ह्रस्वादेशे, घटादित्वात् मित्व-निमित्तो ह्रस्वः।

तिङन्तः—पत्लृ पतने इत्यस्य लङि रूपम् । लुङि तु 'पतः पुम् ७।४ इति पुमागमे अपप्तत् इति स्यात् ।

वाच्यपरिवर्तनम्—रघूत्तमाभ्यां भुजौ चकृताते । छिन्नबाहुना विह्वले भुवम् ह्वलयता अपत्यत ॥ ४७ ॥

इति प्रकीर्णकाण्डम् । अथ सप्तषष्टितमपद्यान्तं कृत्याधिकारः ।

दिव्यदेहभृता कवन्धेन पृष्टो रामः किमुक्तवानित्याह—

> प्रष्टव्यं पृच्छतस् तस्य कथनीयमवीवचत् ।
> आत्मानं वन-वासं च जेयं चा ऽरिं रघूत्तमः ॥ ४८ ॥

अन्वयः—रघूत्तमः प्रष्टव्यं पृच्छतः तस्य कथनीयम् आत्मानं वनवासं जेयं अरिम् च अवीवचत् ।

हिन्दी—रघुवंशियोंमें श्रेष्ठ राम ने पूछनेयोग्य वातोंको पूछनेवाले अपना नाम, पिताकी आज्ञासे वनवास और शत्रुको जीतनेके विषय में कह डाला।

व्याख्या—रघूत्तमः रामः, प्रष्टव्यं प्रच्छनीयम् ( प्रश्नार्हमित्यर्थः) भवान्, कथमत्र भ्रमतीत्यादि पृच्छतः अनुयुञ्जानस्य, तस्य देवत्वं गतस्य कवन्धस्य कथनीयं व्यवहरणीयम्, आत्मानम् स्वम्, वनवासम् अरण्यस्थितिम्, जेयं मूलघातं हननीयम्, अरिम् शत्रुं च, अवीवचत् अकथयत् । अनुप्रासेन सहैवोक्तालङ्कारः, अतः सङ्करः ।

कोशः—'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' ।

समासः—रघुषु उत्तमः । वने वासः । पृच्छतः इति प्रच्छेर्द्विकर्मकत्वेन रामस्य गौण-कर्मत्वमूह्यम् ।

कृदन्तः—प्रच्छ ज्ञीप्सायाम् इति धातोः कृत्याधिकारे प्रथम-सूत्रेण 'तव्यत्तव्यानीयरः ३।१।९६' इति तव्यति, 'व्रश्च० ८।२।३६' इति षत्वे ष्टुत्वम् । जि जयेइति धातोः 'अचो यत् ३।१।९७' इति यति, गुणे जेयम् । एवं क्रमेण सूत्रप्रयोगाः साध्याः ( ३।१।९६ इत्यत आरभ्य ३।१।१३२ सूत्रान्तम् ) ।

तिङन्तः—वच भाषणे चौरादिकस्य स्वार्थे णिचि रूपम् अवीवचत् ।

वाच्य०—रघूत्तमेन कथनीय आत्मा, वनवासः, जेयो रिपुश्च अवाचि ॥४८॥

पुनरपि राम-वाक्यमेवाह—

> लभ्या कथं नु वैदेही, शक्यो द्रष्टुं कथं रिपुः ?।
> सह्यः कथं वियोगश् च, गद्यमेतत् त्वया मम ॥ ४९ ॥

**अन्वयः**—कथं नु वैदेही लभ्या ? कथं नु रिपुः द्रष्टुं शक्यः ? कथं वियोगः सह्यः ? एतत् त्वया मम गद्यम् ।

**हिन्दी**—सीता कैसे मिलेगी ? शत्रु कैसे देखा जा सकेगा ? ( सीताका ) वियोग कैसे सह्य होगा ? ये सारी बातें मुझे बताओ ( यों रामने उससे पूछा ) ।

**व्याख्या**—कथं केन प्रकारेण, नु प्रश्ने, वैदेही जानकी, लभ्या प्राप्तव्या ? कथं केन प्रकारेण, रिपुः शत्रुः, द्रष्टुम् अवलोकयितुम्, शक्यः शकनीयः ? कथम् केन प्रकारेण, वियोगः सीता-विरहः, सह्यः सहनीयः ? एतत् मया कथितं सर्वम्, त्वया देवत्व-जुषा, मम रामस्य, गद्यम् वाच्यम् । क्रियासङ्घानामेको रामः कर्तेति दीपकः ।

**कोशः**—'नु पृच्छायां विकल्पे च पश्चात्साहश्ययोरनु' ।

**कृदन्तः**—डुलभष् प्राप्तौ इति धातोः 'पोरदुपधात् ३।१।९८' इति यति, टापि लभ्या । शक्यः सह्यः इति 'शकिसहोश्च ६।१।९९' इति यत् । गद व्यक्तायां वाचि इति धातोः 'गदमद० ३।१।१००' इति यत् ।

**कारकः**—'कृत्यानां कर्तरि वा २।३।७१' इति तृतीया । ममेति तु सम्बन्ध-विवक्षायां षष्ठी ।

**वाच्यपरिवर्तनम्**—वैदेहीम् कथं लभेय । रिपुं द्रष्टुम् शक्नुयाम् । वियोगं सहेय । एतत् त्वम् मां गदेः ॥ ४९ ॥

कबन्धः उत्तरमाख्याति—

'अहं राम ! श्रियः पुत्रो मद्य-पीत इव भ्रमन् ।
पापचर्यो मुनेः शापाज् जात' इत्यवदत् स तम् ॥ ५० ॥

**अन्वयः**—'हेराम ! अहम् श्रियः पुत्रः मद्यपीत इव भ्रमन् मुनेः शापात् पाप-चर्यः जातः' इति स तम् अवदत् ।

**हिन्दी**—हे रामचन्द्र ! 'मैं श्री नामके दानवका पुत्र हूँ । मद्यपान करने वाले पुरुषके समान घूमता हुआ (स्थूलशिरा नामके) मुनिके शापसे पापाचारी होगया था' यह उसने ( कबन्धने ) उससे ( रामसे ) कहा ।

**व्याख्या**—'हे राम ! राघव ! अहम् ते पुरः स्थितः तव प्रभावात् प्राप्तदिव्य-भावः, श्रियः श्रीनाम्नो दानवस्य, पुत्रः आत्मजः, ( ऐश्वर्यगर्वतः ) मद्यपीतः सुरां पीतवान्, इव यथा, भ्रमन् पर्यटन् ( अटाट्यमान इति यावत् ), मुनेः तपस्विनः ( स्थूलशिरसः इत्यर्थः ), शापात् आक्रोशात्, पापचर्यः दुष्कृताचरणः ( राक्षस इत्यर्थः ) जातः संवृत्तः' इत्थम्, सः कबन्धः, तम् रामम्, अवदत् उक्तवान् । उत्प्रेक्षया काव्यलिङ्गसङ्करः ।

कोशः—'शापाक्रोशौ दुरेषणा'। 'मदिरा कश्यमद्येऽपि'।

'अस्त्री पङ्कम् पुमान् पाप्मा पापं किल्विषकल्मषम्'।

समासः—पीतम् मद्यम् येनेति समासे 'वा हिताग्न्यादिषु २।२।३७' इति निष्ठान्तस्य परभावः। पापं चर्यम् यस्य सः।

कृदन्तः—माद्यन्ति अनेन इत्यर्थे 'कृत्यल्युटो बहुलम् ३।४।११३' इति करणेऽर्थे 'गदमदचरयमश्चानुपसर्गे ३।१।१००' इति यत्। एवं चरितुं योग्यम् चर्यम् इत्यपि योग्यार्थे तेनैव यति सिध्यति।

वाच्यपरिवर्तनम्—मया पुत्रेण मद्यपीतेन इव पापचर्येण अजनि ॥ ५० ॥

सम्प्रति स स्वयं राममुत्तरयति—

प्रयातस् तव यम्यत्वं शस्त्र-पूतो ब्रवीमि ते।
रावणेन हृता सीता लङ्कां नीता सुरारिणा ॥ ५१ ॥

अन्वयः—तव यम्यत्वम् प्रयातः ते शस्त्रपूतः (अहम्) ब्रवीमि। सुरारिणा रावणेन सीता हृता लङ्कां नीता इति।

हिन्दी—आपका दण्डनीय होता हुआ भी आपके शस्त्रसे पवित्र होकर मैं कहता हूँ—देवताओंका शत्रु रावण सीताका हरणकर उसे लङ्कामें ले गया है।

व्याख्या—तव रामस्य, यम्यत्वम् दण्डनीयत्वम्, प्रयातः प्राप्तः, ते तव, शस्त्रपूतः आयुधपवित्रः, (अहम्) ब्रवीमि कथयामि,। सुरारिणा देवद्वेषिणा, रावणेन दशास्येन, सीता जानकी, हृता चोरिता, लङ्कां स्वपुरीं, (सा) नीता प्रापिता चेति। कथने शस्त्रपूतता हेतुरिति काव्यलिङ्गम्।

समासः—शस्त्रेण पूतः। हृता नीतेति क्त-प्रत्यये प्रधानकर्मणः उक्तौ सीतेति प्रथमा।

'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छये'ति नियमः ॥
'राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्मलाः स्वर्गमायान्ति सन्तः, सुकृतिनो यथा' ॥

इति मनुस्मृतेः शस्त्रपूतः इत्यादि।

कृदन्तः—यम्यत्वम् इति पूर्वसूत्रेणैव यत्। ततः 'तस्य भावस्त्वतलौ ५।१।११९' इति त्वम्। 'तेमयावेकवचनस्य ८।१।२२' इति ते इत्यादेशः षष्ठ्यन्तस्य ब्रवीमीति क्रियायोगे चतुर्थ्यं अपि स्यात्।

वाच्यपरिवर्तनम्—प्रयातेन शस्त्रपूतेन उच्यते। सुरारी रावणः सीतां हृतवान्, लङ्कां नीतवान् ॥ ५१ ॥

पुनरग्रे कथयति—

ऋष्यमूके ऽनवद्यो ऽस्ति पण्य-भ्रातृ-वधः कपिः ।
सुग्रीवो नाम, वर्यो ऽसौ भवता चारु-विक्रमः ॥ ५२ ॥

अन्वयः—ऋष्यमूके अनवद्यः पण्यभ्रातृवधः चारुविक्रमः सुग्रीवः नाम कपिः अस्ति। असौ भवता वर्यः ।

हिन्दी—ऋष्यमूक पर्वतपर निर्दोष, जिसके भाईका वध कर देना ही उसके साथ सौदा करना है, ऐसे प्रशंसनीय पराक्रम वाला सुग्रीव नामक बन्दर है उससे आपको मैत्री करनी चाहिये ।

व्याख्या—ऋष्यमूके तन्नाम्नि पर्वते, अनवद्यः अगर्ह्यः (निर्दोष इति यावत्), पण्यभ्रातृवधः विक्रेतव्यसोदरघातः, चारुविक्रमः श्लाघ्यपराक्रमः ( महापराक्रम इति यावत् ), सुग्रीव इति नामा कपिः शाखामृगः, अस्ति विद्यते, सः असौ, भवता रामेण, वर्यः मित्रत्वेन वरणीयः । साकूतविशेषणतया परिकरः ।

कोशः—'कुपूय-कुत्सितावद्य-खेट-गर्ह्याणकाः समाः' ।
'कपि-प्लवङ्ग-प्लवग शाखामृग-वलीमुखाः' ।

समासः—अविद्यमानम् अवद्यं यस्य सः । 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' इति वार्तिकबलात्समासे उत्तरपदलोपे च 'तस्मान्नुडचि ६।३।७४' इति नुडागमे अनवद्यः । पण्यो भ्रातृवधो यस्य सः । चारुः विक्रमः यस्य सः । शोभना ग्रीवा यस्य सः ।

कृदन्तः—'अवद्य-पण्य-वर्य्यागर्ह्यपणितव्यानिरोधेषु ३।१।१०१' इति पुंसि निपातिताः शब्दाः ( भ्रातृवधस्य पण्यत्वे—'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्र-दारापहर्ता च षडेते आततायिनः ॥' इति दारापहारकत्वादाततायित्वेन 'नाततायिवधे दोषो हन्तुर्भवति कश्चन । गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ॥ आततायिनमायान्तं हन्यादेवाविचारयन् ।' इत्यादि धर्मशास्त्र—वचनानि प्रमाणम्) । सततप्रवर्तिनी अनिरोध्या वर्य्या प्रीतिर्यस्येति विगृह्य 'अर्श आदिभ्योऽच् ५।२।१२७' इत्यचि वर्यः । अथवा कृत्यल्युटो बहुलमिति प्रवादात् क्यपं वा प्रतमपोह्य 'अचो यत् ३।१।९७ इति यत् । वरितुं योग्य इत्यर्थं इति कविमर्म ।

वाच्यपरिवर्तनम्—अनवद्येन पण्यभ्रातृवधेन ... सुग्रीवेण कपिना भूयते । अमुम् भवान् वृणुयात् ॥ ५२ ॥

सम्प्रति सुग्रीवमैत्रीफलं ब्रूते देवत्वं प्राप्तः कबन्धः—

तेन वह्येन हन्तासि त्वमर्यं पुरुषाऽशिनाम् ।
राक्षसं क्रूर-कर्माणं शक्राऽरिं दूर-वासिनम् ॥ ५३ ॥

अन्वयः—( हे राम ) त्वम् वह्येन तेन पुरुषाशिनाम् अर्यम् क्रूरक... दूरवासिनं शक्रारिम् राक्षसम् हन्तासि ।

हिन्दी—( हे रामचन्द्रजी ! ) आप उसी सुग्रीवसाधनसे मनुष्य-भक्षि... स्वामी क्रूरकर्म करनेवाले दूरवासी इन्द्रके शत्रु राक्षसको मारेंगे ।

व्याख्या—(हे राम !) त्वम् समर्थः, वह्येन साधनेन, तेन सुग्रीवेण, पु... शिनाम् मानवादिनाम् ( राक्षसानामित्यर्थः ), अर्यम् स्वामिनम्, क्रूरकर्मा... घोरव्यवहारम्, दूरवासिनम् विप्रकृष्टस्थितम्, शक्रारिम् इन्द्रशत्रुम् राक्ष... हन्तासि हिंसितासि । अनेकविशेषणानामेकक्रियान्वयाद्दीपकः । हननहेत्वभिधा... काव्यलिङ्गेन सङ्करः :

कोशः—'कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ।' 'स्यादर्यः स्वा... वैश्ययोः ।'

कृदन्तः—वहति अभिप्रेतम् अनेनेति विग्रहे 'वह्यं करणम् ३।१।१०२' ... यत् । ऋ गतौ इति धातोः 'अर्यः स्वामिवैश्ययोः ३।१।१०३' इति यति... निपातनात् अर्यः साधुः । दूरवासिनम्, पुरुषाशिनाम् इत्युभयत्रापि 'सुप्य... णिनिस्ताच्छील्ये ३।२।७८' इति णिनिः, उपपदसमासः । एवं मानवादि... मित्याद्यपि णिना साध्यम् ।

वाच्य०—त्वया अर्यः क्रूरकर्मा दूरवासी शक्रारिः राक्षसः घातिता ॥...

स एव सुग्रीवावस्थामपि सूचयति—

आस्ते स्मरन् स कान्ताया हृताया बालिना कपिः ।
वृषो यथोपसर्याया गोष्ठे गोर् दण्ड-ताडितः ॥ ५४ ॥

अन्वयः—स कपिः गोष्ठे दण्डताडितः वृषः उपसर्यायाः गोः यथा बालि... हृतायाः कान्तायाः स्मरन् आस्ते ।

हिन्दी—वह कपि, दण्डसे ताडित होता हुआ भी साँड़ जैसे समयपर ग्रहणके लिये उत्सुक गायको याद करता है, वैसे ही बालीसे हर ली अपनी पत्नीका स्मरण करता रहता है ।

व्याख्या—सः पूर्वोक्तः कपिः, गोष्ठे व्रजे, दण्डताडितः ... वृषः अनड्वान्, उपसर्यायाः काले गर्भग्रहणेच्छोः, गोः सुरभेः, यथा इव, ...

स्वभ्रात्रा, हृताया अपवाहितायाः, कान्ता याः वल्लभायाः, स्मरन् अधीयन्, आस्ते तिष्ठति । उपमा श्रौती ।

कोशः—'काल्योपसर्या प्रजने' ।

'उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ।
अनड्वान् सौरभेयो गौरुक्षणां संहतिरौक्षकम्' ॥

समासः—दण्डेन ताडितः दण्डताडितः । 'अधीगर्थदयेशां कर्मणि २।३।५२' इति कान्ताया इत्यत्र षष्ठी ।

कृदन्तः—'उपसर्या काल्या प्रजने ३।१।१०४' इति निपातनात् उपसर्येति साधुः ।

वाच्य०—तेन कपिना दण्डताडितेन वृषेण यथा स्मरता आस्यते ॥ ५४ ॥

पूर्वोक्तमेव द्रढयति—

तेन सङ्गतमार्येण रामाऽजर्यं कुरु द्रुतम् ।
लङ्कां प्राप्य ततः पापं दश-ग्रीवं हनिष्यसि ॥ ५५ ॥

अन्वयः—हे राम ! आर्येण तेन अजर्यं सङ्गतं द्रुतं कुरु ! ततः लङ्कां प्राप्य पापं दशग्रीवं हनिष्यसि ।

हिन्दी—हे रामचन्द्रजी ! श्रेष्ठ ( सदाचारी ) उसके साथ दृढ़ मैत्री जल्द कर डालिये । उसके बाद लंका पहुँच कर पापी दशाननको मार डालेंगे ।

व्याख्या—हे राम रामचन्द्र ! आर्येण श्रेष्ठेन, तेन कपिना ( सुग्रीवेण ), अजर्यम् अनपायं, सङ्गतं सख्यं, द्रुतं शीघ्रं, कुरु विधेहि । ततः तदनन्तरम् सुग्रीवसख्येन, लङ्कां रावणनगरीम्, प्राप्य आसाद्य, पापं दुष्कृतम्, दशग्रीवं रावणम्, हनिष्यसि व्यापादयिष्यसि । भाविकेन काव्यलिङ्गसङ्करोऽग्रिमेऽपि ॥ ५५ ॥

कोशः—'नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः' ।
'कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि' ।

समासः—दश ग्रीवा यस्य सः इति बहुव्रीहौ सुपो लुकि, 'नलोपः प्रातिपदिकान्तस्य ८।२।७' इति न-लोपे, 'गोस्त्रियोरुपसर्जनस्य १।२।४८' इति ग्रीवाकारस्य ह्रस्वे दशग्रीवः, तम् ।

कृदन्तः—'अजर्यम् सङ्गतम् ३।१।१०५' इति निपातनात्, न जीर्यति इत्यर्थे, अजर्यम् इति । 'ऋहलोर्ण्यत् ३।१।१२४' इति ण्यति अजार्यमिति स्यात् । तस्यापवादरूपम् ।

तिङन्तः—हन् धातोर्लृटि 'ऋद्धनोः स्ये ७।२।७०' इति हनिष्यति ।

वाच्य०—त्वया अजर्यं सङ्गतं क्रियताम् । पापो दशग्रीवो घानिष्यते ॥५

पुनस्तदेव द्रढयति—

अनृतोद्यं न तत्राऽस्ति, सत्य-वद्यं ब्रवीम्यहम् ।
मित्र-भूयं गतस् तस्य रिपु-हत्यां करिष्यसि ॥ ५६ ॥

अन्वयः—तत्र अनृतोद्यं न अस्ति । अहम् सत्यवद्यं ब्रवीमि । तस्य मित्र गतः ( त्वम् ) रिपुहत्याम् करिष्यसि ।

हिन्दी—उसमें असद्भाव नहीं है । मैं सत्य कह रहा हूँ । उसके मित्र-भाव पाकर आप शत्रुओंको मार डालेंगे ।

व्याख्या—तत्र सुग्रीवे, अनृतोद्यम् मिथ्यावचनं, न नहि, अस्ति विद्यते । अहं देवत्वमुपेतः कबन्धः, सत्यवद्यम् ऋतवचः, ब्रवीमि वदामि । तस्य सुग्रीवस्य मित्रभूयं सख्यं, गतः प्राप्तः, (त्वम्) रिपुहत्यां शत्रुवधम्, करिष्यसि विधास्यसि

कोशः—'सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति' ।

कृदन्तः—'वदः सुपि क्यप् च ३।१।१०६' इति क्यपि सम्प्रसारणे उपपद समासे अनृतोद्यम् । यति सत्यवद्यम् । पूर्वत्र भावे, परत्र कर्मणि, इति क्यब्-यतो भेदः । मित्रस्य भाव इत्यर्थे 'भुवो भावे ३।१।१०७' इति क्यप् । रिपुहत्यामित्य 'हनस्त च ३।१।१०८' इति भावे क्यप्, तकारश्चान्तादेशः । स्त्रीत्वं लोकात् ।

वाच्यपरिवर्तनम्—अनृतोद्येन न भूयते । मया सत्यवद्यमुच्यते । मित्रभू गतेन त्वया रिपुहत्या करिष्यते ॥ ५६ ॥

पद्यद्वयेन पूर्वोक्तमेव कथयति—

आदृत्यस् तेन वृत्येन स्तुत्यो जुष्येण संगतः ।
इत्यः शिष्येण गुरुवद् गृह्यमर्थमवाप्स्यसि ॥ ५७ ॥

अन्वयः—वृत्येन जुष्येण तेन सङ्गतः आदृत्यः स्तुत्यः शिष्येण गुरुवद् इत्यः त्वम् गृह्यम् अर्थम् अवाप्स्यसि ।

हिन्दी—वरण करने योग्य तथा हनुमान् आदिसे सेवा करने योग्य सुग्रीव मिलकर, उसके द्वारा आदरके पात्र बने हुए तथा स्तुति करने योग्य (प्रशंसित शिष्यद्वारा अनुगमन करने योग्य गुरुके समान अनुगमन (उससे) किये गये, आ अपने अभीष्ट प्रयोजनको पा जायेंगे ।

व्याख्या—वृत्येन वरणीयेन ( त्वयेति शेषः ), ( हनुमदादिभिः ) जुष्येण सेव्येन, तेन पूर्वोक्तेन कपिना ( सुग्रीवेणेति शेषः ), सङ्गतः सख्यं प्राप्तः, आदृत्यः आदरणीयः (तेनेति शेषः), स्तुत्यः प्रशस्यः, शिष्येण छात्रेण, गुरुवद् अध्या

(तेन) इत्यः अनुगम्यः, (त्वम्) गृध्यम् अभिलष्यम्, अर्थम् प्रयोजनम्, अवाप्स्यसि आसादयिष्यसि। अनुप्रासच्छटयोपमालङ्कारः।

कोशः—'अर्थोऽभिधेयरै-वस्तु-प्रयोजन-निवृत्तिषु।
हिरण्यं द्रविणं द्रव्यमर्थ-रै-विभवा अपि'॥

कृदन्तः—'एतिस्तु-शास्वृदृजुषः क्यप् ३।१।१०९' इति क्यपि तुकि च इत्यः, स्तुत्यः, शिष्येण, वृत्येन, जुष्येण इति सर्वं साध्यम्। 'ऋदुपधाच्चाक्लृपिचृतेः ३।१।११०' इति क्यपि गुणाभावे गृध्यम्। 'शास इदङ्हलोः ६।४।३४' इतीत्वे 'शासि० ८।३।६०' इति षत्वमपि-शिष्येण।

वाच्यपरिवर्तनम्—सङ्गतेन आदृत्येन स्तुत्येन इत्येन त्वया गृध्यः अर्थः अवाप्स्यते॥ ५७॥

कबन्धस्यैव मतमभिधत्ते—

नाऽखेयः सागरोऽप्यन्यस् तस्य सद्-भृत्य-शालिनः।
मन्युस् तस्य त्वया मार्ग्यो, मृज्यः शोकश् च तेन ते॥ ५८॥

अन्वयः—सद्भृत्यशालिनः तस्य अन्यः सागरः अपि अखेयः न (अस्तीति शेषः)। त्वया तस्य मन्युः मार्ग्यः, तेन च ते शोकः मृज्यः।

हिन्दी—अच्छे भृत्योंसे सुशोभित उसके (सुग्रीवके) लिये दूसरा समुद्र खोद देना असम्भव नहीं है। आप उसका शोक दूर करें, वह आपका शोक दूर करेगा। 'उभयाकाङ्क्षा प्रयोजनम्' यह मीमांसकन्याय खूब घट रहा है।

व्याख्या—सद्भृत्यशालिनः समर्थानुचर—शोभिनः, तस्य सुग्रीवस्य, अन्यः इतरः, सागरः समुद्रः, अपि सम्भावनायाम्, अखेयः खनितुम् अशक्यः, न नहि (अस्तीति शेषः)। तस्य सुग्रीवस्य, मन्युः दैन्यम्, त्वया रामेण, मार्ग्यः अपाकरणीयः। तेन सुग्रीवेण च, ते तव (रामस्य), शोकः शुक्, मृज्यः मार्ष्टव्यः (अपाकार्यं इत्यर्थः)। काव्यलिङ्गान्योऽन्यालङ्कारयोः सङ्करः।

कोशः—'मन्युर्दैन्ये क्रतौ क्रुधि'।
'गर्हा समुच्चयप्रश्नशङ्कासम्भावनास्वपि'।

समासः—सन्तश्च ते भृत्याः सद्भृत्याः, तैः शालते इति।

कृदन्तः—सद्भृत्यशाली—'सुप्यजातौ० ३।२।७८' इति णिनिः। 'ई च खनः ३।१।१११' इति क्यवीकारयोः गुणैकादेशे खेयः। 'भृञोऽसंज्ञायाम् ३।१।११२' इति क्यप् भृत्यः। 'मृजेर्विभाषा ३।१।११३' इति ऋदुपध-प्राप्तस्य विभाषया क्यपि मृज्यो... 'मृजेर्वृद्धिः ७।२।११४' इति वृद्धौ ... ऋहलोर्ण्यत् ३।१।१२४ इति ण्यति, मृजेर्वृद्धिः...

'चजोः कुघिण्ण्यतोः ७।२।५३' इति कुत्वेन गकारे मार्ग्यश्च । सर्वत्र क्रमेण सूत्र-प्रवृत्तिर्ज्ञेया ।

वाच्यपरिवर्तनम्—अन्येन सागरेण अखेयेन न भूयते । मन्युं त्वं मृज्याः ।··· च शोकं मृज्यात् ॥ ५८ ॥

इदानीं कबन्धवाक्यमुपसंहरति—

> स राजसूय-याजीव तेजसा सूर्य-सन्निभः ।
> ·—मृषोद्यं वदन् रुच्यो जगाहे द्यां निशा-चरः ॥ ५९ ॥

अन्वयः— ···राजसूययाजी इव तेजसा सूर्य-सन्निभः रुच्यः स निशा-चरः अमृषोद्यं वदन् द्यां जगाहे ।

हिन्दी—राजसूय यज्ञ-कर्ताके समान तेजसे सूर्यके सदृश चमकाने वाला वह निशाचर ( कबन्ध ) सत्यवचन बोलता हुआ स्वर्ग चला गया ।

व्याख्या—राजसूययाजी राजसूयनाम्ना यागेन इष्टवान्, इव यथा, तेजसा ओजसा, सूर्य्यसन्निभः दिवाकरतुल्यः, रुच्यः दीप्तिमान्, स कबन्धो नाम, निशाचरः राक्षसः, अमृषोद्यम् सत्यवचः, वदन् व्याहरन्, द्यां स्वर्गं, जगाहे जगाम । उपमा ।

कोशः—'सूरसूर्य्यार्य्यमादित्यद्वादशात्मदिवाकराः' ।

कृदन्तः—राजसूयेन इष्टवान् इत्यर्थे 'करणे यजः ३।२।८५' णिनिः । राजा सूयते अत्रेति विग्रहे 'राजसूयसूर्यमृषोद्यरुच्य० ३।१।११४' इति क्यपि राजसूयम् । एवम् सुवति लोकान् कर्मणि प्रवर्तयति इति विग्रहे सूर्यः । अमृषा वदनमित्यर्थे भावेऽमृषोद्यम् । रोचते इति कर्तरि रुच्यः । क्यबन्ता इमे तत्तत्कार्येण निपात्यन्ते ।

वाच्यपरिवर्तनम्—राजसूययाजिना इव सूर्यसन्निभेन रुच्येन वदता तेन निशाचरेण द्यौः जगाहे ॥ ५९ ॥

सम्प्रति रामलक्ष्मणयोरेव वृत्तमाख्याति तेनैवाधिकारेण—

> अ-कृष्ट-पच्याः पश्यन्तौ ततो दाशरथी लताः ।
> रत्नाऽन्न-पान-कुप्यानामाटतुर् नष्टसंस्मृती ॥ ६० ॥

अन्वयः—ततः अकृष्टपच्याः लताः पश्यन्तौ रत्नान्नपान-कुप्यानां नष्टसंस्मृती दाशरथी आटतुः ।

हिन्दी—कबन्धके स्वर्ग चले जानेके बाद जोते खेतोंमें होने वाली लताओंको देखते हुए, रत्न अन्नपान स्वर्णादि भिन्न भिन्न पदार्थोंकी स्मृति भुलाकर, वे दोनों ( राम ) भ्रमण करने लगे ।

व्याख्या—ततः कबन्धस्य स्वर्गारोहणानन्तरम्, अकृष्टपच्या अनुप्तभूमिप्ररूढाः, लताः व्रततीः, पश्यन्तौ ईक्षमाणौ, रत्नान्नपानकुप्यानाम् मणिभोज्यपेयस्वर्णाद्यतिरिक्तोपकरणानाम्, नष्टस्मृती त्यक्तस्मरणौ ( विस्मृत-राजभोगौ इति यावत् ), दाशरथी दशरथात्मजौ ( रामलक्ष्मणावित्यर्थः ), आटतुः चेरतुः।

कोशः—'स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते'।

'ताभ्यां यदन्यत् तत्कुप्यम्'।

'अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता'।

समासः—रत्नानि च अन्नं च पानं च कुप्यं च इति रत्नान्नपानकुप्यानि, तेषाम्। नष्टा स्मृतिः ययोः तौ।

कृदन्तः—अकृष्टे पच्यन्ते इति विग्रहे 'राजसूय० ३।१।११४' इति पूर्वसूत्रेणैव क्यपि अकृष्टपच्याः। गुपू रक्षणे इति धातोः पूर्वसूत्रेणैव क्यपि, गस्य च कत्वे निपातिते कुप्यं स्वर्णादिभिन्नं वस्तु।

तिङन्तः—अट पट गतौ इति धातोर्लिटि द्वित्वादि-कृत्ये 'अत आदेः ७।४।७०' इत्यभ्यासदीर्घे, दीर्घैकादेशे आटतुः।

वाच्यपरिवर्तनम्—पश्यद्भ्यां नष्टस्मृतिभ्यां दाशरथिभ्याम् आटे ॥ ६० ॥

शबरी-विषयकं प्रसङ्गं वर्णयति—

समुत्तरन्ताव-व्यथ्यौ नदान् भिद्योद्ध्य-सन्निभान्।
सिध्य-तारामिव ख्यातां शबरीमापतुर् वने ॥ ६१ ॥

अन्वयः—अव्यथ्यौ भिद्योद्ध्यसन्निभान् नदान् समुत्तरन्तौ वने सिध्यताराम् इव ख्याताम् शबरीम् आपतुः।

हिन्दी—व्यथित न होने वाले ( राम-लक्ष्मण ) भिद्य और उद्ध्य नदोंके सदृश नदोंको पार करते हुए वनमें सिध्य ( पुष्य ) ताराके समान प्रसिद्ध शबरी नामकी तपस्विनीके पास पहुँचे।

व्याख्या—अव्यथ्यौ अश्रान्तौ, भिद्योध्यसन्निभान् भिद्योध्यनामकनदसदृशान्, नदान् सम्प्रवाहान्, समुत्तरन्तौ उत्प्लवमानौ, वने कानने, सिध्यतारां सिध्यां ताराम् पुष्यनक्षत्रमिव यथा, ख्याताम् प्रसिद्धां, शबरीं तन्नामिकाम् तपस्विनीम्, आपतुः आसेदतुः।

कोशः—'राधा विशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया'।

समासः—भिद्यश्च उद्ध्यश्च भिद्योद्ध्यौ, ताभ्यां सन्निभा भिद्योद्ध्यसन्निभाः।

कृदन्तः—भिनत्ति कूलम्, उज्झति उदकमित्यर्थे भिद्योद्ध्यौ नदे ३।१।११५'

१ भट्टि० द्वि०

इति क्यपा निपातितौ। उज्झ उत्सर्गे इति धातोः झस्य धकारोऽपि निपातनाद्‌ सिध्यन्ति अर्था अस्मिन्निति अधिकरणेऽर्थे 'पुष्यसिध्यौ नक्षत्रे ३।१।११६' क्यप्। व्यथ्य इति पूर्वसूत्रेणैव निपात्यम्।

वाच्य०—अव्यथ्याभ्यां समुत्तरद्भ्याम् सिध्यतारा इव शबरी आपे ॥६१॥

अथ तामेव विशेषकेन विशिनष्टि कविः—

वसानां वल्कले शुद्धे विपूयैः कृत-मेखलाम्।
क्षामामञ्जन-खण्डाऽऽभां दण्डिनीमजिनाऽऽस्तराम्॥
प्रगृह्य-पद-वत् साध्वीं स्पष्ट-रूपाम-विक्रियाम्।
अ-गृह्यां वीत-कामत्वात् देवगृह्याम-निन्दिताम्॥
धर्म-कृत्य-रतां नित्यम-नृच्य-फल-भोजनाम्।
दृष्ट्वाताममुचद् रामो युग्याऽऽयात इव श्रमम्॥ ६२-६४॥

अन्वयः—रामः शुद्धे वल्कले वसानाम्, विपूयैः कृतमेखलाम् क्षामाम्, अञ्जनखण्डाभाम्, दण्डिनीम्, अजिनास्तराम्, प्रगृह्यपदवत्साध्वीं, स्पष्टरूपाम्, अविक्रियाम्, वीतकामत्वात् अगृह्याम्, देवगृह्याम्, अनिन्दिताम्, नित्यं धर्मकृत्यरताम्, अनृच्य-फल-भोजनाम् ताम् दृष्ट्वा युग्यायात इव श्रमम् अमुचत्।

हिन्दी—रामचन्द्रजी, धोती चादर के स्थानमें शुद्ध वृक्षकी छाल पहनने वाली, मूंजकी मेखला पहनी हुई, दुबली, कालेवर्ण वाली, दण्ड धारण करने वाली, मृगचर्मके बिस्तरेवाली, व्याकरणके प्रगृह्य पदके समान शुद्ध, स्पष्ट तथा विकारको प्राप्त न होने वाली, निःस्पृह होनेके कारण स्वतन्त्र रहने वाली, देवताओं की पक्षपातिनी, अनिन्दिता ( लोगोंसे प्रशंसित ), प्रतिदिन धर्मकृत्योंमें आसक्त, अनुत्तेजक ( सात्त्विक ) फलोंका आहारकरनेवाली, उसको (शबरीको) देखकर सवारीसे छुटे हुए ( मुक्त ) बैलके समान परिश्रमरहित हो गये।

व्याख्या—रामः राघवः, शुद्धे पवित्रे, वल्कले तरुत्वचौ, वसानां परिदधानां, विपूयैः मुञ्जैः, कृतमेखलाम् सम्पादितकटिसूत्राम्, क्षामां कृशाम्, अञ्जनपिण्डाभां कृष्णवर्णाम्, दण्डिनीं गृहीतवंशयष्टिम्, अजिनास्तराम् मृगचर्मतल्पाम्, प्रगृह्यपदवत् शब्दशास्त्रप्रसिद्धप्रगृह्यसंज्ञकपदमिव, साध्वीम् सच्चरित्राम्, स्पष्टरूपाम् स्वच्छमूर्तिम्, अविक्रियाम् विकृतिरहिताम् ( विशेषणत्रयम् प्रगृह्यपक्षे—प्रयोगार्हम्, वर्णान्तरासङ्कीर्णम्, प्रकृतिभावयुक्तसन्ध्यभावादविकृतम् इति ), वीतकामत्वात् निःस्पृहत्वात् 'निस्पृहस्य तृणं जगत्' इति न्यायात्, अगृह्याम् न कस्यापि अधीनाम् स्वतन्त्रामित्यर्थः, देवगृह्याम् देवतापक्षाम्, अनिन्दिताम् अगर्हिताम् (सर्वैः स्तुतामेवेत्यर्थः), नित्यम्

अजस्रम्, धर्मकृत्यरताम् सदाचारपरायणाम्, अवृष्यफलभोजनाम् अनुत्तेजकफलाहाराम् सात्त्विकफलाभ्यवहाराम्, ताम् पूर्वोक्तां (शबरीमित्यर्थः), दृष्ट्वा विलोक्य, युग्यायातः वाहननिर्मुक्तः ( वृषः ), इव यथा, श्रमम् आयासम्, अमुचत् अत्याक्षीत् (तद्दर्शनाह्लादह्लदनिमग्नोऽभूदिति यावत्)। उपमा-काव्यलिङ्गयोः सङ्करः।

कोशः—'सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम्'।

'अजिनं चर्म कृत्तिः स्त्री'।

'अधीने निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ।'

समासः—कृता मेखला यया सा। अञ्जनस्य खण्डः अञ्जनखण्डः, तस्येव आभा यस्याः सा अञ्जनखण्डाभा, ताम्। अजिनम् आस्तरो यस्याः सा, ताम्। स्पष्टम् रूपं यस्याः सा, ताम्। अविद्यमाना विक्रिया यस्याः सा, ताम्। धर्मस्य कृत्यानि धर्मकृत्यानि, तेषु रता, ताम्। अवृष्याणि च तानि फलानि अवृष्यफलानि, तानि भोजनं यस्याः सा, ताम्।

तद्धितः—प्रगृह्यपदवत् 'तेन तुल्यं क्रिया चेद्वतिः ५।१।११५' इति वतिः। वीतकामाया भाव इत्यर्थे 'तस्य भावस्त्वतलौ ५।१।११९' इति त्वे, 'त्वे च ६।३।६४' इति ह्रस्वे वीतकामत्वात्।

कृदन्तः—विपूयन्ते इत्यर्थे कर्मणि 'विपूयविनीयजित्या मुञ्जकल्कहलिषु ३।१।११७' इति क्यप् निपातितः। 'पदास्वैरिबाह्यापक्ष्येषु च ३।१।११९' इति क्यपा प्रगृह्यं पदम्। अगृह्या अस्वैरिणी देवगृह्येति। कृत्य-वृष्य-शब्दौ च 'विभाषा कृवृषोः ३।१।१२०' इति क्यप्-सिद्धौ। युग्यमिति 'युग्यं च पत्रे ३।१।१२१' इति निपातितम्। 'क्षायो मः ८।२।५३' इति निष्ठामत्वम् क्षामाम्। 'ॠदोरप् ३।३।५७' इति अप् आस्तरः।

तिङन्तः—मुच्लृ मोचने इति धातोः लृदित्वादङि अमुचत्। अङो ङित्वादगुणः।

वाच्यपरिवर्तनम्—रामेण युग्यायातेन इव श्रमः अमोचि ॥ ६४ ॥

इतो द्वासप्ततितमपद्यावधि सप्तपद्यै रामप्रश्नं तदुत्तरञ्चाख्याति—

स तामूचेऽथ-कच्चित् त्वममावास्या-समन्वये।
पितॄणां कुरुषे कार्यम-पाक्यैः स्वादुभिः फलैः ॥ ६५ ॥

अन्वयः—अथ स ताम् ऊचे—'अयि साध्वि ! कच्चित् त्वम् अमावास्यासमन्वये अपाक्यैः स्वादुभिः फलैः पितॄणां श्राद्धम् कुरुषे' ?

हिन्दी—अये साध्वि ! क्या तुम अमावस्या तिथि आने पर अग्निमें न पकाये गये स्वादु मीठे फलोंसे पितरोंका श्राद्ध करती हो ?

व्याख्या—अथ दर्शनानन्तरम्, स रामः, ताम् शवरीम्, ऊचे जगाद, ( साध्वि ), कच्चित् इति प्रश्ने । त्वम् सदाचारिणि ! अमावास्यासमन्वये दर्शे सम्प्राप्तौ, अपाक्यैः अपचनीयैः ( अनग्निपक्वैरित्यर्थः ), स्वादुभिः मधुरैः, सस्यैः, पितॄणाम् अग्निष्वात्तादीनाम्, कार्य्यम् कृत्यम् ( श्राद्धमित्यर्थः ), विधत्से ? सर्वत्र प्रश्ने हेत्वभिधानात् काव्यलिङ्गम् ७० सप्तति यावत् । द्वि सहोक्तिः, तृतीये उपमा चेति तत्र सङ्करः ।

कोशः—'अमावास्या त्वमावस्या दर्शः सूर्य्येन्दुसङ्गमः' ।

कृदन्तः—'अमावस्यदन्यतरस्याम् ३।१।१२२' इति अमा=सह वसन्तः चन्द्र यस्यां तिथौ सेति विग्रहे कालेऽधिकरणे वसेर्ण्यंता पाक्षिकवृद्धौ च अमाव अमावस्येति । पच् धातोः 'ऋहलोर्ण्यत् ३।१।१२४' इति ण्यति, 'चजोः ७।३।५२' इति चस्य ककारे, वृद्धौ पाक्यम् । एवं कृधातोर्ण्यति वृद्धौ कार्यम्

वाच्यपरिवर्तनम्—तेन सा ऊचे । कच्चित् त्वया कार्यम् क्रियते ॥ ६५

प्रश्नस्वरूपमाह—

अवश्य-पाव्यं पवसे कच्चित् त्वं देव-भाग्घविः ।
आसाव्यमध्वरे सोमं द्विजैः कच्चिन् नमस्यसि ॥ ६६ ॥

अन्वयः—अयि साध्वि ! कच्चित् त्वम् अवश्यपाव्यम् देवभाक् हविः पवसे कच्चित् अध्वरे द्विजैः आसाव्यम् सोमम् नमस्यसि ?

हिन्दी—अये साधुनि ! क्या तुम अवश्य शोधनीय देवताओंके देने हविको पवित्र करती हो ? यज्ञमें ब्राह्मणों द्वारा ( अभिषेकार्ह ) अभि लिए रखी हुई सोमलताको नमस्कार करती हो ?

व्याख्या—( अयि साध्वि ! ) कच्चित् (किम्) इति प्रश्ने, त्वम् पुरः अवश्यपाव्यम् नूनं शोध्यम्, देवभाक् त्रिदशभोग्यं, हविः चरु-प्रभृतिद्रव्यम्, पुनासि ? कच्चित् किम्, अध्वरे यागे, द्विजैः ब्राह्मणैः, आसाव्यम् अभिषवं सोमं लताविशेषम् नमस्यसि प्रणमसि ?

कोशः—'प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम्' ।

[1]'दन्तविप्राण्डजा द्विजाः' । ( अध्वरः ५–३६ कोशे ) ।

१. द्विजराजशिरोमणेर्भिदां द्विजराज... कार्य्यमनसापि पात्यतेऽन्तकभृत्यैः खलु तद् द्विजावलिः ॥

कृदन्तः—अवश्यं पवितुं योग्यमित्यर्थे 'ओरावश्यके ३।१।१२५' इति ण्यत् वृद्धिः। 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि। समो वा हिततततयोर्मासस्य पचि-युड्घञोः॥' इति नियमात् मलोपे अवश्यपाव्यम्। आङ् पूर्वात् सुनोतेः 'आसुयु-वपि० ३।१।१२६' इति ण्यत् वृद्धिः।

तिङन्तः—नमः करोतीत्यर्थे 'नमोवरिवश्चित्रङः क्यच् ३।१।१९' इति क्यचि नमस्येत्यस्य धातुत्वाल्लटि नमस्यसि।

वाच्यपरिवर्तनम्—त्वया अवश्यपाव्यं देवभाक् हविः पूयते। आसाव्यः सोमः नमस्यते॥ ६६॥

पुनर्द्रढयति—

आचाम्यं सन्ध्ययोः कच्चित् सम्यक् ते न प्रहीयते।
कच्चिदग्निमिवाऽऽनाय्यं काले संमन्यसेऽतिथिम्॥ ६७॥

अन्वयः—( अयि साध्वि ) कच्चित् ते सन्ध्ययोः सम्यक् आचाम्यम् न प्रहीयते ? कच्चित् ( त्वम् ) काले ( प्राप्तम् ) अतिथिम् आनाय्यम् अग्निम् इव संमन्यसे ?

हिन्दी—अये साधुनि क्या तुम्हारी दोनों सन्ध्याओंमें विधानसे आचमन लुप्त तो नहीं होता ? और क्या तुम समयपर प्राप्त अतिथिको दक्षिण अग्निके समान मानती तो हो ?

व्याख्या—अये साध्वि ! कच्चित् किम्, ते तव शवर्याः, सन्ध्ययोः प्रातः-सायंकालयोः, सम्यक् विधि विहितम्, आचाम्यम् आचमनीयं कर्म, न नहि, प्रहीयते रिच्यते ? कच्चित् ( त्वम् ) काले समये ( प्राप्तम् ), अतिथिम् अभ्यागतम्, आनाय्यम् दक्षिणम्, अग्निम् अनलम्, इव यथा, मन्यसे पूजयसि ?

कोशः—'कच्चित् कामप्रवेदने'।
'यो गार्हपत्यादानीय, दक्षिणाग्निः प्रणीयते।
तस्मिन्नानाय्योऽथाग्नायी, स्वाहा च हुतभुक्प्रिया'॥

कृदन्तः—आनीयते इत्यर्थे 'आनाय्योऽनित्ये ३।१।१२७' इति आङ्-पूर्वस्य यतेः ण्यदायादेशौ निपात्येते।

तिङन्तः—ओहाक् त्यागे इत्यस्य कर्मणि लटि, यकि 'घुमास्थागापा० ६।४।६६' इति ईत्वम् हीयते। मनु अवबोधने इत्यस्य दैवादिकस्य सम्पूर्वस्य कर्तरि लटि सम्मन्यसे।

वाच्यपरिवर्तनम्—शबर्या आचाम्यं न प्रहीयते। अतिथिः आनाय्यः अग्निः इव संमन्यते॥ ६७॥

पुनः पृच्छति रामः—

**न प्रणाय्यो जनः कच्चिन् निकाय्यं ते ऽधितिष्ठति ।**
**नैव-कार्य-विघाताय धर्मद्रोही महोदये ॥ ६८ ॥**

अन्वयः—हे महोदये ! कच्चित् धर्मद्रोही प्रणाय्यः जनः देवकार्यविघा[ताय]
[ते] निकाय्यं न अधितिष्ठति ?

हिन्दी—हे अभ्युदयशालिनि ! क्या तुमसे असम्मत कोई धर्मद्रोही आ[दमी]
[ध]र्म-क्रियाके विनाशके लिये तुम्हारे आश्रममें तो नहीं रहता ?

व्याख्या—हे महोदये अभ्युदयशालिनि ! कच्चित् इति प्रश्ने, धर्म[द्रोही]
[स]ुकृतविघाती, प्रणाय्यः असम्मतः, जनः प्राणी, देवकार्यविघाताय सुरकृत्य-वि[ना]
शाय, ते तव, निकाय्यम् आवासम्, न नहि, अधितिष्ठति अधिवसति ?

कोशः—'निकाय्यनिलयालयाः' ।

'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' ।

कृदन्तः—अधिपूर्वस्य स्थाधातोर्योगे 'अधिशीङ्स्थासां कर्म १।४।४६' इ[ति]
कर्मतया द्वितीया । 'तुमर्थाच्च भाववचनात् २।३।१५' इति धर्मविघाताये[ति]
चतुर्थी । 'भाववचनाश्च ३।३।११' इति घञि उपधावृद्धौ, 'हनस्तोऽचिण्ण[लोः]
७।३।३२' इति नस्य तकारे विघातः । प्रपूर्वात् नी धातोः 'प्रणाय्योऽसम्[मतौ]
३।१।१२८' इति निपातनात् प्रणाय्यः । निपूर्वात् चिञ् धातोः 'पाय्यसान्ना[य्य]
३।१।१२९' इति निपातनात् निकाय्येत्यस्य सिद्धिः ।

तिङन्तः—अधि-पूर्वस्य ष्ठा गतिनिवृत्तौ इति भौवादिकाल्लटि 'पाघ्रा[...]
७।३।७८' इति तिष्ठादेशः ।

वाच्यपरिवर्तनम्—कच्चित् धर्मद्रोहिणा प्रणाय्येन जनेन निकाय्यः न अ[धि]
ष्ठीयते ॥ ६८ ॥

तथैव च जिज्ञासते—

**कुण्ड-पाय्य-वतां कच्चिदग्निचित्या-वतां तथा ।**
**कथाभी रमसे नित्यमुपचाय्य-वतां शुभे ! ॥ ६९ ॥**

अन्वयः—अयि शुभे ! कच्चित् ( त्वम् ) कुण्डपाय्यवताम् अग्निचित्याव[ताम्]
तथा उपचाय्यवताम् कथाभिः नित्यम् रमसे ?

हिन्दी—अयि कल्याणिनि ! क्या तुम ( कुण्डपाय्य ) यज्ञकर्ताओं ( अ[ग्नि]
चित्यावतां ) आहूताग्नियों तथा ( उपचाय्यवतां ) अग्नि सेवियोंकी कथा[से]
प्रेम करती हो ?

व्याख्या—अयि शुभे कल्याणिनि, (त्वम्) कुण्डपाय्यवताम् कुण्डपाय्यनाम-कयागकर्तृणाम्, अग्निचित्यावताम् आहिताग्नीनाम्, तथा तद्वत्, उपचाय्यवताम् उप-चाय्याग्निशालिनाम्, कथाभिः धर्मोपदेशवन्धैर्नित्यम् प्रत्यहम्, रमसे प्रियसे।

कोशः—'प्रबन्धकल्पना कथा प्रवल्हिका प्रहेलिका'।

तद्धितः—कुण्डपाय्यः अस्ति अस्येत्यर्थे 'तदस्यास्त्यस्मिन्निति मतुप् ५।२।९४' इति मतुप्, तस्य 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८।२।९' इति वत्वे कुण्डपाय्यवन्तः, तेषाम्। एवम् अग्निचित्यावताम् उपचाय्यवताम् इति।

कृदन्तः—कुण्डैः पीयते सोमोऽस्मिन्निति विग्रहे 'क्रतौ कुण्डपाय्य-संचाय्यौ ३।१।१३०' इति निपातनम्। अग्नेश्चयनम् इत्यर्थे 'चित्याग्निचित्ये च ३।१।१३२' इति भावे क्यप्, तुक् च निपात्यते। उपचीयते इत्युपचाय्योऽग्निः 'अग्नौ परिचाय्योपचाय्यसमूह्याः ३।१।१३१' इति ण्यदायादेशौ निपातितौ। (इति कृत्याधिकारः)।

वाच्यपरिवर्तनम्—हे शुभे कच्चित् त्वया रम्यते? ॥ ६९ ॥

सम्प्रति कृत्याधिकारं समाप्य प्रकीर्णकाण्डेन प्रश्नानेवाख्याति—

वर्धते ते तपो भीरु! व्यजेष्ठा विघ्न-नायकान्।
अजैषीः काम-संमोहौ, संप्राप्था विनयेन वा ॥ ७० ॥

अन्वयः—हे भीरु! ते तपो वर्द्धते? विघ्ननायकान् व्यजेष्ठाः, कामसम्मोहौ अजैषीः, वा विनयेन संप्राप्थाः?

हिन्दी—हे भयशीले! तुम्हारी तपस्या बढ़ती तो है? तुमने विघ्नके नायकों को जीत तो लिया है (और) काम तथा मोह भी जीत लिये हैं या तुम्हें विनय भी प्राप्त हो गया है?

व्याख्या—हे भीरु भयशीले! ते तव, तपः तपस्या, वर्द्धते एधते। विघ्न-नायकान् तपोऽन्तरायनेतॄन्, व्यजेष्ठाः विजितवती? काम-सम्मोहौ अरिषड्वर्ग-मित्यर्थः, अजैषीः न्यक् चकर्थ। वा अथवा, विनयेन नम्रतया, संप्राप्थाः अयुक्थाः किम् इत्यपि सर्वत्रैव योज्यम्। हे भीरु इति सम्बोधनेऽपि संज्ञाविधेरनित्यत्वात् 'ह्रस्वस्य गुणः ७।३।१०८' इति न गुणः। अथवा 'ऊङुतः ४।१।३६' इत्यूङि दीर्घान्तस्य ह्रस्वो ज्ञेयः।

कोशः—'छन्दः पद्येऽभिलाषे च तपः कृच्छ्रादिकर्म च'।

तिङन्तः—विपूर्वाज्जयतेर्लुङि 'विपराभ्यां जेः १।३।१९' इत्यात्मनेपदे, च्लेः सिचि, गुणे, षत्वे, ष्टुत्वे व्यजेष्ठाः। तस्यैव जेः परस्मैपदित्वात् लुङि, 'सिचि वृद्धिः परस्मैपदेषु ७।२।१' इति वृद्धिः अजैषीः।

वाच्यपरिवर्तनम्—तपसा वृध्यते (त्वया) विघ्ननायका व्यजेषत कामसम्मोहौ अजेषाताम् । विनयः (त्वाम्) सम्प्राप्तवान् ॥ ७० ॥

पुनः पृच्छति रामः—

> नाऽऽयस्यसि तपस्यन्ती, गुरून् सम्यगतूतुषः ।
> यमान्–नोदविजिष्ठास् त्वं, निजाय तपसे ऽतुषः ॥ ७१ ॥

अन्वयः—(हे भीरु) तपस्यन्ती त्वम् न आयस्यसि ? गुरून् सम्यक् अतूतुषः ? यमान् न उदविजिष्ठाः, निजाय तपसे अतुषः ?

हिन्दी—हे भीरु ! तुम तपस्या करती हुई ऊबती तो नहीं ? आचार्य आदि को खूब संतुष्ट तो कर दिया है ? और अहिंसादि से उद्विग्न तो नहीं हो गई हो ? अपने तपसे सन्तुष्ट तो हो ?

व्याख्या—(हे भीरु !) तपस्यन्ती तपस्यां कुर्वती, त्वम् शबरी, न नहि, आयस्यसि खिद्यसे ? गुरून् आचार्यान्, सम्यक् साधु, अतूतुषः तोषितवती असि ? यमात् अहिंसादिकर्मणो वा, न नहि, उदविजिष्ठाः उद्विग्ना असि ? निजाय स्वीयाय, तपसे नित्य–तपस्यायै, अतुषः सन्तुष्टा असि ? ॥ ७१ ॥

कोशः—'कृतान्तो यमुनाभ्राता शमनो यमराड्यमः' ।
'शरीरसाधनापेक्षं नित्यं यत् कर्म तद्यमः' ।
अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः (यो० सू०) ।

कृदन्तः—'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ३।१।१५' इति क्यङ्, 'तपसः परस्मैपदम् ३।१।१५' इति वार्तिकात् परस्मैपदत्वात् शतरि उगितश्च इति ङीपि 'शप्श्यनोर्नित्यम् ७।१।८१' इति नुमि तपस्यन्ती ।

तिङन्तः—तुष तुष्टौ इति धातोर्ण्यन्ताल्लुङि 'णिश्रिद्रु० ३।१।४८' इति चङि, 'णौ चङ्युपधाया ह्रस्वः ७।४।१' इति ह्रस्वे, णिलोपे, तुष् इत्यस्य द्वित्वे 'दीर्घो लघोः ७।४।९४' इति अभ्यासदीर्घेऽतूतुषः । 'पुषादि० ३।१।५५' इत्यङ् अतुषः । ओविजी भयचलनयोः इत्यस्य लुङि 'विज इट् १।२।२' इति इटो ङित्वान्नोपधागुणः–उदविजिष्ठाः । सप्तमसर्गे (द्वितीय पद्ये) उद्विजितुमिति ।

वाच्यपरिवर्तनम्—तपस्यन्त्या त्वया न आयस्यते, गुरवः अतोषिषत उदवेजि, अतोषि ॥ ७१ ॥

शबरीकर्तृकां पूजामाह—

> अथाऽर्घ्यं मधुपर्काऽद्यमुपनीयाऽऽदरादसौ ।
> अर्चयित्वा फलैरर्च्यौ सर्वत्राऽऽख्यदनामयम् ॥ ७२ ॥

अन्वयः—अथ असौ मधुपर्काद्यम् अर्घ्यम् उपनीय अर्च्यौ तौ फलैः आदरात् अर्चयित्वा सर्वत्र अनामयम् आख्यत् ।

हिन्दी—रामचन्द्रजीके प्रश्न कर चुकनेपर उस शबरीने मधुपर्क-प्रभृति अर्घ्यकी सामग्री एकत्र करके पूजा के योग्य उन दोनोंको फलोंसे आदरपूर्वक पूजा कर सभी विषयोंमें कुशलक्षेम है—ऐसा कहा ।

व्याख्या—अथ रामप्रश्नानन्तरम्, असौ शबरी, मधुपर्काद्यम् दधिमधुघृतादिनिर्मितम्, अर्घ्यं पूजादिसामग्रीम्, उपनीय सङ्गृह्य, अर्च्यौ पूज्यौ, तौ रामलक्ष्मणौ, फलैः अनन्नसस्यैः, आदरात् श्रद्धया, अर्चयित्वा सम्पूज्य, सर्वत्र सर्वस्मिन्नपि पृष्टविषये, अनामयम् आरोग्यम्, आख्यत् अचकथत् । साकूतविशेषणः परिकरः । क्रियाद्वये शबर्य्यन्वयाद् दीपकोऽपि ।

कोशः—'अनामयं स्यादारोग्यम् चिकित्सा रुक् प्रतिक्रिया ।'

'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' ।

तद्धितः—अर्घायेदम् अर्घ्यम् इत्यर्थे 'पादार्घाभ्यां च ५।४।२५' इति तादर्थ्ये यति, भस्यास्य लोपे अर्घ्यम् ।

कृदन्तः—उपनीय—णीञ् प्रापणे इति धातोः 'समान-कर्तृकयोः पूर्वकाले ३।४।२१' इति क्त्वाप्रत्यये उपसर्गयोगेन समासे ल्यप् । अर्च–धातोः क्त्वि अर्चयित्वा ।

तिङन्तः—'अस्यति-वक्ति-ख्यातिभ्योऽङ् ३।१।५२' इत्यङि 'आतो लोप इटि च ६।४।३४' इत्यालोपे आख्यत् ।

वाच्यपरिवर्तनम्—अमुया सर्वत्र अनामयः आख्यायि ।

इति प्रकीर्णकाण्डम् । पुनरधिकारकाण्डमारभमाणो निरुपपदकृदधिकारमाह—'ण्वुलतृचौ ३।१।१३३' इत्यत आरभ्य, 'आशिषि च ३।१।५०' इति यावत् । ततोऽग्रे 'कर्मण्यण् ३।२।१' इत्यादयः 'आतो युक्० ३।३।१२२' इत्यन्तम् सोपपदकृतः ससमसर्गोपान्तं गच्छन्ति ॥ ७२ ॥

तत्र शबरी प्रत्युत्तरयति—

सख्यस्य तव सुग्रीवः कारकः कपि-नन्दनः ।
द्रुतं द्रष्टासि मैथिल्याः सैवमुक्त्वा तिरोऽभवत् ॥ ७३ ॥

अन्वयः—( हे राम ! ) कपिनन्दनः सुग्रीवः तव सख्यस्य कारकः । ( त्वम् ) हि मैथिल्याः द्रुतम् द्रष्टा असि—सा इति उक्त्वा तिरः अभवत् ।

हिन्दी—हे राम ! वानरपुत्र सुग्रीव आपसे मैत्री करेंगे। आप सीताको जल्दी ही देखेंगे—ऐसा कहकर वह अन्तर्धान हो गयी।

व्याख्या—हे राम ! कपिनन्दन कीशात्मजः, सुग्रीवः तन्नामा वानरराजः तव रामस्य भवतः, सख्यस्य मित्रत्वस्य, कारकः कर्ता। (त्वम्) मैथिल्याः सीतायाः द्रुतं शीघ्रम्, द्रष्टा दर्शकः, असि भवसि। सा शबरी, एवम् इत्थम्, उक्त्वा अभिधाय, तिरोऽभवत् अन्तर्दधौ। भाविकोऽलङ्कारः।

कृदन्तः—'ण्वुल्तृचौ ३।१।१३३' इत्यतः क्रमेणैव सूत्रोपस्थितिः कारकः द्रष्टेत्यादिप्रयोगेषु।

वाच्यपरिवर्तनम्—कपिनन्दनेन सुग्रीवेण सख्यस्य कारकेण भूयते। (त्वया) द्रष्ट्रा भूयते। तथा तिरोऽभूयत ॥ ७३ ॥

शबर्यास्तिरोभावे तयोः पम्पाप्रापणं कविराख्याति—

नन्दनानि मुनीन्द्राणां रमणानि वनौकसाम्।
वनानि भेजतुर् वीरौ ततः पाम्पानि राघवौ ॥ ७४ ॥

अन्वयः—ततः वीरौ राघवौ, मुनीन्द्राणां नन्दनानि, वनौकसां रमणानि पाम्पानि वनानि भेजतुः।

हिन्दी—शबरीके छिप जानेपर वीर राम-लक्ष्मण मुनियों... [illegible] तपस्वियोंको खुश करने वाले वनवासियोंके प्रिय पम्पाके निकटवर्ती अरण्योंको गये।

व्याख्या—ततः शबरीतिरोधानानन्तरम्, वीरौ शूरौ, राघवौ दाशरथी मुनीन्द्राणां ऋषिश्रेष्ठानां, नन्दनानि आनन्ददानि, वनौकसाम् अरण्यवासिनां रमणानि मनोहराणि, पाम्पानि पम्पासरोऽदूरभवानि, वनानि विपिनानि, भेजतुः आसेदतुः। अनेककर्मणां भजनक्रियान्वयाद् दीपकः।

तद्धितः—पम्पाया अदूरभवानि पाम्पानि। 'अदूरभवश्च ४।२।७०' इत्यण्। रघोरपत्यम् इत्यपत्येऽणि 'ओर्गुणः ६।४।१४६' इति गुणे राघवौ।

तिङन्तः—भज सेवायाम् इति भौवादिकस्य लिटि द्वित्वादिकार्ये 'तृफल-भजत्रपश्च ६।४।१२२' इति एत्वाभ्यासलोपौ भेजतुः।

वाच्य०—वीराभ्याम् राघवाभ्याम् नन्दनानि रमणानि वनानि भेजिरे।

शिक्षा—विपदि धैर्यं धृत्वाऽरण्यादरण्ययानम् इति रामस्याध्यवसायो दृश्यः ॥ ७४ ॥

तत्र रामो लक्ष्मणं वक्ति—

भृङ्गाऽऽली-कोकिल-क्रुङ्भिर् वाशनैः पश्य लक्ष्मण !।
रोचतेऽभूषिता पम्पा-मस्माकं हृदयाविधम् ॥ ७५ ॥

अन्वयः— हे लक्ष्मण ! वाशनैः रोचनैः भृङ्गालीकोकिलक्रुङ्भिः भूषिताम्, अस्माकम् हृदयाविधम् पम्पाम् पश्य ।

हिन्दी—हे लक्ष्मण ! शब्द करने वाले तथा सुन्दर भ्रमरपंक्ति एवं कोकिल और क्रौञ्च पक्षियोंसे अलंकृत, हमलोगोंके हृदयको व्यथित करने वाले पम्पासरको देखो ।

व्याख्या—हे लक्ष्मण हे सौमित्रे !, वाशनैः कूजद्भिः, रोचनैः मनोहरैः, भृङ्गालीकोकिलक्रुङ्भिः षट्पद-सङ्घ-परभृत-क्रौञ्चैः, भूषितां शोभिताम्, अस्माकं विरहिणाम्, हृदयाविधम् व्यथयित्रीम्, पम्पाम् तन्नामकं सरः, पश्य निरीक्षस्व । दृशि अनेकविशेषणायाः पम्पाया अन्वयाद्दीपकः ।

कोशः—'वनप्रियः परभृतः कोकिलः पिक इत्यपि' ।

'क्रुङ् क्रौञ्चोऽथ बकः कह्वः पुष्कराह्वस्तु सारसः' ।

समासः—भृङ्गाल्यश्च कोकिलाश्च क्रुञ्चश्च इति भृङ्गाली-कोकिलक्रुञ्चः तैः । इतरेतरद्वन्द्वः ।

कृदन्तः—हृदयं विध्यतीति विग्रहे 'क्विप् च ३।२।७६' इति क्विपि, 'ग्रहिज्या० ६।१।१६' इति सम्प्रसारणे, 'नहि-वृति-वृषि-व्यधि० ६।३।५८' इति पूर्वप्रकृतेर्दीर्घे हृदयाविधम् । क्रुञ्चन्तीति विग्रहे 'ऋत्विग्दधृक्० ३।२।५९' इति क्विनि, निपातनान्नलोपाभावे, संयोगान्तलोपे, 'क्विन् प्रत्ययस्य कुः ८।२।६२' इति तस्य कुत्वेन ङकारे भृङ्गाली-कोकिल क्रुङ्भिः । वाशनरोचनादयः 'नन्दिग्रहि० ३।१।१३४' इत्यनेन साध्याः ।

वाच्य०—हे लक्ष्मण ! त्वया भूषिता हृदयावित् पम्पा दृश्यताम् ॥ ७५ ॥

सम्प्रति निरुपपदमेव कृतं दर्शयितुं प्रक्रमते—

**परिभावीणि ताराणां पश्य मन्थीनि चेतसाम् ।**
**उद्भासीनि जले-जानि दुन्वन्त्य-दयितं जनम् ॥ ७६ ॥**

अन्वयः—हे लक्ष्मण ! ताराणां परिभावीणि चेतसां मन्थीनि उद्भासीनि जलेजानि अदयितं जनं दुन्वन्ति इति पश्येति पूर्वेणान्वयः ।

हिन्दी—हे लक्ष्मण ताराओंको परास्त करने वाले, (विरहियोंके) चित्तको व्यथित करने वाले खिले हुए कमल, प्रियारहित मनुष्यको पीड़ित कर रहे हैं ।

व्याख्या—हे लक्ष्मण ! ताराणां ज्योतिषां, परिभावीणि तिरस्कर्तॄणि, चेतसां विरहिमनसां, मन्थीनि माथीनि, उद्भासीनि उत्फुल्लानि, जलेजानि पद्मानि, अदयितं प्रियाविरहितं, जनं नरं, दुन्वन्ति उत्पीडयन्ति (व्यथयन्तीत्यर्थः) । अनेकविशेषणानि दवनेऽन्वितानीति दीपकः ।

कोश:—'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मन: ।'
'अनादर: परीभव: परीभावस्तिरस्क्रिया ।'

समास:—अविद्यमाना दयिता यस्य स: अदयित:, तम् इति बहुव्रीहि:।

कृदन्त:—जले अजनिषत इति विग्रहे 'सप्तम्यां जनेर्ड: ३।२।९७' इति टिलोपे, 'तत्पुरुषे कृति बहुलम् ६।३।१४' इति सप्तम्या अलुकि जलेजानि। परि-पूर्वकाद् भूधातो: 'नन्दिग्रहिपचादिभ्य:० ३।१।१३४' इति णिनी, वृद्धौ परिभावीणि। एवं हि मन्थीनि उद्भासीनि इत्यत्रापि णिनि:। पचादित्वा-जनयतीति अचि णिलोप: ।

वाच्यपरिवर्तनम्—परिभाविभि: मन्थिभि: उद्भासिभि: जलेजै: अदयि-जन: दूयते ॥ ७६ ॥

पुन: रामो विरहमेवेतोऽविच्छिन्नं पञ्चाशीतितमपद्यान्तं वक्ति—

सर्वत्र दयिताऽधीनं सु-व्यक्तं रामणीयकम् ।
येन जातं प्रियाऽपाये कद्-वदं हंस-कोकिलम् ॥ ७७ ॥

अन्वय:—सर्वत्र रामणीयकं दयिताधीनं सुव्यक्तम् । येन प्रियापाये (मे) हंसकोकिलम् कद्वदं जातम् ।

हिन्दी—रमणीयता सभी जगह प्रियजनोंके अधीन ही रहती है, यह बात स्पष्ट है। तभी तो प्रिया सीताजी के खो जानेपर भी हंस और कोकिल मुझे कटुभाषी जान पड़ते हैं।

व्याख्या—सर्वत्र सर्वस्मिन्नेव स्थाने, रमणीयकं रमणीयत्वम्, दयिताधीनं वल्लभायत्तम् (इति), सुव्यक्तम् सुस्पष्टम्। येन यत:, प्रियापाये सीता-विरहे (मे) हंसकोकिलम् चक्राङ्गपिकवृन्दम् कद्वदं कटुभाषि, सञ्जातम् संवृत्तम्। अनुमानालङ्कार: ।

कोश:—'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकस: ।'

समास:—हंसाश्च कोकिलाश्च तेषां समाहार: हंसकोकिलम् । 'विभाषा वृक्षमृग० २।४।१२' इत्येकवद्भावे हंसकोकिलम् ।

तद्धित:—रमणीयस्य भाव: रामणीयकम् इत्यत्र 'योपधाद् गुरूपोत्तमाद् वुञ् ५।१।१३२' इति वुञ् ।

कृदन्त:—कुत्सितं यथा स्यात्तथा वदतीति वदधातो: पचादित्वादचि कुवदम् इत्यत्र 'रथवदयोश्च ६।३।१०' इति को: कदादेशे कद्वदम्। जनधातो: क्तप्रत्यये 'जनसनखनां सञ्झलो: ६।४।४२' इत्याकारान्तादेशे जातम् ।

वाच्यपरिवर्तनम्—रामणीयकेन दयिताधीनेन सुव्यक्तेन भूयते। हंसकोकिलेन कद्वदेन जातेनाभावि ॥ ७७ ॥

पुनः रामस्तथैव वक्ति—

पक्षिभिर् वितृदैर् यूनां शाखिभिः कुसुमोत्किरैः।
अ-ज्ञो यो, यस्य वा नाऽस्ति प्रियः, प्रग्लो भवेन् न सः ॥ ७८ ॥

अन्वयः—यः अज्ञः यस्य वा प्रियः न अस्ति, स (एव) यूना वितृदैः पक्षिभिः कुसुमोत्किरैः शाखिभिश्च प्रग्लो न भवेत्।

हिन्दी—जो रसानभिज्ञ है या जिसका कोई प्रिय है ही नहीं, वही पुरुष युवकोंको सतानेवाले (कोकिलादि) पक्षियोंसे तथा फूलोंकी वृष्टि करनेवाले पेड़ोंसे ग्लानि प्राप्त नहीं करेगा (नहीं तो सभी विरही इनसे व्यथित होंगे ही)।

व्याख्या—यः जनः, अज्ञः रसानभिज्ञः, यस्य मनुजस्य, वा अथवा, प्रियः प्रेमकरः, (कोऽपि) न नहि, अस्ति विद्यते (विरक्तः संन्यासीति यावत्), स जनः (एव), यूनां तरुणानां, वितृदैः हिंसकैः, पक्षिभिः हंसकोकिलादिभिः, (तथा) कुसुमोत्किरैः पुष्पवर्षिभिः, शाखिभिः तरुभिः, प्रग्लः ग्लानियुक्तः, न भवेत्, नहि स्यात् (नो चेत् सर्वोऽपि स्यादेव पीडितः)। अर्थापत्त्यलङ्कारः।

कोशः—'बालस्तु स्यान्माणवको वयस्कस्तरुणो युवा।'

कृदन्तः—वितृदन्ति इति वितृदाः। 'इगुपधज्ञाप्रीकिरः कः ३.१।१३५' इति कप्रत्यये, कित्वाद् गुणाभावः। एवं जानातीति ज्ञः। प्रीणातीति प्रियः। उत्किरन्ति इति उत्किराः। सर्वत्रैव पूर्वसूत्रेण कः। प्रकर्षेण ग्लायतीति विग्रहे 'आतश्चोपसर्गे ३।१।१३६' इति के, 'आतो लोप इटि च ६।४।६४' इत्यालोपे प्रग्लः।

तद्धितः—शाखाः सन्ति येषां ते इति विग्रहे 'व्रीह्यादिभ्यश्च ५।२।११६' इति इनि प्रत्यये शाखिनः, तैः।

वाच्यपरिवर्तनम्—येन अज्ञेन भूयते। तेन प्रग्लेन न भूयते ॥ ७८ ॥

पुनरपि रामो निरुपपदकृदधिकारेण विरहित्वमात्मनो व्यनक्ति—

ध्वनीनामुद्धमैरेभिर् मधूनामुद्धयैर् भृशम्।
आजिघ्रैः पुष्प-गन्धानां पतङ्गैर् ग्लपिता वयम् ॥ ७९ ॥

अन्वयः—ध्वनीनामुद्धमैः, मधूनाम् उद्धयैः, पुष्पगन्धानाम् आजिघ्रैः, एभिः पतङ्गैः वयं भृशं ग्लपिताः।



हिन्दी—(मधुर) ध्वनि करनेवाले, (पुष्पोंके) मधुओंको पीनेवाले,

फूलोंकी गन्धोंको सूँघनेवाले इन पतङ्गोंसे—भ्रमरोंसे— विशेपरूपसे हम लो पीड़ित हुए हैं।

व्याख्या—हे लक्ष्मण ! ध्वनीनां मधुरशब्दानाम्, उद्धमैः उत्पादकैः, मधु पुष्परसानाम्, उद्धयैः पातृभिः, पुष्पगन्धानां कुसुमसुरभीणाम्, आजिघ्रैः आघ्रा तृभिः, एभिः समीपवर्तिभिः, पतङ्गैः भृङ्गैरित्यर्थः, वयम् वियोगिनः, भृश अत्यन्तम्, ग्लपिताः पीडिताः स्म इति शेषः। ग्लापनकारणोक्तौ काव्यलिङ्गम्

कृदन्तः—ध्मा शब्दाग्निसंयोगयोः, घेट् पाने इत्युत्पूर्वकाभ्याम्, आङ्पूर्वक घ्रागन्धोपादाने इत्यतश्च 'पाघ्राध्माधेड्दृशः शः ३।१।१३७' इति शे, 'पाघ्रा स्थाम्ना० ७।३।७८' इति ध्माघ्रोश्च धमजिघ्रादेशे उद्धमैः आजिघ्रैः, धेटः अया उद्धयैः इति। ग्लायतेर्ण्यन्तात् 'अर्तिह्री० ७।३।३६' इति पुकि, 'ग्लास्नावनुव च' इति मित्वात् 'मितां ह्रस्वः ६।४।९२' इति ह्रस्वे ग्लपि धातोः क्तप्रत्य 'निष्ठायां सेटि ६।४।५२' इति णिलापे ग्लपिताः।

वाच्यपरिवर्तनम्—उद्धमा उद्धया आजिघ्रा इमे पतङ्गा अस्मान् भृ अजिग्लपन्॥ ७९॥

रामः पुनराख्याति—

> धारयैः कुसुमोर्मीणां पारयैर् बाधितुं जनान्।
> शाखिभिर् हा हता भूयो हृदयानामुदेजयैः॥ ८०॥

अन्वयः—कुसुमोर्मीणां धारयैः; जनान् बाधितुं पारयैः, हृदयानाम् उदेजयैः शाखिभिः, भूयः हताः ( वयमिति शेषः )

हिन्दी—फूल-समुदायको धारण करनेवाले, ( विरही ) जनोंको पीड़ि करनेवाले तथा हृदयोंको कँपा देनेवाले पेड़ोंसे, खेद है कि फिर भी हम, मारे रहे हैं।

व्याख्या—कुसुमोर्मीणां पुष्प-तरङ्गाणाम्, धारयैः धारकैः, जनान् वि प्राणिनः, बाधितुं पीडितुं, पारयैः क्षमैः, हृदयानां विरहि-चेतसाम्, उदे उत्कम्पकैः, शाखिभिः वृक्षैः, भूयः पुनरपि, हा इति खेदे, पीडिता वयम्, वि हिण इति शेषः। पूर्वोक्त एवालङ्कारः। हनने विशेषणत्रयस्य तुल्ययोगात् तु योगिता वेति सन्देहसङ्करः।

कोशः—'...' आमर्वा'। 'हा विषादशुगर्तिषु'।
'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः'।

कृदन्तः—धारयन्तीति विग्रहे ण्यन्ताद् धृधातोः 'अनुपसर्गाल्लिम्पवृन्दधारिपारि० ३।१।१३८' इति शे शपि च गुणायादेशे धारयाः। एवं पारयैः ण्यन्तः पृ धातुः। उत्पूर्वकात् एजृ कम्पने इति धातोर्ण्यन्तात् पूर्ववत् शे शपि च उदेजयैः। हनः क्ते 'अनुदात्तोपदेश० ६।४।३७' इति नलोपे हताः।

वाच्य०—धारयाः पारया उदेजयाः शाखिनः (अस्मान्) अवधिषुः ॥८०॥

वियोगव्यथां प्रकटयति रामः—

> ददैर् दुःखस्य मादृग्भ्यो धार्यैरामोदमुत्तमम्।
> लिम्पैरिव तनोर् वातैश् चेतयः स्याज् ज्वलो न कः ॥ ८१ ॥

अन्वयः—मादृग्भ्यः दुःखस्य ददैः, उत्तमम् आमोदम् धार्यैः, तनोः लिम्पैः इव वातैः, कः चेतयः ज्वलः न स्यात्? (सर्वोऽपि स्यादिति काकुः)।

हिन्दी—हमारे ऐसे वियोगियोंको दुःख देनेवाले उत्तम गन्ध, (सुगन्धि) धारण करनेवाले, मानों कि शरीरको तर कर देनेवाले वायुके झकोरोंसे कौन चेतन नहीं जलेगा? (सभी जलेंगे यह विपरीत व्यञ्जना से निकलता है)।

व्याख्या—मादृग्भ्यः मत्सदृशेभ्यः, दुःखस्य क्लेशस्य, ददैः दातृभिः, उत्तमम् उत्कृष्टम्, आमोदं समाकर्षि-गन्धम्, धार्यैः दधद्भिः, तनोर्देहस्य, लिम्पैः लिम्पद्भिः, इव यथा, वातैः मरुद्भिः, कः अन्यः, चेतयः प्राणी, ज्वलः दग्धः, न नहि, स्यात् भवेत्? किन्तु सर्वोऽपि स्यादेवेति काकुः। तुल्ययोगिताऽलङ्कारः।

कोशः—'आमोदः सोऽतिनिर्हारी वाच्यलिङ्गत्वमागुणात्'।

कृदन्तः—ददतीति विग्रहे 'ददातिदधात्योर्विभाषा ३।१।१३९' इति वैकल्पिके णे, शपः श्लौ, द्वित्वादिकार्ये ददैः। दधतीति विग्रहे शस्य पाक्षिकत्वात् 'श्याद्व्यधास्रुसंस्रतीणवसावहृ० ३।१।१४१' इति णे, 'आतो युक्० ७।३।३३' इति युगागमे धार्यैः। लिम्पन्तीति विग्रहे 'अनुपसर्गाल्लिम्प० ३।१।१३८' इति शे, 'शे मुचादीनाम् ७।१।५९' इति नुमि लिम्पैः। 'ज्वलतिकसन्तेभ्यो णः ३।१।१४०' इत्यस्याभावे पचाद्यचि ज्वलः।

तद्धितः—अहमिव इमे पश्यन्ति इति मादृशः, तेभ्य इति मादृग्भ्य इत्यत्र अस्मत्पूर्वकाद् दृश् धातोः 'त्यदादिषु दृशोऽनालोचने कञ्च ३।२।६०' इति चात् क्विनि, 'प्रत्ययोत्तरपदयोश्च ७।२।९८' इति मदादेशे, 'आ सर्वनाम्नः ६।३।९१' इति मदो दकारस्यात्वे, दीर्घे, मादृश् शब्दस्य चतुर्थीबहुवचने मादृग्भ्य इति रूपम्।

वाच्यपरिवर्तनम्—केन चेतयेन ज्वलेन न भूयते ॥ ८१ ॥

पुनः स्वकीयां मनोव्यथां व्यनक्ति—

अवश्याय-कणाऽऽस्रावाश् चारु-मुक्ता-फल-त्विषः ।
कुर्वन्ति चित्त-संस्रावं चलत्-पर्णाऽग्र-संभृताः ॥ ८२ ॥

अन्वयः—चलत्पर्णाग्रसंभृताः चारुमुक्ताफलत्विषः अवश्यायकणा[स्रावाः] चित्तसंस्रावं कुर्वन्ति ।

हिन्दी—हिलते हुए पत्तोंके छोर में अटके हुए सुन्दर मोतियोंके [समान] चमकनेवाले ओसके कण चित्तको पिघला देते हैं ।

व्याख्या—चलत्पर्णाग्रसम्भृताः कम्पमान पत्र-प्रान्तसंलग्नाः, चारुमु[क्ताफल]त्विषः मनोहर-मौक्तिककान्तयः, अवश्यायकणास्रावाः तुषारलेशनिष्यन्दाः, [चित्त]संस्रावं चलच्चेतः, कुर्वन्ति विदधति । आर्थी उपमा काव्यलिङ्गप्रधाना।

कोशः—'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्' ।

समासः—मुक्ताफलानि इवेति विग्रहे 'उपमितं व्याघ्रादिभिः० २।१[।५६]' इति समासे मुक्ताफलानि । चारूणि च तानि मुक्ताफलानि चारुमुक्ताफलानि, [तेषां] त्विष इव त्विषो येषां ते इति विग्रहे 'सप्तम्युपमान-पूर्वपदस्योत्तरपद[लोपश्च] वक्तव्यः २।२।२४' इति वार्तिकसाहाय्येन समासे मुक्ताफलत्विषः । अव[श्याय]कणा एव आस्रावाः 'मयूरव्यंसकादयश्च २।१।७२' इति विशेषणसमासः।

कृदन्तः—श्यैङ् गतौ इति भौवादिकाद् धातोः 'श्याद्व्यधास्रु० ३।१[।१४१]' इति णे आयादेशे अवश्यायः । स्रु गतौ इति धातोः तेनैव णे, वृद्धौ आ[वादेशे] संस्रवतीति संस्रावः । पूर्ववत् सिद्धिः । चित्तं च तत् संस्रावमिति परनिपातः।

वाच्यपरिवर्तनम्—चलत्पर्णाग्रसम्भृतैः चारुमुक्ताफलत्विड्भिः अव[श्याय]कणास्रावैः चित्तसंस्रावः क्रियते ॥ ८२ ॥

दुःखस्यात्ययमिच्छति रामः—

अवसायो भविष्यामि दुःखस्याऽस्य कदान्वहम् ।
न जीवस्याऽवहारो मां करोति सुखिनं यमः ॥ ८३ ॥

अन्वयः—अहं कदा नु अस्य दुःखस्य अवसायः भविष्यामि । [जीवस्य] अवहारः यमः मां सुखिनं न करोति ।

हिन्दी—मैं कब इस दुःखका अन्तकर्ता बनूँगा । जीवनके अन्तकर्ता [यम] भी मुझे सुखी नहीं बना देते ( अर्थात् मुझे मार डालें तो मैं सुखी हो [जाऊँ] ) ।



व्याख्या—अहं रामः, कदा कस्मिन् काले, नु इति वितर्के, अस्य वर्त[मानस्य] वियोग-दुःखस्य, अवसायः समापकः, भविष्यामि सम्पत्स्यामि । जीवस्य प्रा[णस्य]

अवहारः अन्तकर्ता, यमः अन्तकः, मां दुःखिनं रामं, सुखिनम् सुखान्वितं, न करोति। किं करोमीति विलपति ? आक्षेपध्वनिः।

कृदन्तः—अवस्यतीति अवहरतीति विग्रहे अवपूर्वकात् षोऽन्तकर्मणि इति दैवादिकात् सो धातोः, हृञ् हरणे इति भौवादिकात् हृधातोश्च 'श्याद्व्यधास्रु० ३।१।१४१' इति णे, 'आदेच उपदेशेऽशिति ६।१।४५' इति ओत आत्वे, 'आतो युक् चिण्कृतोः ७।३।३३' इति युकि अवसायः। ऋकारस्य वृद्धौ अवहारः।

वाच्यपरिवर्तनम्—मया अवसायेन भाविष्यते। जीवस्यावहारेण यमेन सुखी न क्रियै ॥ ८३ ॥

रामो विरहानलं शमयितुं विचारयति—

दह्येऽहं मधुनो लेहैर् दावैरुग्रैर् यथा गिरिः।
नायः कोऽत्र स, येन स्यां बताऽहं विगत-ज्वरः ॥ ८४ ॥

अन्वयः—अहम् उग्रैः दावैः गिरिः यथा मधुनः लेहैः दह्ये। येन अहं विगतज्वरः स्याम्। अत्र स नायः कः नु बत ?

हिन्दी—मैं उग्र दावानलोंसे, पर्वतके समान मधु चूसनेवाले भ्रमरोंसे, जल रहा हूँ। जिसके द्वारा मैं सन्तापशून्य हो जाऊँ, यहाँ वह कौन उपाय है ? हाय !

व्याख्या—अहं रामः, उग्रैः क्रूरैः, दावैः दावानलैः, गिरिः पर्वतः, यथा इव, मधुनः पुष्परसस्य, लेहैः लेढृभिः ( भ्रमरैरित्यर्थः ), दह्ये सन्तप्ये। येन कारणेन, अहं रामः, विगतज्वरः व्यपगतसन्तापः, स्याम् भवेयम्। अत्र अस्मिन् अवसरे, सः तादृक्, नायः उपायः, कः नु इति वितर्के, बत खेदे भवति। उपमाऽऽक्षेपसङ्करः।

कोशः—'ओषः प्लोषे नयो नाये ज्यानिर्जीर्णौ भ्रमो भ्रमौ'।

समासः—विगतः ज्वरः यस्य सः। 'निष्ठा २।२।३६' इति निष्ठान्तस्य पूर्वनिपातः।

कृदन्तः—लिहन्तीति विगृह्य 'श्याद्व्यधास्रु० ३।१।१४१' इति णे लेहैः। एवं दुन्वन्तीति दावाः, नयतीति नायः। उभयत्रापि 'दुन्योरनुपसर्गे ३।१।१४२' इति णो ज्ञेयः।

तिङन्तः—दह भस्मीकरणे इति कर्मणि लटि दह्ये।

वाच्यपरिवर्तनम्—माम् उग्रा दावा गिरिं यथा मधुनो लेहा दहन्ति। मया विगतज्वरेण भूयेत। अत्र तेन नायेन केन भूयते ॥ ८४ ॥

वियोगजन्यं दुःखं वर्णयति रामः—

समाविष्टं ग्रहेणेव ग्राहेणेवाऽऽत्तमर्णवे।
दृष्ट्वा गृहान् स्मरस्यैव ... मम मानसम् ॥ ८५ ॥

अन्वयः—स्मरस्य गृहान् इव वनान्तान् दृष्ट्वा मम मानसम् ग्रहेण समाविष्टम् इव अर्णवे ग्राहेण आत्तम् इव ( भवतीति शेषः )।

हिन्दी—कामदेवके भवनके समान वनके प्रदेशोंको देखकर मेरा मन आविष्टके समान तथा समुद्रमें नाकेसे पकड़ लिये गयेके समान हो जाता है।

व्याख्या—स्मरस्य कामदेवस्य, गृहान् गेहानि, इव यथा, वनान्तान् वन-प्रदेशान्, दृष्ट्वा विलोक्य, मम रामस्य, मानसम् स्वान्तम्, ग्रहेण क्रूरग्रहेण समाविष्टम् आक्रान्तम्, इव यथा, अर्णवे अब्धौ, ग्राहेण नक्रेण, आत्तम् गृहीतम्, इव यथा, भवतीति शेषः। उपमालङ्कारः।

कोशः—'दलेऽपि बर्हं निर्बन्धोपरागार्कादयो ग्रहाः।'
'गृहाः पुंसि च भूम्न्येव।'

कृदन्तः—गृह्णन्तीति विग्रहे 'गेहे कः ३।१।१४२' इति के, सम्प्रसारणे गृहाः। 'विभाषा ग्रहः ३।१।१४३' इति पाक्षिके णे, उपधावृद्धौ ग्राहः। पचाद्यचि ग्रहः।

वाच्यपरिवर्तनम्—मानसेन समाविष्टेन आत्तेन भूयते ॥ ८५ ॥

पुनरपि मनोव्यथामेव प्रकटयति—

वाताऽऽहति-चलच्-छाखा नर्तका इव शाखिनः।
दुःसहा हा परिक्षिप्ताः क्वणद्भिरलि-गाथकैः ॥ ८६ ॥

अन्वयः—वाताहतिचलच्छाखाः क्वणद्भिः अलिगाथकैः परिक्षिप्ताः शाखिनः नर्तका इव हा ( इति खेदे ) दुःसहाः सन्ति।

हिन्दी—वायुके लगनेसे जिनकी शाखायें हिल रही हैं, गानेवाले भौरोंसे जो घिरे हुए हैं, ऐसे पेड़ नाच करनेवालोंके समान दुःसह हैं, हाय।

व्याख्या—वाताहतिचलच्छाखाः मरुल्ललत्-कम्पमान-विटपाः, क्वणद्भिः गुञ्जद्भिः, अलिगाथकैः षट्पदगायकैः, परिक्षिप्ताः आवृताः, शाखिनः विटपिनः, नर्तका लसकाः, इव यथा, दुःसहाः कष्टसह्याः, सन्तीति हा कष्टम्। उपमालङ्कारः।

कोशः—'शाखा वेदप्रभेदेषु बाहपार्श्वद्रुमाङ्गयोः'।
'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः'।
'स्त्रीवेशधारी पुरुषः नाट्योक्तौ गणिकाऽज्जुका'।

समासः—वातस्य आहतिः, तया चलन्त्यः शाखा येषां ते। तत्पुरुषगर्भो बहुव्रीहिः। अलयः एव गाथकाः, मयूरव्यंसकादित्वात् समासः।

कृदन्तः—नृत्यन्तीति विग्रहे नृती गात्रविक्षेपे इति धातोः 'शिल्पिनि ष्वुन्' ३।१।१४५' इति ष्वुनि, गुणे, नर्तकाः। गायन्तीति विग्रहे गै धातोः

६।१।४५' इत्यात्वे 'गः स्थकन् ३।१।१४६' इति थकनि गाथकैः। गायनैः इति पठित्वा 'ल्युट् च ३।१।३७' इत्यस्योदाहरणं ज्ञेयमिति कविमर्मं।

वाच्यपरिवर्तनम्—वाताहतिचलच्छाखैः परिक्षिप्तैः शाखिभिः नर्तकैः इव दुःसहैः भूयते ॥ ८६ ॥

ऋष्यमूकयात्रावर्णनमाह—

एक-हायन-सारङ्ग-गती रघु-कुलोत्तमौ।
लवकौ शत्रु-शक्तीनामृष्यमूकमगच्छताम् ॥ ८७ ॥

अन्वयः—एकहायनसारङ्गगती शत्रुशक्तीनां लवकौ रघुकुलोत्तमौ ऋष्यमूकम् अगच्छताम्।

हिन्दी—एक वर्षके हरिणके बच्चेके समान गमन करनेवाले, शत्रुओंकी शक्तिका खूब विनाश करनेवाले, रघुवंशियोंमें श्रेष्ठ राम-लक्ष्मण, दोनों ऋष्यमूक पर्वतको चले गये।

व्याख्या—एकहायनसारङ्गगती एकवत्सर-कुरङ्गगमनौ, शत्रुशक्तीनां रिपुबलानां, लवकौ साधुध्वंसकौ, रघूकुलोत्तमौ काकुत्स्थवंशविशिष्टौ रामलक्ष्मणौ, ऋष्यमूकं तन्नामकं गिरिम्, अगच्छताम् अगाताम्। उपमा, ऋष्यमूकगतौ शत्रुशक्तिलवनं हेतुरिति काव्यलिङ्गं च, अतः सङ्करः।

कोशः—'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः'।
'सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे' ( इति विश्वः )।

समासः—एकहायनसारङ्गस्य गतिः इव गतिः ययोरिति विग्रहे 'सप्तम्युपमानपूर्वपदस्य वाच्यो वा चोत्तरपदलोपश्च २।२।२४' इति वार्तिकबलात् समासे, एकहायनसारङ्गगती। ऋषीणां समूहः ऋष्यम्। ऋष्यम् मूकम् यत्र। कस्यचन ऋषेः वरेण वालिनः शक्तिः पर्वते कुण्ठिता न भवति, किन्तु ऋषीणामेव शक्तिः कुण्ठिता भवति। फलतः ऋषयस्तत्र मूका भवन्ति। अत एव तस्य पर्वतस्य ऋष्यमूक इति नाम जातम्।

कृदन्तः—जहाति जिहीते वा भावान् इति विग्रहे ओहाक् त्यागे, ओहाङ् गतौ वा, हा धातोः 'हश्च व्रीहिकालयोः ३।१।१४८' इति ल्युटि युगागमे हायनः। साधु लुनीत इति विग्रहे 'प्रुसृल्वः समभिहारे वुन् ३।१।१४९' इति साधुकारिण्यर्थे वुनि लवकौ।

तिङन्तः—गम्लृ गतौ इति भौवादिकधातोर्लङि, शपि, 'इषुगमियमां छः ७।३।७७' इति मस्य छत्वे अडागमे अगच्छताम्।

वाच्यपरिवर्तनम्—एकहायनसारङ्गगतिभ्याम् लवकाभ्याम् रघुकुलो भ्याम् ऋष्यमूकोऽगम्यत ॥ ८७ ॥

तयोः दर्शने सुग्रीवस्य मनःस्थितिं वर्णयति—

तौ बालि-प्रणिधी मत्वा सुग्रीवोऽचिन्तयत् कपिः ।
बन्धुना विगृहीतोऽहं भूयासं जीवकः कथम् ॥ ८८ ॥

अन्वयः—सुग्रीवः कपिः तौ बालिप्रणिधी मत्वा 'बन्धुना विगृहीतः कथं जीवकः भूयासम्' इति अचिन्तयत् ।

हिन्दी—सुग्रीव कपि उन दोनोंको बालिके गुप्तचर मानकर सोचने लगा भाईसे त्रासित मैं कैसे जी सकूँगा ?

व्याख्या—सुग्रीवः तन्नामा सुकर्णः, कपिः वानरः, तौ रामलक्ष्मणौ, बा प्रणिधी कपिराजचरौ, मत्वा विचार्य, बन्धुना भ्रात्रा, विगृहीतः विरोधितः, सुग्रीवः, कथं केन प्रकारेण, जीवकः भव्यजीवनः, भूयासम् फलतो जीव्यासम्, एवम् अचिन्तयत् पर्यालोचयत् । बकारानुप्रासः । बालिप्रणिधित्वोत्प्रेक्षणादुत्प्रेक्षा

कोशः—'यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः' ।

कृदन्तः—प्रकर्षेण निधीयते ज्ञातव्यमत्रेति विग्रहे 'उपसर्गे घोः किः ३।३।९ इत्यनुवर्तमाने 'कर्मण्यधिकरणे च ३।३।९३' इति अधिकरणे धा धातोः किप्रत्य 'आतो लोप इटि च ६।४।६४' इत्यालोपे प्रणिधी इति द्विवचनान्तम् । जीव इति विग्रहे जीव प्राणने धातोः 'आशिषि च ३।१।१५०' इति वुनि जीवक इत्येवं निरुपपदकृदधिकारः समाप्तः । ( अग्रे सोपपदकृतः 'कर्मण्यण् ३।२ इत्यादिसूत्राणि क्रमेण योज्यानि पाणिन्यष्टकं गृहीत्वा ) ।

तिङन्तः—भू धातोः 'आशिषि लिङ्लोटौ ३।३।१७३' इत्याशिषि लि 'लिङाशिषि ३।४।११६' इत्यार्द्धधातुकतया शपोऽभावे 'किदाशिषि ३।४।१ इति कित्वाद् गुणाभावे भूयासम् ।

वाच्यपरिवर्तनम्—सुग्रीवेण कपिना 'विगृहीतेन मया कथं जीवकेन भवित इत्यचिन्त्यत । इति निरुपपदाधिकारः ॥ ८८ ॥

सम्प्रति सोपपदकृतमधिकृत्य कविर्वक्ति द्वानवतितमपद्यान्तम्—

स शत्रु-लावौ मन्वानो राघवौ मलयं गिरिम् ।
जगाम स-परीवारो व्योम-मायमिवोत्थितम् ॥ ८९ ॥

अन्वयः—राघवौ शत्रुलावौ मन्वानः सपरिवारः स (सुग्रीवः) व्योममा इव उत्थितम् मलयं गिरिम् जगाम ।

हिन्दी—रामलक्ष्मणको शत्रुओंके विध्वंसकर्ता मानता हुआ सपरिवार वह ( सुग्रीव ) आकाश मापनेके लिये मानों उठे हुए मलय पर्वतपर चला गया।

व्याख्या—राघवौ रामलक्ष्मणौ, शत्रुलावौ वैरिविनाशिनौ, मन्वानः निश्चिन्वानः, सपरिवारः स्वेष्टजनसहितः, स सुग्रीवः, व्योममायम् अम्बरपरिमातुम्, इव यथा, उत्थितं उन्नतं, मलयं मलयनामानं, गिरिम् अचलम्, जगाम ययौ। उत्प्रेक्षा, सहोक्तिः, उपमाऽपि। एतावता सङ्करः।

कोशः—३८ पद्ये दृश्यः।

समासः—परिवारेण सहेति विग्रहे 'तेन सहेति तुल्ययोगे २।२।२८' इति समासे 'वोपसर्जनस्य ६।३।८२' इति सहस्य सादेशे सपरिवारः।

कृदन्तः—शत्रून् लुनीत इति विग्रहे 'तत्रोपपदम् सप्तमीस्थम् ३।१।९२' इति शत्रुशब्दस्य द्वितीयान्तस्योपपदसंज्ञायाम्, 'कर्मण्यण् ३।२।१' इति अण् प्रत्यये, 'उपपदमतिङ् २ २।१९' इति समासे, वृद्धौ आवादेशे च शत्रुलावौ। व्योम मिमीते इति विग्रहे 'ह्वावामश्च ३।२।२' इत्यणि, 'आतो युक्० ७।३।३३' इति युगागमे व्योममायम्। 'उपसर्गस्य० ६।३।१२२' वा दीर्घः परीवारे।

तिङन्तः—गम्लृ गतौ इति धातोर्लिटि द्वित्वादिकार्ये 'अत उपधायाः ७।२।११६' इति उपधावृद्धौ जगाम।

वाच्यपरिवर्तनम्—मन्वानेन सपरिवारेण तेन व्योममाय इव उत्थितः मलयः गिरिः जग्मे ॥ ८९ ॥

शोकापनुदं दूतकर्मप्रस्तावमाह—

शर्म-दं मारुतिं दूतं विषमस्थः कपि-द्विपम्।
शोकाऽपनुदम-व्यग्रं प्रायुङ्क्त कपि-कुञ्जरः ॥ ९० ॥

अन्वयः—विषमस्थः कपिकुञ्जरः शर्मदं कपिद्विपम् शोकापनुदम् अव्यग्रम् मारुतिं दूतं प्रायुङ्क्त।

हिन्दी—संकटमें पड़े कपिश्रेष्ठ सुग्रीवने, कल्याण देनेवाले कपियोंमें श्रेष्ठ, शोक दूर करने वाले एवं कभी न घबरानेवाले हनुमान्‌को दूत बनाकर भेजा।

व्याख्या—विषमस्थः विपन्नः, कपिकुञ्जरः शाखामृगाभ्यर्हितः ( सुग्रीवः ), शर्मदम् कल्याणप्रदम्, कपिद्विपम् वानरर्षभम्, शोकापनुदम् सन्तापहारकम्, अव्यग्रम् गम्भीरम्, मारुतिं पवनसुतम् ( हनुमन्तम् ), दूतम् सन्देशहारकम्, प्रायुङ्क्त प्रैषित। दूतप्रयोगे शर्मदादिविशेषणमुचितमिति परिकरः।

समासः—कपिः कुञ्जर इवेति कपिकुञ्जरः। कपिः द्विप इवेति कपि-

द्विपम्। यत्र 'वृन्दारकनागकुञ्जरैः पूज्यमानम् २।१।६२' इति, उत्तरत्र 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे २।१।५६' इति समासः।

कृदन्तः—शर्म ददातीति विग्रहे 'आतोऽनुपसर्गे कः ३।२।३' इति के 'आतो लोप इटि च ४।४।६४' इत्यालोपे शर्मदम्। विषमस्थः—विषमे तिष्ठतीति विग्रहे 'सुपि स्थः ३।२।४' इति कः। शोकमपनुदतीति विग्रहे 'तुन्दशोकयोः परिमृजापनुदोः ३।२।५' इति कः।

तिङन्तः—'प्रोपाभ्यां युजेरयज्ञपात्रेषु १।३।६४' इत्यात्मनेपदे, लङि, 'श्नसोरल्लोपः ६।४।१११' इत्यलोपे प्रायुङ्क्त।

वाच्यपरिवर्तनम्—विषमस्थेन कपिकुञ्जरेण शर्मदः कपिद्विपः शोकापनुदः अव्यग्रः मारुतिः दूतः प्रायुज्यत ॥ ९० ॥

तथा च हनूमतः प्रस्थानमाह—

> विश्वास-प्रद-वेषो ऽसौ पथि-प्रज्ञः समाहितः।
> चित्त-संख्यो जिगीषूणामुत्पपात नभस्-तलम् ॥ ९१ ॥

अन्वयः—विश्वासप्रदवेषः पथिप्रज्ञः समाहितः जिगीषूणां चित्तसंख्यः असौ (हनूमान्) नभस्तलम् उत्पपात।

हिन्दी—विश्वासकारी वेषधारी, मार्गके जानकार, सतत सावधान, जयाभिलाषियोंके चित्तके ज्ञाता वह (हनुमान्), आकाशको उड़ चले।

व्याख्या—विश्वासप्रदवेशः विस्रम्भजनक-परिच्छदः (संन्यासी), पथिप्रज्ञः मार्गनिपुणः, समाहितः सावधानः, जिगीषूणां जयैषिणाम्, चित्तसंख्यः मनोज्ञः, असौ प्रसिद्धः मारुतिः, नभस्तलम् व्योमप्रदेशम्, उत्पपात उड्डिड्ये। परिकरालङ्कारः।

कोशः—'समौ विश्वास-विस्रम्भौ भ्रेषो भ्रंशो यथोचितम्।'

कृदन्तः—विश्वासं प्रददातीति विग्रहे 'प्रे दाज्ञः ३।२।६' इति कः। एवं पन्थानं प्रजानातीति विग्रहे पथिप्रज्ञः। 'समि ख्यः ३।२।७' इति के चित्तसंख्यः।

वाच्यपरिवर्तनम्—विश्वासप्रदवेषेण पथिप्रज्ञेन समाहितेन चित्तसंख्येन अमुना नभस्तलम् उत्पेते ॥ ९१ ॥

मारुतेः ऋष्यमूकपर्वतप्रापणमाह—

> सुरःयैरिव घूर्णद्भिः शाखिभिः पवनाऽऽहतैः।
> ऋष्यमूकमगाद् भृङ्गैः प्रगीतं सामगैरिव ॥ ९२ ॥

अन्वयः—पवनाहतैः (अत एव) सुरापैः इव घूर्णद्भिः शाखिभिः, सामगैः इव भृङ्गैः प्रगीतम् ऋष्यमूकम् अगात् (असौ इति शेषः)।

हिन्दी—वायुसे कम्पित, मानों कि मद्यपियोंके समान झूमते हुए पेड़ोंसे, एवम् सामगान करनेवालोंके समान भौंरोंसे उपगीत, ऋष्यमूक पर्वतपर वह ( हनुमान् ) गये ।

व्याख्या—पवनाहतैः वायुविकम्पितैः, ( अतएव ) सुरापैः मद्यपैः, इव यथा, घूर्णद्भिः भ्रमद्भिः, शाखिभिः तरुभिः, सामगैः सामश्रुतिपाठकर्तृभिः, इव यथा, भृङ्गैः भ्रमरैः, प्रगीतम् उपस्तुतम्, ऋष्यमूकं तन्नामकं पर्वतम्, अगात् अगमत्, असाविति शेषः । उपमालङ्कारः ।

कोशः—'नभस्वद्वातपवन-पवमानप्रभञ्जनाः' ।

समासः—पवनेनाहताः पवनाहताः, तैः । ऋष्यं मूकं यस्मिन् सः, तम् ।

कृदन्तः—सुरां पिबन्तीति विग्रहे पा पाने धातोः, साम गायन्तीति विग्रहे कै गै रै शब्दे इति कृतात्वाद् गै धातोः 'गापोष्टक् ३।२।८' इति टकि सुरापैः, सामगैः इत्युभयम् । प्रगीयतेऽस्मिन्निति अधिकरणे क्ते, 'घुमास्थागापाजहातिसां हलि ६।४।६६' इति ईत्वे प्रगीतम् ।

तिङन्तः—इण् गतौ आदादिकात् लुङि 'इणो गा लुङि २।४।४५' इति गादेशे, 'गातिस्था० २।४।७७' इति सिचो लुकि अडागमेऽगात् ।

वाच्यपरिवर्तनम्—प्रगीतः ऋष्यमूकः अगायि ( अमुना ) ॥ ९२ ॥

तत्रागत्य हनूमान् वक्तुमारभते—

तं मनोहरमागत्य गिरिं वर्म-हरौ कपिः ।
वीरौ सुखाऽऽहरोऽवोचद् भिक्षुर् भिक्षार्ह-विग्रहः ॥ ९६ ॥

अन्वयः—भिक्षार्हविग्रहः भिक्षुः सुखाहरः कपिः ( हनुमान् ) मनोहरं तं गिरिम् आगत्य वर्महरौ वीरौ अवोचत् ।

हिन्दी—भिक्षा पानेके योग्य शरीरधारी संन्यासी, सबको सुख देनेवाले कपि हनुमान्जी, उस मनोहर ऋष्यमूक पर्वत पर आकर, तरुणावस्था-सूचक कवचधारी वीर राम लक्ष्मणसे बोले ।

व्याख्या—भिक्षार्हविग्रहः भिक्षायोग्य-वपुष्मान् ( संन्यासित्वात् ), भिक्षुः संन्यासी, सुखाहरः आनन्दप्रदः, कपिः वानरः हनुमान्, वर्महरौ कवचधारणक्षम वयस्कौ, वीरौ रामलक्ष्मणौ, अवोचत् अगादीत् । कपेरागमने वचने चान्वयात् क्रियादीपकालङ्कारः ।

कोशः—'शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम्' ।



'भिक्षुः परिव्राट् कर्मन्दी' । ( ५-१०२ पद्यकोशे ) ।

कृदन्तः—मनो हरतीति विग्रहे हृ-धातोः 'हरतेरनुद्यमनेऽच् ३।२।९' इ
गुणे, मनोहरः। वर्मं हरतः इति विग्रहेऽपि 'वयसि च ३।२।१०' इत्यचि
हरौ। सुखमाहरति तच्छीलः इति विग्रहे 'आङि ताच्छील्ये ३।२।११' इ
सुखाहरः। भिक्षामर्हति इत्यर्थे 'अर्हः ३।२।१२' इत्यचि भिक्षार्हः। भिक्षते इ
'सनाशंसभिक्ष उः ३।२।१६८' इति उप्रत्यये भिक्षुः।

तिङन्तः—ब्रूञ् व्यक्तायां वाचि इति धातोर्लुङि 'ब्रुवो वचिः २।४।५३'
वच्यादेशे 'अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२' इति सिचोऽङि 'वच उम्
२०' इत्युमागमेऽडागमेऽवोचत्।

वाच्यपरिवर्तनम्—भिक्षार्हविग्रहेण भिक्षुणा सुखाहरेण कपिना वर्महरौ
अवक्षाताम्॥ ९३॥

हनुमत उक्तिः षण्णवतितमपद्यान्तं याति। स पृच्छति तथाहि—

वलिनावमुमद्रीन्द्रं युवा स्तम्बे-रमाविव।
आचक्षाथा मिथः कस्माच्छङ्करेणाऽपि दुर्गमम्॥ ९४॥

अन्वयः—स्तम्बेरमौ इव बलिनौ युवाम् आचक्षाथाम्, शङ्करेण
दुर्गमम् अमुम् अद्रीन्दम् कस्माद् इथः।

हिन्दी—हाथीके समान बली आप दोनों बतावें ( कहें ) कि शङ्कर
लिए भी दुर्गम इस पर्वतराजपर क्यों आये हैं?

व्याख्या—स्तम्बेरमौ हस्तिनौ, इव यथा, युवाम् रामलक्ष्मणौ, बलिनौ
शालिनौ, युवाम् रामलक्ष्मणौ द्वौ वीरौ, आचक्षाथाम् ब्रूतम्। शङ्करेण ई
अपि सम्भवतः, दुर्गमम् दुष्प्राप्यम्, अमुम् एतम्, अद्रीन्द्रम् पर्वतराजम्, क
कारणात्, इथः आगच्छथः। अत्राप्युपमा।

कोशः—'इभः स्तम्बेरमः पद्मी यूथनाथस्तु यूथपः।
दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः'॥

कृदन्तः—स्तम्बे रमेते इत्यर्थे 'स्तम्ब-कर्णयो रमिजपोः ३।२।१३' इ
'तत्पुरुषे कृति बहुलम् ६।३।१४' इति सप्तम्या अलुकि च स्तम्बेरमौ।
करोति इत्यर्थे 'शमि धातोः संज्ञायाम् ३।२।१४' इत्यचि शङ्करः।

वाच्यपरिवर्तनम्—स्तम्बेरमाभ्याम् इव बलिभ्यां युवाभ्याम् आख्याय
दुर्गमः अद्रीन्द्रः कस्मात् ईयते।



दीक्षा—वाङ्माधुर्येण जनता वशमेतीति नयोऽचलः इति॥ ९४॥

पुनरपि आगमनकारणं युग्मेन पृच्छति—

व्याप्तं गुहा-शयैः क्रूरैः क्रव्याद्भिः स-निशाचरैः ।
तुङ्ग-शैल-तरु-च्छन्नं मानुषाणाम-गोचरम् ॥ ९५ ॥

अन्वयः—सनिशाचरैः गुहाशयैः क्रूरैः क्रव्याद्भिः व्याप्तम् तुङ्गशृङ्गतरुच्छन्नम् मानुषाणाम् अगोचरम् अमुम् अद्रीन्द्रम् कस्मात् इथः—इति पूर्वेणान्वयः ।

हिन्दी—राक्षसोंके साथ गुफाओंमें रहनेवाले क्रूर एवं मांसभक्षियोंसे भरे हुए ऊँचे शिखरवाले तथा पेड़ोंसे व्याप्त इसी कारण मनुष्योंके अगोचर, इस पर्वतराजपर आप लोग किस कारणसे आये हैं ?

व्याख्या—सनिशाचरैः राक्षससहितैः, गुहाशयैः गह्वरशायिभिः, क्रूरैः दुष्टैः, क्रव्याद्भिः मांसभक्षिभिः, व्याप्तम् भृतम्, तुङ्गशृङ्गतरुच्छन्नम् उच्चशिखरवृक्षाच्छन्नम्, ( अत एव ) मानुषाणाम् मनुष्याणाम्, अगोचरम् अगम्यम्, अमुम् पुरतो दृश्यमानम्, अद्रीन्द्रं पर्वतश्रेष्ठं, कस्मात् केन हेतुना, इथ आगच्छथः—इति पूर्वान्वयि युग्मकं पद्यम् । सहोक्तिगर्भं काव्यलिङ्गम् मानुषागोचरत्वे हेतूक्त्या ।

कोशः—'दरी तु कन्दरो वा स्त्री देवखातबिले गुहा ।
गह्वरं गण्डशैलास्तु च्युताः स्थूलोपला गिरेः' ॥

समासः—निशाचरैः सहिताः सनिशाचराः, तैः । तुङ्गानि शृङ्गाणि यस्य सः, तुङ्गशृङ्गश्चासौ तरुच्छन्नः तुङ्गशृङ्गतरुछन्नः ।

कृदन्तः—गुहासु शेरते इति विग्रहे 'अधिकरणे शेते ३।२।१५' इत्यचि गुहाशयाः । निशायां चरन्तीति विग्रहे 'चरेष्टः ३।२।१६' इति ट—प्रत्यये निशाचरास्तैः सहिताः, तैः ।

वाच्य०—व्याप्तः तुङ्गशैलतरुच्छन्नः अगोचरः कस्माद् ईयते इत्येवम् ॥९५॥

सोपपदकृत्सु टाधिकारस्य पञ्चमसर्गे सप्तनवतितमाच्छततमपद्यावधि वृत्तत्वादत्र टाधिकारं, प्रकीर्णकाण्डे गतं ( २४-२६ ) सूत्रत्रयं च परिहृत्य, 'एजेः खश् ३।२।२८' इति खशधिकारतः पुनः प्रारभते—

सत्त्वमेजय-सिंहाऽऽढ्यान् स्तनं-धय-सम-त्विषौ ।
कथं नाडिन्धमान् मार्गानागतौ विषमोपलान् ॥ ९६ ॥

अन्वयः—स्तनन्धयसमत्विषौ ( युवाम् ) सत्त्वमेजयसिंहाढ्यान् विषमोपलान् नाडिन्धमान् मार्गान् कथम् आगतौ ?



हिन्दी—बच्चोंके समान कान्तिवाले आप दोनों, प्राणियोंको कँपा देनेवाले

सिंहोंसे भरे हुए तथा ऊँच-नीच पत्थरोंसे परिपूर्ण एवं नसोंको ढीले कर देनेवाले मार्गों पर कैसे चल सके हैं ?

व्याख्या—स्तनन्धयसमत्विषौ शिशुसदृशकान्ती, सत्त्वमेजयसिंहाढ्यान् प्राणिकम्पककेसरिसम्भृतान्, विषमोपलान् उच्चावचप्रस्तरान्, नाडिन्धमान् शिरोपतापकान्, मार्गान् पथः, कथम् केन विधिना, आगतौ आयातौ ? उपमार्थः काव्यलिङ्गम् ।

कोशः—'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः' ।

समासः—सत्त्वमेजयाश्च ते सिंहाः, तैः आढ्यास्तान् । स्तनन्धयैः समा त्विड् ययोस्तौ । विषमा उपला येषु ते, तान् ।

कृदन्तः—सत्त्वान् एजयन्तीति विग्रहे 'एजेः खश् ३।२।२८' इति खशि, 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुमागमे सत्त्वमेजयाः । स्तनं धयतीति विग्रहे धेट् धातोः 'नासिकास्तनयोर्ध्माधेटोः ३।२।२९' इति खशि स्तनन्धयः । नाडीं धमन्तीति विग्रहे 'नाडीमुष्ट्योश्च ३।२।३०' इति ध्माधातोः खशि 'पाघ्राध्मा० ७।२।७८' इति धमादेशे 'खित्यनव्ययस्य ६।१।६६' इति ह्रस्वत्वे, 'अरुर्द्विष० ६।३।६०' इति मुमि नाडिन्धमाः, तान् ।

वाच्यपरिवर्तनम्—स्तनन्धयसमत्विड्भ्याम् सत्त्वमेजयसिंहाढ्याः विषमोपलाः नाडिन्धमाः मार्गाः कथम् आगताः ? ॥ ९६ ॥

पुनरपि पृच्छति हनूमान्—

उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः ।
आसादितौ कथं ब्रूतं न गजैः कूलमुद्रुजैः ॥ ९७ ॥

अन्वयः—ब्रूतम्, कूलमुद्वहाः भीमाः सरितः कथम् वा उत्तीर्णौ ? कूलमुद्रुजैः गजैः कथं न आसादितौ ?

हिन्दी—कहिये, आपलोगोंने किनारोंको छोड़कर बहनेवाली भयानक नदियों को कैसे पार किया ? तथा किनारोंको खोद डालनेवाले हाथियोंसे कैसे बचे ?

व्याख्या—ब्रूतम् कथयतम्, कूलमुद्वहाः तटोल्लङ्घनवाहिन्यः, भीमाः भयावहाः, सरितः नदीः, कथम् केन विधिना, उत्तीर्णौ उल्लङ्घितवन्तौ (युवाम्) कूलमुद्रुजैः सैकतभञ्जकैः, गजैः करिभिः, कथं केन विधिना, न आसादितौ न प्राप्तौ । उत्तरणासादनक्रिययोरेककारकतया दीपकः ।'

कोशः—'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' ।



कृदन्तः—कूले उल्लङ्घ्य वहन्तीति विग्रहे 'उदि कूले रुजिवहोः ३।२।३१' इ

खशि कूलमुद्वहा । एवम् कूलमुद्रुजाः, तैः । उत्पूर्वकात् तॄ प्लवनतरणयोः, आङ्-पूर्वकात् सादीति ण्यन्तधातोः क्तप्रत्यये 'श्र्युकः किति ७।२।४७' इति इण्निषेधे 'ॠत इद्धातोः ७।१।१००' इति रपरे, 'हलि च ८।२.७७' इति दीर्घे, णत्वे, उत्तीर्णौ। 'णेरनिटि ६।४.५१' इत्यनुवर्तमाने निष्ठायां सेटि इति णिलोपे, आसादितौ।

वाच्यपरिवर्तनम्—उच्यताम् ( युवाभ्याम् ) कथम् कूलमुद्वहा भीमाः सरितः उत्तीर्णाः ? कथं वा कूलमुद्रुजाः गजाः न युवाम् आसीसदन् ? ॥ ९७ ॥

अथ रामो हनुमन्तमुत्तरयति त्रिभिः पद्यैः—

रामोऽवोचद्धनूमन्तम् आवामभ्रं-लिहं गिरिम् ।
ऐव विद्वन् ! पितुः कामात् पान्तावल्पं-पचान् मुनीन् ॥ ९८ ॥

अन्वयः—अथ रामः हनूमन्तम् अवोचत्—हे विद्वन् ! पितुः कामात् अल्पं-पचान् मुनीन् पान्तौ आवाम् अभ्रंलिहं गिरिम् ऐव ।

हिन्दी—राम हनुमान्से बोले—हे विद्वन्, पिताजीकी इच्छासे परिमित पकानेवाले मुनियोंकी रक्षा करते हुए हम दोनों, मेघका स्पर्श करनेवाले, इस पर्वत पर आये हैं ।

व्याख्या—रामः राघवः, हनूमन्तम् मारुतिम्, अवोचत् अगादीत्—हे विद्वन् हे धीमन्, पितुः जनकस्य, कामात् इच्छातः, अल्पम्पचान् परिमितपचान्, मुनीन् संयमिनः, पान्तौ रक्षन्तौ, आवाम् राम-लक्ष्मणौ, अभ्रंलिहं मेघस्पर्शिनम्, गिरिम् अचलम्, ऐव आगच्छाव । पालनागमनक्रिययोरेककारकसम्बन्धाद्दीपकालङ्कारः ।

कोशः—'इच्छामनोमयौ कामौ' । 'शौर्योद्योगौ पराक्रमौ' ।

तद्धितः—कुत्सितो हनुर्यस्येति विग्रहे "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुवादयः ॥" इत्यभियुक्तोक्तेः निन्दार्थे 'तदस्या स्त्यस्मिन्० ५।२।९४' इति मतुपि 'शरादीनां च ६।३।१२० इति दीर्घे हनूमान् । मतान्तरे शरादिपाठाभावात् हनुमानिति ।

कृदन्तः—अभ्रं लेढि इति विग्रहे 'वहाभ्रेलिहः ३।२।३२' इति खशि अभ्रंलिहः, तम् । अल्पं पचन्तीति विग्रहे 'परिमाणे पचः ३।२।३३' इति खशि अल्पम्पचाः, तान् ।

वाच्य०—रामेण हनुमान् अवाचि । आवाभ्याम् अभ्रंलिहः गिरिः ऐयत ।

रामः आत्मनो वंशविषये कथयति—



अविनीतस्य ... सर्वशो ... ।
आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥ ९९ ॥

अन्वयः—अमितम्पचम् ईशानम् सर्वभोगीणम् उत्तमम् भुवि ख्या[तम्]
दशरथम् आवयोः पितरं विद्धि ।

हिन्दी—प्रचुर मात्रामें जिनके यहाँ अन्न पकता है ( स्नातकोंको भो[जन]
करानेके हेतु ), जो ऐश्वर्यशाली सब सुखोंके उपभोक्ता, पृथ्वी पर उत्तम पु[रुष]
प्रख्यात हैं, वही दशरथजी मेरे पिता हैं, यह आप जानें ।

व्याख्या—अमितम्पचम् प्रचुरान्नपाचकं ( दीनानाथ-स्नातक-संन्यासिनां
भोजनार्थमित्यर्थः ), ईशानम् ऐश्वर्यशालिनम्, सर्वभोगीणम् सकलसुखभोक्ता[रम्],
उत्तमम् महापुरुषम्, भुवि धरायाम्, ख्यातम् प्रसिद्धम्, दशरथम् एत[न्नाम्ना]
प्रथितम्, आवयोः रामलक्ष्मणयोः, पितरं जनकं, विद्धि जानीहि । ब[हु]
विशेषणतया परिकरः ।

कृदन्तः—अमितं पचतीति विग्रहे 'मितनखे च ३।२।३४' इति खशि, [मु]
कृत्ये अमितम्पचः, तम् । ईश ऐश्वर्ये इति धातोः 'ताच्छील्य० ३।२।१२९'
चानशि ईशानः, तम् ।

तद्धितः—सर्वभोगाय हित इत्यर्थे सुबन्तात् 'आत्मन्विश्वजनभोगोत्तर[पदात्]
खः ५।१।९' इति खे, तस्येनि सर्वभोगीणः, तम् ।

तिङन्तः—विद ज्ञाने इति आदादिकात् धातोर्लोटि, हौ, 'हुझल्भ्यो [हेर्धिः]
६।४।१०१' इति हेर्धौ विद्धि ।

वाच्यपरिवर्तनम्—( त्वया ) अमितम्पचः ईशानः सर्वभोगीणः [उत्तमः]
ख्यातः दशरथः पिता विद्यताम् ॥ ९९ ॥

आगमनकारणमाह रामः—

छलेन दयिता ऽरण्याद् रक्षसा ऽरुं-तुदेन नः ।
असूर्यम्पश्यया मूर्त्या हृता तां मृगयावहे ॥ १०० ॥

अन्वयः—अरुन्तुदेन रक्षसा असूर्यम्पश्यया मूर्त्या उपलक्षिता नः द[यिता]
छलेन अरण्यात् हृता तां मृगयावहे ( आवाम् इति शेषः ) ।

हिन्दी—मर्मभेदी राक्षसने सूर्यको न देख सकनेवाली कान्तिसे युक्त [और]
बड़ी कोमल मेरी प्रियाको छलसे हर लिया है; उसीको हमलोग खोज र[हे हैं]

व्याख्या—अरुन्तुदेन मर्मभेदिना, रक्षसा कुणपेन (रावणेन), असूर्यम्[पश्यया]
अतिसुकुमार्या, मूर्त्या तनुलक्षणया, उपलक्षिता विदिता, नः अस्माकम्, [दयिता]
वल्लभा (सीता), छलेन [कपटेन], अरण्यात् वनात्, हृता अपहृता । तां पु[नः]
मृगयावहे अन्वेषयावहे, आवामिति शेषः । अन्वेषणस्य हेतोरुक्ततया काव्यलि[ङ्गम्]

काशः—'अरुन्तुदन्तु मर्मस्पृक्' ।

'प्रसभन्तु बलात्कारो हठोऽथ स्खलितं छलम्' ।

कृदन्तः—अरूंषि तुदतीति विग्रहे 'विध्वरुषोस्तुदः ३।२।३५' इति खशि अरुन्तुदः, तेन। सूर्यमपि न पश्यतीति विग्रहे 'असूर्यललाटयोर्दृशितपोः ३।२।३६' इति खशि, असूर्यम्पश्येति असमर्थसमासः, सूत्रनिर्देशात्। ततः 'उपपदमतिङ् २।२।१९' समासे, सुपो लुकि, 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुमि, 'पाघ्राध्मा० ७।३।७८' इति पश्यादेशे असूर्यम्पश्या, तया ।

तिङन्तः—मृग अन्वेषणे इति स्वार्थिकण्यन्तादग्लोपिनो धातोर्लटि मृगयावहे।

वाच्यपरिवर्तनम्—अरुन्तुदम् रक्षः नः दयिताम् अहार्षीत्। सा मृग्यते आवाभ्याम् ॥ १०० ॥

सम्प्रति हनूमान् रामं क्रमेणोत्तरयति स्वकार्य्योपष्टम्भम् चतुर्भिः पद्यैः—

प्रत्यूचे मारुती रामम्-अस्ति बालीति वानरः ।

शमयेदपि संग्रामे यो ललाटं-तपं रविम् ॥ १०१ ॥

अन्वयः—मारुतिः रामं प्रत्यूचे (हे राम!) बाली इति वानरः अस्ति, यः संग्रामे ललाटन्तपं रविम् अपि शमयेत् ।

हिन्दी—हनुमान्‌जी रामचन्द्रजीसे बोले—(हे रामजी!) बाली नामका वानर है, जो संग्राममें बारह बजेके सूर्य्यको भी परास्त कर सकता है ।

व्याख्या—मारुतिः हनुमान्, रामं राघवं, प्रत्यूचे प्रतिबभाषे, (हे राम!) बाली इति इत्यनेन नाम्ना प्रसिद्धः, वानरः कीशः, अस्ति वर्तते, यः असौ, संग्रामे रणे, ललाटन्तपं प्रचण्डं, रविम् मार्तण्डम्, अपि सम्भावनायाम्, शमयेत् अवसादयेत् । प्रतीपालङ्कारः ।

कृदन्तः—ललाटं तपतीति विग्रहे ललाटन्तपः, तम् । पूर्वसूत्रोदाहरणम् ।

तिङन्तः—शम लक्ष आलोचने इति चौरादिकाद् धातोः 'शकि लिङ् च ३।३।१७२' इति लिङि, मित्त्वाद् ह्रस्वे शमयेत् । धातोरनेकार्थतयाऽवसादनमर्थः।

वाच्यपरिवर्तनम्—मारुतिना रामः प्रत्यूचे । बालिना वानरेण भूयते येन ललाटन्तपः रविः शम्येत ॥ १०१ ॥

स्वविषये हनूमान् अभिधत्ते—

उग्रस्तेन सुग्रीवस्तेन भ्राता निराकृतः ।

तस्य मित्रीयतो दूतः संप्राप्तोऽस्मि वशंवदः ॥ १०२ ॥

अन्वयः—उग्रम्पश्येन तेन भ्रात्रा निराकृतः सुग्रीवः ( अस्तीति शेषः ) मित्रीयतः तस्य वशंवदः दूतः सम्प्राप्तः अस्मि ।

हिन्दी—क्रूरदृष्टि रखनेवाले उस ज्येष्ठ भाईसे निकाल दिया गया सु नाम का छोटा भाई है। आपसे मैत्री चाहने वाले उन्हींका मैं आपका वशंवद आया हूँ ।

व्याख्या—उग्रम्पश्येन क्रूरदृष्टिना, तेन वालिना, भ्रात्रा ज्येष्ठ सहो निराकृतः निःसारितः, सुग्रीवः तन्नामा कनिष्ठः भ्राता, अस्ति इति शे मित्रीयतः भवता सह सख्यमिच्छतः, तस्य सुग्रीवस्य, वशंवदः भवद्वशवर्ती, मारुतिः, दूतः सन्देशहरः, सम्प्राप्तः समागतः, अस्मि भवामि । काव्यलि लङ्कारः ।

कोशः—'स्यात्सन्देशहरो दूतो दूत्यं तद्भावकर्मणी' ।

कृदन्तः—उग्रं पश्यतीति विग्रहे, 'उग्रम्पश्येरम्मदपाणिन्धमाश्च ३।२ इति निपातनाद् उग्रम्पश्यः, तेन । वशं वदतीति विग्रहे 'प्रियवशे वदः ३।२।३८' इति खचि वशंवदः । मित्रम् आत्मन इच्छति इति विग्रहे 'सुप आ क्यच् ३।१।८' इति सुवन्तात् क्यचि, 'क्यचि च ७।४।३३' इतीत्वे मित्रीय र्तरि मित्रीयन् तस्य मित्रीयतः ।

वाच्यपरिवर्तनम्—उग्रम्पश्यः सः भ्राता सुग्रीवम् निराकार्षीत् । व दूतेन सम्प्राप्तेन भूयते ॥ १०२ ॥

रामस्य कार्यसिद्धये हनूमान् युक्तिमाह—

> प्रियं-वदो ऽपि नैवाऽहं ब्रुवे मिथ्या परं-तप ।
> सख्या तेन दश-ग्रीवं निहन्तासि द्विषन्तपम् ॥ १०३ ॥

अन्वयः—हे परन्तप ! प्रियंवदः अपि अहं ( हनुमान् ) मिथ्या नैव तेन सख्या सता द्विषन्तपं दशग्रीवं निहन्तासि ।

हिन्दी—शत्रुनिपूदन ! प्रिय बोलनेवाला भी मैं ( हनूमान् ) झूठ बोलता । वह यदि आपके मित्र हो जाँय तो आप शत्रुघाती रावण को मार डा

व्याख्या—हे परन्तप हे शत्रुनिपूदन ! प्रियंवदः प्रियभाषी, अपि वनायाम्, अहं हनुमान्, मिथ्या मृषा, न नहि, ब्रुवे व्याहरामि । तेन सु सख्या मित्रेण, सता जातेन, द्विषन्तपम् शत्रुघातिनम्, दशग्रीवं रावणं, निह मारयितासि । भाविकालङ्कारः ।



कृदन्तः—द्विषन्तं परं वा तापयतीति विग्रहे 'द्विषत्परयोस्तापेः ३।२

इति खचि, णिलोपे, 'खच्चि ह्रस्वः ६।४।९४' इत्युपधाह्रस्वे मुमागमे च संयोगान्तलोपे द्विषन्तपः । संयोगान्तलोपातिरिक्तं सर्वमन्यत् कृत्वा परन्तपः साध्यः ।

तिङन्तः—निहन्तासि इति लुडन्तयोगे 'जासिनिप्रहण० १।३।५६' इति शेषत्वविवक्षाभावान्न षष्ठी, किन्तु कर्मणि द्वितीया दशग्रीवम् ।

वाच्यपरिवर्तनम्—मया प्रियंवदेन अपि मिथ्या नैव उच्यते । त्वया द्विषन्तपो दशग्रीवो निहन्ता ( निघातिता ) ॥ १०३ ॥

मैत्र्यर्थं हनूमान् प्रस्तावं करोति—

> वाचंयमोऽहमनृते सत्यमेतद् ब्रवीमि ते ।
> एहि, सर्व-सहं मित्रं सुग्रीवं कुरु वानरम् ॥ १०४ ॥

अन्वयः—अनृते वाचंयमः अहम् ते एतत् सत्यं ब्रवीमि । एहि, सर्वंसहं सुग्रीवं वानरं मित्रं कुरु ।

हिन्दी—झूठमें मौन रहनेवाला मैं आपसे सत्य कह रहा हूँ । चलिये, सभी कार्योंमें समर्थ सुग्रीव वानरको मित्र बनाइये ।

व्याख्या—अनृते असत्ये, वाचंयमः मौनव्रती, अहम् हनुमान्, ते तुभ्यम्, एतत् इदम्, सत्यं तथ्यं, ब्रवीमि व्याहरामि । एहि आगच्छ, सर्वंसहं सर्वकार्येषु समर्थं, सुग्रीवं वानरं, मित्रं सुहृदं, कुरु सम्पादय ।

कृदन्तः—वाचं यच्छतीति विग्रहे यम उपरमे इति भौवादिकाद् 'वाचियमो व्रते ३।२।४०' इति खचि 'वाचंयमपुरन्दरौ च ६।३।७९' इति मुमागमे निपातिते वाचंयमम् । सर्वं सहते इत्यर्थे 'पूःसर्वयोर्दारिसहोः ३।२।४१' इति खचोऽनन्तरम् सर्वंसहः ।

तिङन्तः—डुकृञ् करणे इत्यतो लोटि हौ, 'तनादिकृञ्भ्य उः ३।१ ७९' इत्युप्रत्यये, गुणे, 'अत उत्सार्वधातुके ६।४।११०' इत्युकारे 'उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६' इति हेर्लुकि कुरु ।

वाच्यपरिवर्तनम्—वाचंयमेन मया एतत् सत्यम् उच्यते । ईयताम्, सर्वंसहः सुग्रीवः वानरः मित्रं क्रियताम् ।

शिक्षा—सत्यं ब्रूयात् प्रियं ब्रूयादिति मनूक्तिं स्मारयति ॥ १०४ ॥

सुग्रीवं सङ्गमयितुं हनुमान् रामं मलयाचलं नयति—

> सर्वं कृत-ज्ञः शास्त्रं राम-लक्ष्मण-नरं कपिः ।
> आदाया ऽभ्रं-कषं प्रायान् मलयं फल-शालिनम् ॥ १०५ ॥

अन्वयः—कपिः सर्वङ्कषयशःशाखं रामकल्पतरुम् आदाय अभ्रङ्कषं फल-शालिनं मलयं प्रायात् ।

हिन्दी—कपि हनुमान्जी, सर्वव्यापी यशरूपी शाखावाले रामचन्द्ररूपी कल्पवृक्षको लेकर, मेघको छूने वाले फलोंसे शोभायमान मलयाचलको चले गये।

व्याख्या—कपिः हनुमान्, सर्वङ्कषयशःशाखम् विश्वव्यापिकीर्तिविटपम्, रामकल्पतरुम् राघव-कल्पवृक्षम्, आदाय गृहीत्वा, अभ्रङ्कषम् मेघस्पर्शिनम् ( अत्युन्नतमित्यर्थः ), फलशालिनम् आम्रादिफलितम्, मलयं तन्नामकं गिरिम्, प्रायाद् ययौ । रूपकालङ्कृतिः सह समालङ्कारेण राजतेऽत्र ।

कोशः—'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः' । ( कपिः ७-२२ )

समासः—राम एव कल्पतरुः रामकल्पतरुः । मयूरव्यंसकादित्वात्समासः ।

कृदन्तः—सर्वं कषन्तीति विग्रहे 'सर्वकूलाभ्रकरीषेषु० ३।२।४२' इति खच् । सर्वङ्कषाणि यशांसि कीर्तयः शाखाः यस्येति समासः । तद्वदेव अभ्रं कषतीति अभ्रङ्कषः, तम् ।

वाच्यपरिवर्तनम्—कपिना अभ्रङ्कषः फलशाली मलयः प्रायायत ॥१०५॥

सम्प्रति सुग्रीवचिन्तापगममाख्याति कविः—

मेघं-करमिवायान्तमृतुं रामं क्लमान्वितः ।
दृष्ट्वा मेने न सुग्रीवो बालि-भानुं भयं-करम् ॥ १०६ ॥

अन्वयः—क्लमान्वितः सुग्रीवः मेघङ्करम् ऋतुम् इव आयान्तं रामं दृष्ट्वा वालिभानुम् भयङ्करं न मेने ।

हिन्दी—सन्तप्त सुग्रीवने वर्षा-ऋतुके समान आते हुए रामचन्द्रको देखकर वालीरूपी सूर्यको भयङ्कर नहीं जाना ।

व्याख्या—क्लमान्वितः सन्तप्तः (वालिनेति शेषः), सुग्रीवः तन्नामा कपिः, मेघङ्करम् अभ्रसर्जकम्, ऋतुम् कालम्, इव यथा, आयान्तम् आगच्छन्तं, रामं दाशरथिं, दृष्ट्वा वीक्ष्य, वालिभानुं, वालिरूपिणं सूर्यं, भयङ्करं भीषणं, न मेने अवाबुध्यत । उपमात्र स्फुटतरा, रूपकमिति सन्देह-सङ्करः ।

कोशः—'भानुर्हंसः सहस्रांशुस्तपनः सविता रविः' ।

कृदन्तः—मेघं करोतीति विग्रहे 'मेघर्तिभयेषु कृञः ३।२।४३' इति खच् । मेघङ्करः । तद्वदेव भयङ्करः ।

तिङन्तः—मनु अवबोधने धातोर्लिटि द्वित्वेऽभ्यासकार्ये 'अत एकहल्मध्ये० ६।४।१२०' इति एत्वेऽभ्यासलोपे मेने ।



वाच्य०—क्लमान्वितेन सुग्रीवेण बालिभानुर्भयङ्करो न मेने ॥ १०६ ॥

रामसुग्रीवयोः सख्यमाह कविः—

उपाग्न्यकुरुतां सख्यमन्योन्यस्य प्रियंकरौ।
क्षेमंकराणि कार्याणि पर्यालोचयतां ततः॥ १०७ ॥

अन्वयः—अन्योऽन्यस्य प्रियङ्करौ उभौ उपाग्नि सख्यम् अकुरुताम्। ततः क्षेमङ्कराणि कार्य्याणि पर्यालोचयताम्।

हिन्दी—परस्पर प्रिय करने वाले दोनोंने अग्निके समीप (अग्निसाक्षिक) मित्रता की। बादमें अपने कल्याणकारी कार्योंपर विचार किया।

व्याख्या—अन्योऽन्यस्य परस्परस्य, प्रियंकरौ उपकारकर्तारौ, उभौ रामसुग्रीवौ, उपाग्नि वह्निसमीपम्, सख्यम् मित्रत्वम्, अकुरुताम् कृतवन्तौ। ततः तदनन्तरम्, क्षेमङ्कराणि कल्याणकर्तृणि, कार्याणि कर्तव्यानि, पर्यालोचयताम् व्यचारयताम्। सख्यक्रिया पर्यालोचनक्रिया एककारकस्येति दीपकः।

समासः—अग्नेः समीपम् उपाग्नि। 'समीपार्थेऽव्ययीभावः।

कृदन्तः—प्रियम् कुरुत इति विग्रहे 'क्षेमप्रियमद्रेऽण् च ३।२।४४' इति खचि प्रियङ्करौ। एवं क्षेमङ्कराण्यपि।

तद्धितः—सख्युर्भावः इति विग्रहे 'सख्युर्यः ५।१।१२६' इति ये सख्यम्।

वाच्यपरिवर्तनम्—प्रियङ्कराभ्यां ताभ्याम् सख्यमक्रियत। ततः क्षेमङ्कराणि कार्याणि पर्यालोच्यन्त॥ १०७॥

सम्प्रति रामः सुग्रीवसख्येन प्रसन्नोऽभवदिति वर्णयति—

आशितं-भवमुत्कृष्टं वल्गितं शयितं स्थितम्।
बह्वमन्यत काकुत्स्थः कपीनां स्वेच्छया कृतम्॥ १०८॥

अन्वयः—काकुत्स्थः कपीनां स्वेच्छया कृतम् आशितम्भवम् उत्कृष्टम् वल्गितम् शयितम् स्थितम् बहु अमन्यत।

हिन्दी—रामचन्द्रजी वानरोंके अपनी इच्छासे किया गया खाना, किलकारी मारना, सोना, बैठना इत्यादि व्यवहारोंसे बड़े प्रसन्न थे।

व्याख्या—काकुत्स्थः रामः, कपीनां वानराणाम्, स्वेच्छया निजाभिलाषेण, कृतम् सम्पादितम्, आशितम्भवम् सतृप्तिभोजनम्, उत्कृष्टम् उन्नतम्, वल्गितम् धापितम्, शयितम् निद्रालाभः, स्थितम् विश्राम इत्यादिव्यवहारम्, बहु भूरि, अमन्यत समार्थयत। तस्य विमुक्ते मनसि प्रसादाधायकमासीच्चेष्टितं कपीनामित्यर्थः। अनेकक्रिया एकाकारकमिति दीपकः।

कृदन्तः—आशितो भवति अनेनेति करणेऽर्थे 'आशिते भुवः करणभावयोः

३।२।४५' इति खचि आशितम्भवम् भोजनम्। (४-११) स्थितं शयितमित्यादिषु सर्वत्रैव भावे क्तः। आशितेऽपि अविवक्षिते कर्मणि कर्तरि क्तो ज्ञेयः।

वाच्य०—काकुत्स्थेन कृतम् आशितम्भवमित्यादि बहु अमन्यत ॥ १०८॥

इतः रामं प्रति सुग्रीवनिवेदनमाह—

ततो बलि-दम-प्रख्यं कपिर्विश्वंभराऽधिपम्।
सुग्रीवः प्राब्रवीद् रामं बालिनो युधि विक्रमम् ॥ १०९ ॥

अन्वयः—ततः कपिः सुग्रीवः बलिन्दमप्रख्यं विश्वम्भराधिपं रामम् युधि बालिनः विक्रमम् प्राह।

हिन्दी—तब वानर सुग्रीवने विष्णु भगवान्के सदृश पृथ्वीपति रामको संग्राममें बालीके पराक्रमको बताया।

व्याख्या—ततः सख्यानन्तरम्, कपिः शाखामृगः, सुग्रीवः तन्नामा वानरेन्द्रः बलिन्दमप्रख्यम् विष्णुसदृशम्, विश्वम्भराधिपम् भूपतिम्, रामम् राघवं, युधि संग्रामे, वालिनः कपीशस्य, विक्रमम् पराक्रमम्, प्राह अगदत्। उपमालङ्कारः।

कृदन्तः—बलिं दमयन्तीत्यर्थे 'संज्ञायां भृतृवृजि० ३।२।४६' इति खचि बलिन्दमः, तेन प्रख्यः, तम्। प्रख्यातीत्यर्थे 'आतश्चोपसर्गे ३।१।१३६' इति कः आल्लोपे प्रख्यः। विश्वम्भरतीत्यर्थे तेनैव खच्। अपरमपि तद्वदेव।

तिङन्तः—प्रपूर्वकात् ब्रू धातोर्लङि 'ब्रुव ईट् ७।३।९३' इतीटि गुणादौ अब्रवीत्।

वाच्यपरिवर्तनम्—कपिना सुग्रीवेण बलिन्दमप्रख्यः विश्वम्भराधिपः राम... विक्रमं प्रोच्यत ॥ १०९ ॥

इतोऽग्रे डाधिकारेणात्र खचैव सुग्रीवो बालिविक्रममाख्याति—

'वसुं-धरायां कृत्स्नायां नाऽस्ति बालि-समो बली।
हृदयं-गममेतत् त्वां ब्रवीमि, न पराऽभवम् ॥ ११० ॥

अन्वयः—कृत्स्नायां वसुन्धरायां वालिसमः बली न अस्ति। हृदयङ्गमं एतद् ब्रवीमि। पराभवं नेति (जानीहि इति शेषः)।

हिन्दी—सारी पृथ्वीमें वालीके समान बली नहीं है, यह मैं अपने हृदयकी बात कह रहा हूँ। आपके पराभवकी बुद्धिसे नहीं।

व्याख्या—कृत्स्नायां सकलायां, वसुन्धरायाम् पृथिव्यां, वालिसमः बालितुल्यः बली बलशाली, न अस्ति, न विद्यते। हृदयङ्गमम् स्वानुभूतिम्, ब्रवीमि कथयामि

पराभवम् अभिभवम् भवत इति न प्रतिपादयामि । वस्तुस्थितिरियमिति निवेदयामि, नान्यथा शङ्कनीयम् भवता । उपमालङ्कारः ।

कृदन्तः—वसूनि धारयतीत्यर्थे 'संज्ञायाम्० ३।२।४६' इति 'खचि ह्रस्वः ६।४।९४' इति ह्रस्वे, मुमागमे, वसुन्धरायाम् । हृदयं गच्छतीत्यर्थे 'गमश्च ३।२।४७' इति खचि हृदयङ्गमम् ।

वाच्य०—वालिसमेन वलिना न भूयते । हृदयङ्गमम् एतत् त्वमुच्यसे, पराभवं नोच्यसे । इति खशधिकारः । इतः परं सोपपदेष्वेव डादयोऽधिकाराः ॥ ११० ॥

सुग्रीवो रामप्रभावं व्यनक्ति—

दूर-गैरन्त-गैर् बाणैर् भवानत्यन्त-गः श्रियः ।
अपि संक्रन्दनस्य स्यात् क्रुद्धः, किमुत बालिनः ॥ १११ ॥

अन्वयः—( हे राम ! ) क्रुद्धः भवान् दूरगैः अन्तगैः बाणैः संक्रन्दनस्य अपि श्रियः अत्यन्तगः स्यात्, बालिनः किमु ।

हिन्दी—हे रामचन्द्रजी ! कुद्ध होने पर तो आप दूर तक एवं अन्त तक जानेवाले अपने बाणोंसे इन्द्रकी सम्पत्तिकी भी समाप्ति कर सकते हैं । बालीकी क्या बात है ?

व्याख्या—(हे राम !) क्रुद्धः कुपितः, भवान् प्रसिद्धः रामः, दूरगैः विप्रकृष्टगतिभिः, अन्तगैः कार्यसमापकैः अमोघैरित्यर्थः, बाणैः शरैः, संक्रन्दनस्य दुश्च्यवनस्य, श्रियः लक्ष्म्याः, अत्यन्तगः विनाशयिता, स्यात् भवेत् । बालिनः मे सहोदरस्य, ( श्रियः अत्यन्तगः स्यादिति ), किमुत किं वाच्यम् ? प्रतीपालङ्कारः ।

कोशः–'संक्रन्दनो दुश्च्यवनस्तुराषाण् मेघवाहनः' । 'स्याद् दूरं विप्रकृष्टत्वम्' ।

कृदन्तः—दूरं गच्छन्तीति विग्रहे 'अन्तात्यन्ताध्वदूर० ३।२।४८' इति गमेर्डप्रत्यये टिलोपे दूरगाः, तैः ।

वाच्यपरिवर्तनम्—क्रुद्धेन भवता अत्यन्तगेन भूयते ॥ १११ ॥

पुनर्वालिप्रभावं व्यनक्ति पद्यद्वयेन—

वरेण तु मुनेर् बाली संजातो दस्युहो रणे ।
अ-वार्य-प्रसरः प्रातरुद्यन्निव तमोपहः ॥ ११२ ॥

अन्वयः—मुनेर्वरेण तु बाली प्रातः उद्यन् तमोपह इव रणे अवार्यप्रसरः दस्युहः सञ्जातः ।

हिन्दी—मुनिके वरसे बाली प्रातःकालमें उदय होनेवाले सूर्य्यके समान रणमें अनिवार्य वेगवाला होकर शत्रुघाती बन गया है ।

व्याख्या—मुने: ऋषे:, वरेण प्रसादेन, तु निश्चयार्थे, वाली ममाग्रज:, प्रभातकाले, उद्यन् उद्गच्छन्, तमोपह: तमिस्रहा, इव यथा, रणे युद्धे, अवार्य दुर्वार्यगति:, दस्युह: शत्रुघाती, सञ्जात: सम्पन्न: (अस्तीति शेष:)। उपमालङ्का

कोश.—'पद्माक्षस्तेजसां राशिश्छायानाथस्तमिस्रहा' 'दस्युशात्रवशत्रव:

कृदन्त:—दस्यून् वध्याद् इति अर्थे 'हन' हिंसागत्योः इति धातो: 'आ हन: ३।२।४९' इति डप्रत्यये, टिलोपे दस्युह:। एवम् तमांसि अपह तमोपह: इत्यत्र 'अपे क्लेशतमसो: ३।२।५०' इति ड: टिलोपश्च।

वाच्य०—वालिना उद्यता तमोपहेन इव अवार्यप्रसरेण सञ्जातम् ॥ ११

पूर्वोक्तमेव द्रढयति—

अतिप्रियत्वान् न हि मे कातरं प्रतिपद्यते।
चेतो बालि-वधं राम! क्लेशापहमुपस्थितम् ॥ ११३ ॥

अन्वय:—हे राम कातरं मे चेत: क्लेशापहम् वालिवधम् उपस्थि (अपि) अतिप्रियत्वात् नहि प्रतिपद्यते।

हिन्दी—हे रामजी! मेरे क्लेशको दूर कर देनेवाले (आपके द्वारा) वालिवध उपस्थित है, तो भी कायर मेरा चित्त उसे अत्यन्त प्रिय होनेके क कबूल नहीं कर रहा है।

व्याख्या—हे राम राघव! कातरं अधीरम्, मे मम, चेत: चित्तं, क्ले पहम् आस्रवोन्मूलकम्, वालिवधम् मदग्रजविघातम्, उपस्थितम् भवत्सा भाव्यमानम् (अपि), अतिप्रियत्वात् अभीष्टतमत्वात्, नहि नो, प्रति विश्वसिति। अनुमानेन सह विभावनापि।

कोश:—'आदीनवास्रवौ क्लेशे'। 'अधीरे कातरस्त्रस्नौ भीरुभीरुकभीलु

कृदन्त:—क्लेशम् अपहन्तीति विग्रहे पूर्ववत् डे, क्लेशापहम्। इति डाधि

तिङन्त:—प्रतिपूर्वकात् पद गतौ इति दैवादिकस्य लटि, आत्मनेपदे प्रतिपद्यते। अनेकार्थत्वाद्धातोर्विश्वासोऽर्थ:।

वाच्य०—कातरेण चेतसा क्लेशापह उपस्थितो वालिवधो न प्रतिपद्य

इतो णिन्यादिप्रत्ययै: सुग्रीवो राममुत्तेजयति—

शीर्ष-घातिनमायान्तमरीणां त्वां विलोकयन्।
पतिघ्नी-तक्षणोपेतां मन्येऽहं बालिन: श्रियम् ॥ ११४ ॥

अन्वय:—(हे राम) अरीणाम् शीर्षघातिनम् त्वाम् आयान्तम् विलो अहम् वालिन: श्रियम् पतिघ्नीलक्षणोपेताम् मन्ये।



हिन्दी—हे राम! शत्रुओंका शिर उतार लेने वाले आपको आते

मैं तो वालीकी लक्ष्मीको पतिघ्नी ( स्वामीको मार डालनेवाली स्त्री ) के लक्षणसे युक्त मानता हूँ ।

व्याख्या—हे राम ! अरीणाम् शत्रूणाम्, शीर्षघातिनम् शिरच्छेदकम्, त्वाम् भवन्तम्, आयान्तम् आगच्छन्तम्, विलोकयन् पश्यन्, अहम् सुग्रीवः, बालिनः मदग्रजस्य, श्रियम् लक्ष्मीम्, पतिघ्नी-लक्षणोपेताम् स्वामिनाशकचिह्नयुक्ताम्, मन्ये तर्कयामि । उत्प्रेक्षालङ्कारः ।

कोशः—'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्' ।

समासः—पतिघ्न्या लक्षणम्, तेन उपेता, ताम् ।

कृदन्तः—शीर्षाणि हन्ति इति विग्रहे 'कुमारशीर्षयोर्णिनिः ३।२।५१' इति णिनौ उपधावृद्धौ 'हो हन्तेः०' इति घत्वे, 'हनस्तोऽचिण्णलोः ७।३।३२' इति नस्ते शीर्षघाती, तम् । पतिं हन्तीत्यर्थे 'लक्षणे जायापत्योष्टक् ३।२।५२' इति टकि, कित्वाद् 'गमहन० ६।४।९८' इत्युपधालोपे, कुत्वे च पतिघ्न-शब्दात् 'टिड्ढाणञ् ४।१।१५' इति ङीपि पतिघ्नीति ।

वाच्य०—मया विलोयकता बालिनः श्रीः पतिघ्नीलक्षणोपेता मन्यते ॥११४॥

स महाबली अपि भवतो वध्य एवेत्याख्याति—

शत्रुघ्नान् युधि हस्तिघ्नो गिरीन् क्षिप्यन्नकृत्रिमान् ।
शिल्पिभिः[1] पाणिघैः क्रुद्धस् त्वया जय्यो ऽभ्युपाय-वान् ॥ ११५ ॥

अन्वयः—युधि हस्तिघ्नः पाणिघैः शिल्पिभिः ( सह ) शत्रुघ्नान् अकृत्रिमान् गिरीन् क्षिप्यन् ( भवदुपरि ) अभ्युपायवान् क्रुद्धः ( अपि बाली ) त्वया जय्यः ।

हिन्दी—युद्धमें हाथियोंको भी मारडालने वाले, ताली पीटने वाले, युद्ध शिल्पियोंके साथ शत्रुओंको कुचल डालनेवाले, अकृत्रिम पर्वतोंको भी आपके ऊपर फेंकनेवाले, उपाय (दावपेंच) जानने वाले क्रुद्ध बालीको भी आप जीत ही लेंगे ।

व्याख्या—युधि संग्रामे, हस्तिघ्नः गजघाती, पाणिघैः हस्तताडकैः, शिल्पिभिः कलाज्ञैः सह, अकृत्रिमान् कर्तुमशक्यान्, शत्रुघ्नान् अरिघातकान्, पर्वतान् गिरीन्, क्षिप्यन् न्यस्यन् (भवदुपरि), अभ्युपायवान् बाहुपादप्रहरणज्ञः, क्रुद्धः कुपितः (अपि बाली), त्वया भवता, जय्यः जेतुं शक्य एव । भाविकेन सह सूक्ष्मालङ्कृतिः ।

कोशः—'पाणौ चपेट-प्रतल-प्रहस्ता विस्तृताङ्गुलौ' ।

कृदन्तः—'शक्तौ हस्तिकपाटयोः ३।२।५४' इति टकि हस्तिघ्नः । 'अमनुष्य-

---

(१) यहाँ शिल्पी युद्धकलाके जानकार हैं । इन्हींका विशेषण पाणिघ है । अतः ताली पीटना अर्थ उत्साह-वर्द्धनार्थ है और भारतीय प्रथा है, प्रतीच्य ही नहीं ।

कर्तृके च ३।२।५३' इति टकि शत्रुघ्नान्। 'पाणिघताडघौ शिल्पिनि ३।२। निपातनात् पाणिघैः।

वाच्यपरिवर्तनम्—हस्तिघ्नं क्षिपन्तम् क्रुद्धम् अभ्युपायन्तं बालिनम् त जेतुं शक्नुथाः एव ॥ ११५ ॥

पुनर्वालिनं प्रशंसति सुग्रीवः—

आढ्यं-करण-विक्रान्तो महिषस्य सुरद्विषः।
प्रियं-करणमिन्द्रस्य दुष्करं कृतवान् वधम् ॥ ११६ ॥

अन्वयः—आढ्यङ्करणविक्रान्तः, (स) सुरद्विषः महिषस्य दुष्करं वधं इन्द्र प्रियङ्करणं कृतवान्।

हिन्दी—पराक्रमद्वारा जगत्में उसने देवताओंके द्वेषी महिष दुन्दुभि इन्द्रके प्रसन्नता हेतु वध किया है।

व्याख्या—आढ्यङ्करणविक्रान्तः प्रसिद्धिकरपराक्रमः, स बाली, सुरद्वि देवद्वेषिणः, महिषस्य दुन्दुभेः, दुष्करम् अशक्यम्, वधम् विघातम्, इन्द्रस्य मघोन प्रियङ्करणं प्रीतिजनकम्, कृ वान् अकरोत्। इन्द्रप्रियकार्ये महिषवधहेतोरु काव्यलिङ्गम्, भाविकेन सङ्करश्च।

समासः—आढ्यङ्करणं विक्रान्तं यस्येति बहुव्रीहिः।

कृदन्तः—अनाढ्यम् आढ्यं कुर्वन्ति अनेनेति विग्रहे 'आढ्यसुभगस्थू ३।२।५६' इति करणेऽर्थे ख्युनि 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुमा आढ्यङ्करणम्। एवं प्रियङ्करणमित्यादि।

वाच्य०—आढ्यंकरणविक्रान्तेन प्रियङ्करणः दुष्करः वधः कृतः ॥ ११६ ॥

तमेव स्तौति—

प्रियं-भावुकतां यातस् तं क्षिपन् योजनं मृतम्।
स्वर्गे प्रियं-भविष्णुश् च कृत्स्नं शक्तोऽप्यबाधयन् ॥ ११७ ॥

अन्वयः—मृतं तं योजनं क्षिपन् ( सः ) प्रियम्भावुकतां यातः। शक्तः अ कृत्स्नम् अबाधयन् स्वर्गे प्रियम्भविष्णुश्च संवृत्तोऽस्ति।

हिन्दी—मरे हुए दुन्दुभिको एक योजन दूरी पर फेंक देने वाला वह सब प्रिय हो गया। सामर्थ्यशाली होकर भी सारे संसारको बाधित न करने वा वह बाली स्वर्गमें भी प्रिय हो गया है।



व्याख्या—मृतं गतासुम्, तम् दुन्दुभिम्, योजनं क्रोशचतुष्टयं, क्षिपन् प्रक्षि (सः), प्रियम्भावुकतां वल्लभतां, यातः गतः। शक्तः समर्थः अपि, कृत्स्नम्

(लोकम्), अबाधयन् अपीडयन्, स्वर्गे नाकलोकेऽपि, प्रियम्भविष्णुः वल्लभः, संवृत्तोऽस्ति जातोऽस्ति । भाविकस्य विभावनया सङ्करः ।

कोशः—'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः' ।

कृदन्तः—अप्रियः प्रियो भवतीति प्रियम्भविष्णु प्रियम्भावुको वा । उभयत्रापि 'अकर्तरि भुवः खिष्णुच्खुकञौ ३।२।५७' इति खिष्णुच्खुकञौ । बध संयमने इति चौरादिकस्य शतरि बाधयन्, नञ्समासे अबाधयन् ।

वाच्य०—शक्तेन अपि अबाधयता क्षिपता तेन प्रियम्भावुकता याता ॥११७॥

एवमुच्चावचं बहु वदतः सुग्रीवस्य प्रत्ययार्थं रामः सप्त तालान् एकेनैव शरेण भिनत्ति—

जिज्ञासोः शक्तिमस्त्राणां रामो न्यून-धियः कपेः ।
अभिनत् प्रतिपत्त्यर्थं सप्त व्योम-स्पृशस् तरून् ॥ १८ ॥

अन्वयः—(ततः) रामः न्यूनधियः (अत एव) अस्त्राणां शक्ति जिज्ञासोः कपेः प्रतिपत्त्यर्थं सप्त व्योमस्पृशः तरून् (तालानित्यर्थः) अभिनत् ।

हिन्दी—(तब) रामने अल्प बुद्धिवाले इसी कारण रामचन्द्रके अस्त्रोंकी शक्ति जाननेकी इच्छा रखनेवाले कपिके विश्वासके लिये आकाशको छूनेवाले सात बड़े वृक्षों (तालों) को एक ही बाणसे भेद डाला ।

व्याख्या—ततः तदनन्तरं, रामः राघवः, न्यूनधियः अल्पबुद्धेः, (अत एव) अस्त्राणाम् रामायुधानां, शक्तिं सामर्थ्यं, जिज्ञासोः ज्ञातुकामस्य, कपेः वानरस्य, प्रतिपत्त्यर्थं विश्वासाय, सप्त मुनिसंख्यकान्, व्योमपृशः नभस्तलस्पर्शिनः, तरून् विटपिनः (तालान्), अभिनत् व्यदारयत् । सूक्ष्मालङ्कारः, साभिप्रायविशेषणात् परिकरेण सङ्करः ।

कोशः—'धीर्धारणावती मेधा' । 'संकल्पः कर्म मानसम्' ।

समासः—न्यूना धीर्यस्य स न्यूनधीः, तस्य प्रतिपत्तये इदं यथा स्यात्तथेति—प्रतिपत्त्यर्थम् । 'अर्थेन नित्यसमासो विशेष्यलिङ्गता च वक्तव्या' इति समासे क्रियाया विशेषणमिदम् ।

कृदन्तः—व्योम स्पृशन्तीत्यर्थे 'स्पृशोऽनुदके क्विन् ३।२।५८' इति क्विनः सर्वापहारिलोपे, उपपदसमासे, सुपो लुकि व्योमस्पृशः ।

तिङन्तः—भिदिर् विदारणे इति धातोर्लङि 'रुधादिभ्यः श्नम् ३।१।७८' इति श्नमि अभिनत् ।



वाच्य०—रामेण व्योमस्पृशः सप्त तरवः अभिद्यन्त ॥ ११८ ॥

इदानीं सन्तुष्टः सुग्रीवः कर्तव्यपरायणो भवति—

ततो बालि-पशौ वध्ये राम-र्त्विग्-जित-साध्वसः ।
अभ्यभून् निलयं भ्रातुः सुग्रीवो निनदन् दधृक् ॥ ११९ ॥

अन्वयः—ततः वध्ये बालिपशौ रामर्त्विग्जित-साध्वसः निनदन् द[धृक्]
सुग्रीवः निलयम् अभ्यभून् । अभ्ययात् इति पाठान्तरेऽप्येवम् ।

हिन्दी—तब तालभेदके बाद वध्य ( मारने योग्य ) बाली-रूपी पशुके [लि]ए
में रामरूपी ऋत्विक् द्वारा निर्भीक बना देने पर गरजता हुआ ढीठ [हो]
सुग्रीव भाईके भवनकी ओर गया ।

व्याख्या—ततः सप्ततरुभेदानन्तरम्, वध्ये वधार्हे, बालिपशौ सुग्रीव[...]
चतुष्पदे, रामर्त्विग्जितसाध्वसः राघवयाजक-विहृतभीकः, अत एव निनद[न्]
कुर्वन्, दधृक् धृष्टः, सुग्रीवः कपिः, भ्रातुः बालिनः, निलयं भवनम्, अभ्[यभूत्]
अभिययौ । रूपकालङ्कारः ।

कोशः—'आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ये' ।

समासः—बाली एव पशुः बालिपशुः, तस्मिन् । राम एव ऋत्विक् राम[र्त्विक्]
तेन जितः साध्वसो यस्य सः रामर्त्विग्जितसाध्वसः । त्रिपदबहुव्रीहिः ।
शोभना ग्रीवा यस्य स सुग्रीवः ।

कृदन्तः—ऋतौ यजतीत्यर्थे ऋत्विक्, धृष्णोतीत्यर्थं दधृक् इत्युभ[यत्र]
ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३।२।५९' क्विनि निपातनात् ।

वाच्यपरिवर्तनम्—दधृषा निनदता सुग्रीवेण निलयोऽभ्यभावि ॥ ११[९] ॥

उपस्थिते सुग्रीवे बाली योद्धुं निर्गच्छति—

गुहाया निरगाद् बाली सिंहो मृगमिव द्युवन् ।
भ्रातरं युङ् भियः संख्ये घोषेणाऽऽपूरयन् दिशः ॥ १२० ॥

अन्वयः—संख्ये भियः युङ् बाली सिंहः मृगम् इव भ्रातरं द्युवन् [घोषेण]
दिशः पूरयन् गुहाया निरगात् ।

हिन्दी—संग्राममें शत्रुओंको भय उत्पन्न कर देनेवाला बाली, जैसे सिंह [मृग]
का शिकार करे वैसे ही भाईका शिकार करने हेतु, गर्जनसे दिशाओंको पूर्ण [करता]
हुआ गुफासे निकला ।

व्याख्या—संख्ये संग्रामे, भियः भीतेः, युङ् योक्ता ( शत्रूणामिति [...] )
बाली सुग्रीवाग्रजः, सिंहः हरिः, मृगम् हरिणम्, इव यथा, भ्रातरं सुग्रीव[म्]
जम् द्युवन् आक्रामन्, घोषेण गर्जनेन, दिशः ककुभः, आपूरयन् निनादयन्
ध्वनयन् इति यावत्, गुहाया गह्वरात्, निरगात् निर्ययौ । उपमालङ्कारः ।

कोशः—'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' ।

कृदन्तः—युजिर् योगे इति धातोः पूर्वसूत्रेणैव क्विन् । एवं दिश् धातोः क्विनि दिशः इति शसि रूपम् । द्यु अभिगमने इति आदादिकात् शतरि द्युवन् । धातूनामनेकार्थत्वात् खेटनमर्थः ।

वाच्यपरिवर्तनम्—युजा बालिना आपूरयता निरगायि ॥ १२० ॥

तयोरैकविध्याद्रामभ्रममाख्याति कविः—

व्यायच्छमानयोर् मूढो भेदे सदृशयोस् तयोः ।
बाणमुद्यतमायंसीदिक्ष्वाकु-कुलनन्दनः ॥ १२१ ॥

अन्वयः—व्यायच्छमानयोः सदृशयोः तयोः भेदे मूढः इक्ष्वाकुकुलनन्दनः उद्यतम् बाणम् आयंसीत् ।

हिन्दी—युद्ध करनेवाले उन दोनोंके एकसे होनेके कारण कौन वाली है इस भेदको न जान सकनेसे, रामने तरकससे निकाले गये बाणको भी रोक लिया ।

व्याख्या—व्यायच्छमानयोः युध्यमानयोः, सदृशयोः तुल्ययोः, तयोः बालि-सुग्रीवयोः, भेदे पार्थक्ये, मूढः अनभिज्ञः, इक्ष्वाकु-कुलनन्दनः रामः, उद्यतम् तूणी-रादुद्धृतं, बाणम् आशुगम्, आयंसीत् उपसंजहार । बाणरोधे कारणोक्तौ काव्य-लिङ्गम् । सादृश्याद् भ्रान्तिमानलङ्कार इति तयोः सङ्करः ।

कृदन्तः—'समानान्ययोश्च ३।१।६०' इति वार्तिकेन कञि 'दृग्दृशवतुषु ६।३।८९' इति समानस्य सादेशे सदृशयोः । आयच्छमानयोरत्र 'आङो यमहनः १।३।२८' इति यमेराङ्पूर्वादकर्मकतयाऽऽत्मनेपदे शानच् ।

तिङन्तः—आयंसीदित्यत्र अकर्त्रभिप्रायत्वान्न तङ् । 'समुदाङ्भ्यो यमोऽग्रन्थे १।३।७५' इति 'आङो यमहनः १।३।२८' इति च सकर्मकत्वान्नात्मनेपदम् । ततो लुङि परस्मैपदे सगिटौ । 'नेटि ७।२।४' इति वृद्धिप्रतिषेधान्न हलन्तलक्षणा वृद्धिः ।

वाच्यपरिवर्तनम्—मूढेन इक्ष्वाकुकुलनन्दने उद्यतो बाण अयामि ॥ १२१ ॥

ततः सुग्रीवस्य पलायनमाख्याति—

ऋष्यमूकमगात् क्लान्तः कपिर् मृग-सदृग् द्रुतम् ।
किष्किन्धाद्रिसदाऽत्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन् ॥ १२२ ॥

अन्वयः—किष्किन्धाद्रिसदा अत्यर्थं निष्पिष्टः क्लान्तः कोष्णम् उच्छ्वसन् कपिः मृगसदृक् द्रुतम् ऋष्यमूकम् अगात् ।



हिन्दी—किष्किन्धा पर्वत पर रहने वाले ( बाली ) से खूब पीस दिया गया

एवं गरम श्वास लेता हुआ कपि (सुग्रीव), मृगके समान, फौरन् ऋष्यमूक (पर्वत) को भाग गया।

व्याख्या—किष्किन्धाद्रिसदा किष्किन्धाचलवासिना वालिना, अत्यर्थम् अत्यन्तं, निष्पिष्ट मर्दितः, क्लान्तः श्रान्तः, अत एव कोष्णं कदुष्णम्, उच्छ्वसन् उच्छ्वासं गृह्णन्, कपिः सुग्रीवः, मृगसदृक् हरिणसमम्, यथास्यात्तथा द्रुतं द्राक्, ऋष्यमूकम् स्वनिवासं गिरिम्, अगात् पलायाञ्चक्रे। उपमालङ्कारः।

कोशः—'स्राग्-झटित्यञ्जसाह्नाय-द्राङ्-मङ्क्षु-सपदि द्रुते'।

समासः—ईषत् उष्णम् कोष्णम्। 'कुगतिप्रादयः २।२।१८' इति समासे 'कवं चोष्णे ६।३।१०७' इति पाक्षिके कादेशे कोष्णम् (क्रियावि०)।

कृदन्तः—किं किं दधातीत्यर्थे 'आतोऽनुपसर्गे कः ३।२।३' इति के, आलोपे, द्वित्वं निपातनात्। परत्र सुपोऽलुक्, पूर्वत्र सुट् निपातनात्। स्त्रीत्वाट्टाप् किष्किन्धा नगरी। तस्या अद्रिः, तत्र सीदतीत्यर्थे 'सत्सूद्विषद्रुहदुह० ३।२।६१' इति क्विप्, किष्किन्धाद्रिसत्, तेन। मृगसदृग् इति पूर्ववत् क्विना साध्यम्।

वाच्यपरिवर्तनम्—निष्पिष्टेन क्लान्तेन उच्छ्वसता ऋष्यमूकोऽगायि।

रामोऽधुना सुग्रीवं सविशेषीकृत्य वालिनमाह्वाययति—

कृत्वा वालि-द्रुहं रामो मालया स-विशेषणम्।
अङ्गद-स्वं पुनर् हन्तुं कपिनाऽऽह्वाययद् रणे॥ १२३॥

अन्वयः—रामः वालिद्रुहम् मालया सविशेषणं कृत्वा अङ्गदस्वं हन्तुं कपिना रणे पुनराह्वाययत्।

हिन्दी—रामने वालीद्रोही सुग्रीवको माला द्वारा विशेषणसे युक्त बनाकर अङ्गदके पिता (या, धन वालीको) को मारनेके लिये कपि द्वारा रणमें पुनः बुलवाया (ललकारवाया)।

व्याख्या—रामः राघवः, वालिद्रुहम् वालिद्रोहिणम् सुग्रीवं, मालया स्रजा, सविशेषणं सचिह्नं, कृत्वा विधाय, अङ्गदस्वम् अङ्गदजनकं, हन्तुं मारयितुम्, कपिना वानरेण (सुग्रीवेणेत्यर्थः), रणे युधि, पुनः भूयः, आह्वाययत् आकारयत्। विशेषालङ्कारः। एकस्यैव रामस्य विशेषकरणे आह्वाने च कर्तृत्वमिति दीपकोऽपि।

कोशः—'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने'।
'माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः'।

कृदन्तः—वालिनं द्रुह्यति, अङ्गदं सूते इत्यर्थे उभयत्र 'सत्सूद्विषद्रुह० ३।२।६१' इति क्विपि वालिध्रुट्, अङ्गदसूः, तम्। 'ओः सुपि ६।४।८३' इति यण्।

अथवा अङ्गदस्य स्वः ज्ञातिः आत्मीयो वा। आहो अङ्गदः स्वो यस्येति बहुव्रीहिणापि बालिन एव बोधो ज्ञेयः।

तिङन्तः—ह्वयतेः आङ् पूर्वकात् ण्यन्तात् 'णिचश्च १।३।३७' इति अकर्त्रभिप्रायात् परस्मैपदे लङि रूपम्। 'शाच्छासाह्वा० ७।३।३७' इति युक् ज्ञेयः।

वाच्यपरिवर्तनम्—रामेण अङ्गदसूः कपिना रणे पुनराह्वाय्यत ॥ १२३ ॥

सम्प्रति रामो बालिनं हन्ति—

तयोर् वानर-सेनान्योः संप्रहारे तनुच्छिदम्।
बालिनो दूर-भाग् रामो बाणं प्राणाऽदमत्यजत् ॥ १२४ ॥

अन्वयः—वानरसेनान्योः तयोः सम्प्रहारे दूरभाक् रामः बालिनः तनुच्छिदं प्राणादम् बाणम् अत्यजत्।

हिन्दी—वानरोंके सेनापति उन दोनोंके रणमें दूर रहने वाले रामने बालीके शरीर-छेद देनेवाला तथा प्राण ले लेनेवाला बाण छोड़ दिया।

व्याख्या—वानर-सेनान्योः कपिसेनापत्यो, तयोः बालिसुग्रीवयोः, सम्प्रहारे युद्धे, दूरभाक् विप्रकृष्टस्थितः, रामः राघवः, बालिनः अङ्गदपितुः, तनुच्छिदम् शरीरविदारकम्, प्राणादम् असुहरं, बाणं शरम्, अत्यजत् अजहात्। अनुप्रासः, साभिप्रायविशेषणात्परिकरश्च।

समासः—वानराणाम् सेनान्यौ वानरसेनान्यौ, तयोः। 'एरनेकाचोऽसंयोगपूर्वस्य ६।४।८२' इति यण्।

कृदन्तः—सेने नयतः इत्यर्थे 'सत्सूद्विष० ३।२।६१' इति क्विप्। एवम् तनुम् छिनत्ति इत्यर्थेऽपि तेनैव क्विप्। दूरं भजते इत्यर्थे 'भजो ण्विः ३।२।६२' इति ण्वौ दूरभाक्। प्राणान् अत्तीति विग्रहे 'अदोऽनन्ने ३।२।६८ इति विट्।

वाच्यपरिवर्तनम्—दूरभाजा रामेण तनुच्छित् प्राणाद् बाणः अत्यज्यत।

अथ युग्मेन बालिनिपातं कविर्ब्रूते—

[1]अथ बाणेन जविना तेन विद्धो महाकपिः।
क्रव्यात्त्रासकरं नादं कुर्वन् कामदुघोऽर्थिनाम् ॥

---

1. पद्यद्वय १२५, १२६ को महाकविभट्टिके मर्मके अनभिज्ञ पण्डितोंने छोड़ दिया है जिससे ३।२।६९ से ७७ तक वैदिक, ७१ से ७६ तीन सूत्रोंके अतिरिक्त, छह सूत्रोंके उदाहरण लुप्त थे। मैंने उन पद्योंको रखा है।

अग्रेगावा च शूराणामभिभूः सर्व-विद्विषाम् ।
शंस्थरूपः स्थिरप्रज्ञः पपात सहसा भुवि ॥ १२५-१२६ ॥

अन्वयः—अथ जविना तेन बाणेन विद्धः, अर्थिनां कामदुघः, शूराणां अग्रेगावा, सर्वविद्विषाम् अभिभूः, शंस्थरूपः, स्थिरप्रज्ञः, महाकपिः, क्रव्यात्त्रासकरम् नादं कुर्वन्, सहसा भुवि पपात ( क्वापि पद्ये इमे न स्तः ) ।

हिन्दी—वेग वाले उस बाणसे मारा गया, याचकोंकी इच्छापूर्ण करने वाला, वीरोंमें अग्रगण्य, सभी शत्रुओंको परास्त करने वाला, सुखपरायण, स्थिरबुद्धि, महाकपि वाली, राक्षसोंको भय उत्पन्न करने वाली गर्जना करता हुआ, एकाएक पृथ्वीपर गिर पड़ा ।

व्याख्या—अथ बाण-पातानन्तरम्, जविना वेगशालिना, तेन रामविमुक्तेन, बाणेन नाराचेन, विद्धः ताडितः, अर्थिनाम् याचकानाम्, कामदुघः अभीष्टद, शूराणां वीराणाम्, अग्रेगावा पुरःसरः, सर्वविद्विषां समस्तशत्रूणाम्, अभिभूः पराजयिता, शंस्थरूपः सुखैकवृत्तिः, स्थिरप्रज्ञः दृढमतिः, महाकपिः वानरराजः वाली, क्रव्यात्त्रासकरम् राक्षसभयदम्, नादं गर्जनं, कुर्वन् विदधत्, सहसा अतर्कित एव, भुवि रसायां, पपात अपसत् । दीपकविषमालङ्कारयोः सन्देहसंकरः ।

कोशः—'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' ।

समासः—महान् चासौ कपिः महाकपिः । 'आन्महतः समानाधिकरणजातीययोः ६।३।४६' इति महत आत्वे सौ रूपम् ।

कृदन्तः—क्रव्यानि अदन्ति इति क्रव्यादः । 'क्रव्ये च ३।२।६९' इति विट् । कामान् दोग्धि इत्यर्थे 'दुहः कब्घश्च ३।२।७०' इति कपि घान्तादेशे कामदुघः । अग्रे गायतीति विगृह्य कृतात्वस्य गै-धातोः 'आतो मनिन्० ३।२।७४' इति क्वनिपा अग्रेगावा । अभिभूः सर्वविद्विषाम् इत्यत्र 'क्विप् च ३।२।७६ इति क्विप् । शंस्थ इत्यत्र 'स्थः क च ३।२।७७' इति के आलोपः । 'अन्येभ्योऽपि दृश्यन्ते ३।२।७५ सर्वोपाधिविनाशिनाऽपिना केवलाद् भू धातोः क्विप् भूः । सप्तम्यां भुवि ।

वाच्यपरिवर्तनम्--विद्धेन कामदुघेन अग्रेगाव्ना अभिभुवा शंस्थरूपेण स्थिरप्रज्ञेन महाकपिना नादं कुर्वता पेते ॥ १२५-१२६ ॥

वानराणां पलायनमाख्याति कविः—

बालिनं पतितं दृष्ट्वा वानरा रिपु-घातिनम् ।
बान्धवाऽऽक्रोशिनो भेजुरनाथाः ककुभो दश ॥ १२७ ॥

अन्वयः—रिपुघातिनं बालिनं पतितं दृष्ट्वा बान्धवाक्रोशिनः अनाथा वानराः दश ककुभः भेजुः ।

हिन्दी—शत्रुघाती बालीको गिरा देखकर बन्धुसमान विलाप करने वाले अनाथ बन्दर दशो दिशाओंमें भाग चले ।

व्याख्या—रिपुघातिनं शत्रुसन्तापिनं, बालिनं सुग्रीवाग्रजम्, पतितम् विपन्नं, दृष्ट्वा वीक्ष्य, बान्धवाक्रोशिनः बन्धुवत् विलपन्तः, अनाथाः स्वामिशून्याः, वानराः कपयः, दश पङ्क्तिसंख्यकाः, ककुभः दिशः, भेजुः प्राप्ताः ।

समासः—अविद्यमानो नाथो येषाम् ते 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपश्चेति २।२।२४' समासे अनाथाः ।

कृदन्तः—रिपून् हन्ति तच्छीलः इति विग्रहे 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति णिनिः । 'हो हन्तेः० ७।३।५४' 'हनस्तोऽचिण्णलोः ७।३।३२' इति कुत्वे तकारे च रिपुघाती, तम् । बान्धवा इव आक्रोशन्तीत्यर्थे 'कर्तर्युपमाने ३।२।७९' इति णिनिः बान्धवाक्रोशिनः ।

तिङन्तः—भज सेवायाम् इति भौवादिकाल्लिटि 'तॄफलभजत्रपश्च ६।४।१२२' इत्येत्वाभ्यासलोपे भेजुः ।

वाच्य०—बान्धवाक्रोशिभिः अनाथैः वानरैः दश ककुभः भेजिरे ॥ १२७ ॥

मुनिकर्तृकं रामविगर्हणमाख्याति कविः—

धिग् दाशरथिमित्यूचुर् मुनयो वन-वर्तिनः ।
उपेयुर् मधु-पायिन्यः क्रोशन्त्यस् तं कपि-स्त्रियः ॥ १२८ ॥

अन्वयः—वनवर्तिनः मुनयः दाशरथिम् धिक् इत्यूचुः । मधुपायिन्यः कपिस्त्रियः क्रोशन्त्यः तम् उपेयुः ।

हिन्दी—वानप्रस्थी मुनियोंने 'रामचन्द्रको धिक्कार है' ऐसा कहा । विलाप करती हुई मद्यपीनेवाली बालीकी स्त्रियोंने उसको घेर लिया ।

व्याख्या—वनवर्तिनः वानप्रस्थाश्रमस्थाः, मुनयः तपस्विनः, दाशरथिम् दशरथतनयं रामम्, धिक् गर्हितं कृतं, प्रच्छन्न-बाणघातमिति ऊचुः कथितवन्तः । मधुपायिन्यः मद्यपानशीलाः, कपिस्त्रियः वानरभार्याः, क्रोशन्त्यः विलपन्त्यः, तम् वालिनम्, उपेयुः उपसेदुः । पर्यायोक्तमलङ्कारोऽत्र गर्हितत्वव्यञ्जनात् ।

कोशः—'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः' ।

कृदन्तः—वने वर्तन्ते तच्छीलाः इत्यर्थे 'व्रते ३।२।८०' इति णिनिः वनवर्तिनः।

आभीक्ष्ण्येन मधु पिबन्ति तच्छीलाः 'बहुलमाभीक्ष्ण्ये ३।२।८१' इति णिनौ, ङीपि च मधुपायिन्यः ।

तिङन्तः—उपपूर्वाद् इण् धातोः लिटि द्वित्वादौ 'इणो यण् ६।४।८१' इति यणि 'दीर्घ इणः किति ७।४।६९' इति अभ्यासदीर्घे गुणे उपेयुः ।

वाच्यपरिवर्तनम्—वनवर्तिभिः मुनिभिः इत्यूचे । मधुपायिनीभिः कपिस्त्रीभिः क्रोशन्तीभिः स उपेये ॥ १२८ ॥

वालिकर्तृकां रामविगर्हणामाह—

राममुच्चैरुपालब्ध शूर-मानी कपि-प्रभुः ।
व्रणवेदनया ग्लायन् साधुं-मन्यम-साधुवत् ॥ १२९ ॥

अन्वयः—शूरमानी कपिप्रभुः व्रण-वेदनया ग्लायन् साधुम्मन्यं रामम् असाधुवत् उच्चैः उपालब्ध ।

हिन्दी—अपनेको वीर मानने वाले कपीश्वर वालीने व्रणकी वेदनासे कराहते हुए अपनेको अच्छा माननेवाले रामको बुरे आदमीकी भाँति जोरोंसे उपालम्भ दिया, खूब कोसा ।

व्याख्या—शूरमानी अन्यैः शूरत्वेन सम्मतः, कपिप्रभुः कीशस्वामी वाली, व्रणवेदनया प्रहारव्यथया, ग्लायन् पीड्यमानः, साधुम्मन्यं सज्जन-मानिनम्, रामम् राघवम्, असाधुवत् दुर्जनतुल्यम्, उच्चैः तारस्वरम्, उपालब्ध जगर्हे, निन्दितवानित्यर्थः । सूक्ष्मालङ्कारः । असाधुवदिति उपमापि ।

कोशः—'महाकुल-कुलीनार्य-सभ्यसज्जन-साधवः' ।

कृदन्तः—अन्यैः शूरमानीत्यर्थे 'मनः ३।२।४२' इति णिनिः शूरमानी । आत्मानं साधुम् मन्यते इत्यर्थे 'आत्ममाने खश्च ३।२।८३' इति खशि साधुम्मन्यः, साधुमानीत्यादि ।

तिङन्तः—उपपूर्वात् डुलभष् धातोः लुङि 'झलो झलि ८।२।२६' इति सिज्लोपे, धत्वे, जश्त्वे चाडागमे उपालब्ध ।

वाच्य०—शूरमानिना कपिप्रभुणा ग्लायता साधुम्मन्यो रामः असाधुवत् उपालम्भि ॥ १२९ ॥

श्लोकाष्टकेनाविच्छिन्नं वाली स्वयं राममुपालभते—

मृषा ऽसि त्वं हविर्-याजी राघव ! च्छद्म-तापसः ।
अन्य-व्यासक्त-घातित्वाद् ब्रह्मघ्नां पाप-संमितः ॥ १३० ॥

अन्वयः—हे राघव ! छद्मतापसः त्वम् मृषा हविर्याजी असि । अन्यव्या-सक्तघातित्वात् ब्रह्मघ्नाम् पापसम्मितः ( अपि असीति शेषः ) ।

हिन्दी—हे राम ! तुम ढोंगी साधु झूठे हविर्याजी वने हो । दूसरे के साथ युद्ध करने वाले मुझे मारकर तो तुम ब्रह्महत्यारोंके पापके भागी बन गये हो ।

व्याख्या—हे राघव राम ! छद्मतापसः कपटतपस्वी, त्वं रामः, मृषा मिथ्या, हविर्याजी असि हविषा इष्टवानस्मि इति वदसि । अन्यव्यासक्तघातित्वात् अन्ययुद्धरतमारकत्वात्, ब्रह्मघ्नां ब्रह्महत्याकर्तॄणां, पापसम्मितः वृजिनतुल्योऽसि । अति गर्हितत्वात् इति भावः । उपमागर्भितः अर्थान्तरन्यासः ।

कोशः—'कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम्' ।
'अस्त्री पङ्कं पुमान् पाप्मा पापं किल्विषकल्मषम्' ।

कृदन्तः—हविषा इष्टवान् इत्यर्थे 'करणे यजः ३।२।८५' इति णिनिः । अन्यव्यासक्तं हतवान् इत्यर्थे 'कर्मणि हनः ३।२।८६' इति णिनिः । ब्रह्माणं हतवन्त इत्यर्थे 'ब्रह्मभ्रूणवृत्रेषु क्विप् ३।२।८७' इति क्विप् । 'क्विप् च ३।२।७६' इति क्विपि सिद्धेऽपि आरम्भोऽयं काशिकानये 'ब्रह्मादिष्वेव, हन्तेरेव, भूते एव, क्विबेव' इति चतुर्धा । भाष्यनये 'ब्रह्मादिष्वेव क्विबेवेति' द्विधैव इत्यादि सर्वो-पाधिविनाशेन क्विप्करणार्थम् । अतोऽत्र ब्रह्मपूर्वकात् हनः क्विपि ब्रह्मघ्नाम् इति बहुवचने रूपम् ।

वाच्य०—छद्मतापसेन त्वया मृषा हविर्याजिना पापसम्मितेन भूयते ।१३०।

वाली रामकर्तृकं स्वकीयं वधमन्यायोपेतं मन्यते—

पाप-कृत् सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः ।
मामपापं दुराचार ! किं निहत्याऽभिधास्यसि ॥ १३१ ॥

अन्वयः—हे दुराचार ! पुण्यकृतः राज्ञः पापकृत् सुतः ( त्वम् ) अपापं मां निहत्य सुकृतां मध्ये किम् अभिधास्यसि ? ( आत्मानमिति शेषः ) ।

हिन्दी—अरे दुराचार ! पुण्यशाली राजाके पापकारी पुत्र तू मुझ जैसे निष्पापीको मारकर पुण्यात्माओंके बीचमें क्या कहेगा ? ( अपनेको ) ।

व्याख्या—अरे दुराचार दुष्कर्मन् ! पुण्यकृतः सुकृतशालिनः, राज्ञः नृपस्य ( दशरथस्येत्यर्थः ), पापकृत् दुष्कर्मा, सुतः पुत्रः, त्वम् रामः, अपापं निष्क-ल्मषम्, माम् वानरराजं, निहत्य व्यापाद्य, सुकृतां पुण्यात्मनां, मध्ये अन्तरे, किम् वचनम्, अभिधास्यसि व्याहरिष्यसि (आत्मानम् इति शेषः) । असङ्गतिरलङ्कारः ।

कोशः—( १६ पद्ये ) ।

समासः—दुष्ट आचारो यस्य स दुराचारः, तत्सम्बुद्धौ दुराचार। अवि-
मानं पापं यस्येति विद्यमानलोपी बहुव्रीहिः।

कृदन्तः—पुण्यं कृतवान्, पापं कृतवान्, सु ( शोभनं ) कृतवान् इत्यर्थे
'सुकर्म-पाप-मन्त्र-पुण्येषु कृञः ३।२।८९' इति क्विपि रूपाणि।

वाच्यपरिवर्तनम्—पापकृता सुतेन त्वया किम् अभिधास्यते।

शिक्षा—"खलः सर्षपमात्राणि परच्छिद्राणि पश्यति।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति" ॥
इत्येव शिक्षयन्ति पद्यानीमानि ॥ १३१ ॥

पूर्वोक्तमेव स्मारयति बाली—

अग्नि-चित् सोम-सुद् राजा रथ-चक्र-चिदाऽऽदिषु।
अनलेष्विष्टवान् कस्मान् न त्वयाऽपेक्षितः पिता ॥ १३२ ॥

अन्वयः—( अरे राम ! ) त्वया अग्निचित् सोमसुत् रथचक्रचिदादिषु
अनलेषु इष्टवान् राजा पिता कस्मात् न अपेक्षितः ( यदेवं कुकर्म कृतम् )।

हिन्दी—अरे राम ! तुमने अग्निहोत्री, सोमयाजी तथा रथचक्र इत्यादि
आकारके समान कुण्डोंमें अग्निस्थापन कर इष्टि करनेवाले राजा पिताकी क्यों
नहीं अपेक्षा की ?

व्याख्या—( अरे राम ! ) त्वया रामेणापि सता, अग्निचित् अग्निहोत्री
सोमसुत् सोमयाजी, रथचक्रचिदादिषु अनलेषु तत्तन्नामक-कुण्डाग्निप्रभृतिषु
इष्टवान् यज्ञकर्ता, राजा भूपः, पिता जनको दशरथ इति यावत्, कस्मात् केन
कारणेन, न नहि, अपेक्षितः विचारितः। दीपको विषमेण युतः, अतः सङ्करः।

समासः—रथश्च चक्रं च रथचक्रे, तद्वत् चीयते इति रथचक्रचित्, स आदि-
र्येषां ते रथचक्रचिदादयः, तेषु।

कृदन्तः—सोमम् सुतवान् इति विग्रहे 'सोमे सुञः ३।२।९०' इति क्विप्।
अग्नये ( इष्टकाः ) चितवान् इत्यर्थे 'अग्नौ चेः ३।२।९१' इति क्विप्। रथ-
चक्रवत् चीयत इत्यर्थे 'कर्मण्यग्न्याख्यायाम् ३।२।९२' इति क्विप्।

वाच्य०—त्वम् अग्निचितं सोमसुतं इष्टवन्तं पितरम् कस्मान्न अपैक्षिष्ठाः।

पुनरपि असाधुकर्म मन्वानो बाली विगर्हते—

मांस-विक्रयिणः कस्माद् व्याधस्य ऽपि विगर्हितम्।
गां घ्नता भवता ऽकारि निःशङ्कं पाप-दृश्वना ॥ १३३ ॥

अन्वयः—पापदृश्वना निःशङ्कं मां घ्नता भवता मांस-विक्रयिणः व्याधस्यापि विगर्हितम् कर्म अकारि।

हिन्दी—हर समय पाप दृष्टि रखने वाले ( राम ) तुमने निःशंक रहनेवाले मुझे मारते समय मांस बेचनेवाले कसाईसे भी निन्दनीय कर्म किया।

व्याख्या—पापदृश्वना कलुषदृष्टिना, निःशङ्कं निर्विचिकित्सं, मां वानरेन्द्रं वालिनं, घ्नता मारयता, भवता रामेणापि सता, मांसविक्रयिणः पलविक्रेतुः, व्याधस्य घातुकस्य, अपि संभावनायाम्, विगर्हितम् निन्दितम्, कर्म कृत्यम्, अकारि निरपादि। दृष्टान्तालङ्कृतिं विद्धि।

समासः—निर्गता शङ्का यस्मात् सः, तम्—इति वालिविशेषणम्। अथवा निर्गता शङ्का यस्मिन् तत् निःशङ्कम् यथा स्यात्तथेति क्रियाविशेषणम्।

कृदन्तः—पापं दृष्टवान् इत्यर्थे 'दृशेः क्वनिप् ३।२।९४' इति क्वनिप् पापदृश्वन्, तेन पापदृश्वना। मांसं विक्रीतवान्निन्द्यश्च इत्यर्थे 'कर्मणीनि विक्रियः ३।२।९३' इति कुत्सितेऽर्थे इनि-प्रत्यये मांसविक्रयिणः। हन्ते शतरि 'गमहन० ६।४।९८' इत्युपधालोपे कुत्वे घ्नन्, तेन।

तिङन्तः—कृञः कर्मणि लुङि 'चिण् भावकर्मणोः ३।१।६६' इति चिणि, वृद्धौ अकारि।

वाच्यपरिवर्तनम्—पापदृश्वा घ्नन् भवान् गर्हितं कर्म अकार्षीद्॥ १३३॥

तथैव स वाली पुनः स्मारयति—

बुद्धिपूर्वं ध्रुवन् न त्वा राज-कृत्वा पिता खलम्।
सहयुध्वानमन्येन यो ऽहिनो मामनागसम्॥ १३४॥

अन्वयः—( अरे राम! ) पिता त्वा खलं ध्रुवन् बुद्धिपूर्वं राजकृत्वा न ( अभूत् ), यः ( त्वम् ) अन्येन सहयुध्वानम् अनागसं माम् अहिनः।

हिन्दी—( अरे राम! ) पिताने तुमको खल जानकर ही राजा नहीं बनाया। तुमने दूसरेके साथ युद्ध करनेवाले निरपराधी मुझे मारा है।

व्याख्या—( अरे राम! ) पिता जनको दशरथः, त्वा त्वाम्, खलं दुर्विनीतं, ध्रुवन् विदन्, बुद्धिपूर्वं सविवेकम्, राजकृत्वा युवराजरूपतोऽभिषेक्ता, न नहि, ( अभूत् )। यः ( त्वम् ) रामः, अन्येन भ्रात्रा, सहयुध्वानं सहयोधिनम्, अनागसम् निरपराधम्, माम् वानरराजम्, अहिनः व्यापादयः।

कृदन्तः—राजानं कृतवान् इत्यर्थे 'राजनि युधि कृञः ३।२।९५' इति क्वनिपि राजकृत्वा, सह युद्धवान् इत्यर्थे 'सहे च ३।२।९६' इति क्वनिपि सहयुध्वा।

तिङन्तः—तृह हिसि हिंसायाम् इति रौधादिकात् हिंस-धातोः लङि, सिपि, श्नमि, हल्ङ्यादिलोपे अहिनः।

वाच्यपरिवर्तनम्—पित्रा द्रुवता राजकृत्वना न अभावि। येन त्वया सह युध्वा अनागा अहम् अहिंस्ये ॥ १३४ ॥

मांसलोभादपि मे घातो न वरमित्याह—

पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर् द्विजैः।
कौशल्या-ज ! शशाऽदीनां तेषां नैको ऽप्यहं कपिः ॥ १३५ ॥

अन्वयः—अरे कौशल्याज ! कृतजैः द्विजैः ये पञ्चनखाः पञ्च भक्ष्याः प्रोक्ताः तेषां शशादीनां कपिः अहम् एकः अपि न ( अस्मीति शेषः )।

हिन्दी—ओ कौशल्याके छोकरे ! सत्ययुगी ब्राह्मणोंने जिन पाँच नखवाले पाँच जानवरोंको भक्ष्य बताया है उनमें भी तो मैं नहीं हूँ ( फिर क्यों तुमने मुझे मारा ? )।

व्याख्या—अरे कौशल्याज मातृज ! न तु पितृज इति काकुः ( निन्दावाक्यम्), कृतजैः सत्ययुगजातैः, द्विजैः ब्राह्मणैः, ये परिगणिताः, पञ्चनखाः शरलखराः, पञ्च बाणसंख्यका एव, भक्ष्या भक्षणीयाः, प्रोक्ताः अभिहिताः, तेषां पूर्वोक्तानां, शशादीनाम् सृमरादीनां, 'शशकः शल्लकी गोधा खड्गी कूर्मोथ पञ्चमः। पञ्च पञ्चनखा भक्ष्या अनुष्ट्राश्चैकतोदतः' ॥ इति पद्योक्तानाम्, कपिः शाखामृगोऽहं वानरेन्द्रः, एकः अन्यतमः, अपि सम्भावनायाम्, न नहि ( अस्मीति शेषः )।

कोशः—'गन्धर्वः शरभो रामः सृमरो गवयः शशः'।

कृदन्तः—कृते जाता इत्यर्थे 'सप्तम्यां जनेर्डः ३।२।९७' इति डप्रत्यये कृतजाः, तैः। द्वाभ्यां जन्मसंस्काराभ्यां जाता द्विजाः, तैः। इहापि 'अन्येष्वपि दृश्यते ३।२।१०१' इति डः, पूर्ववत्कार्यम्। कौशल्यायाः जातः इत्यर्थे 'पञ्चम्यामजातौ ३।२।९८' इति डः, पूर्वकृत्यं चेति कौशल्याजः।

वाच्यपरिवर्तनम्—कृतजा द्विजा यान् पञ्चनखान् पञ्च भक्ष्यान् प्राहुः तेषां कपिना मया एकेन अपि न भूयते ॥ १३५ ॥

पुनरपि तथैवाभिधत्ते—

कथं दुःस्थः स्वयं धर्मे प्रजास् त्वं पालयिष्यसि।
आत्माऽनुजस्य जिह्लेषि सौमित्रेस् त्वं कथं न वा ॥ १३६ ॥

अन्वयः—धर्मे स्वयं दुःस्थः त्वं कथं प्रजाः पालयिष्यसि ? त्वम् आत्मानुजस्य सौमित्रेः कथं न वा जिह्लेषि ?

हिन्दी—धर्ममें खुद दृढ़ न रहनेवाले तुम कैसे प्रजाओंका पालन करोगे ? तुम अपने छोटे भाई लक्ष्मणसे ही क्यों नहीं लजाते ?

व्याख्या—धर्मे सुकृते, स्वयम् आत्मना, दुःस्थः अप्रतिष्ठितः, त्वम् रामः, कथं केन विधिना, प्रजाः जनान्, पालयिष्यसि रक्षिष्यसि । त्वम् रामः, आत्मानुजस्य निजकनिष्ठस्य, सौमित्रेः लक्ष्मणस्य, कथं कस्मात्, न वा नहि, जिह्रेषि लज्जसे ? क्व धर्मदुःस्थता क्व प्रजापालनतेति विषमालङ्कारः । ह्रीकारणसत्त्वे नह्रीरस्तीति विशेषोक्त्या सङ्करः ।

कृदन्तः—दुःखेन तिष्ठति इति विग्रहे 'सुपि स्थः ३।२।४' इति के दुःस्थः । 'वातश्चोपसर्गे ३।१।३३३' इत्यनेनापि को ज्ञेयः । प्रजायन्ते इत्यर्थे 'उपसर्गे च संज्ञायाम् ३।२।९९' इति डे, टिलोपे प्रजाः । आत्मानम् अनु जात इत्यर्थे 'अनौ कर्मणि ३।२।१००' इति डे आत्मानुजः, तस्य ।

तिङन्तः—ह्री लज्जायाम् इति जुहोत्यादिस्थ-धातोर्लटि 'जुहोत्यादिभ्यः श्लुः २।४।७५' इति श्लौ द्वित्वादिकार्ये जिह्रेषि ।

वाच्य०—दुःस्थेन त्वया प्रजाः कथं पालयिष्यन्ते, त्वया कथं न ह्रीयते । अथ च विगर्हते—

मन्ये किंज-महं घ्नन्तं त्वाम-क्षत्रिय-जे रणे ।
लक्ष्मणाऽधिज ! दुर्वृत्तम् प्रयुक्तमनुजेन नः ॥ १३७ ॥

अन्वयः—अरे लक्ष्मणाधिज ! नः अनुजेन प्रयुक्तम् अक्षत्रियजे रणे घ्नन्तं त्वाम् अहं किञ्जं दुर्वृत्तं मन्ये ।

हिन्दी—अरे लक्ष्मणके अग्रज ! मेरे छोटे भाईसे प्रेरित, क्षत्रियशून्य रणमें मारने वाले तुझे, मैं तो किसी ( कुपुरुष ) से पैदा हुआ दुश्चरित्र मानता हूँ ।

व्याख्या—अरे लक्ष्मणाधिज सौमित्र्यग्रज ! नः अस्माकम्, अनुजेन कनिष्ठेन सुग्रीवेण, प्रयुक्तम् प्रेरितम्, अक्षत्रियजे क्षत्रियशून्ये, रणे संग्रामे, घ्नन्तं मारयन्तम्, त्वाम् रामम्, अहम् बाली, किञ्जं कुतोऽपि जातम्, दुर्वृत्तम् दुश्चरित्रं, मन्ये उत्प्रेक्षे । उत्प्रेक्षालङ्कृतिः ।

कृदन्तः—अधिजातः इत्यर्थे 'उपसर्गे च संज्ञायाम् ३।२।९९' इत्यनेन असंज्ञायामपि डः, 'अन्येष्वपि दृश्यते ६।२।१०१' इत्यत्रापि-शब्दस्य सर्वोपाधिव्यभिचारित्वात् । अक्षत्रियाभ्यां जाते इति 'पञ्चम्यामजातौ३।२।९८'इति अजातिव्यभिचारेऽपि अनुजातः अनुजः । अत्र कर्मोपपदाभावेऽपि डः, अनौ कर्मणि ३।२।१००

इत्यस्य व्यभिचारः। कुतोऽपि जातः किञ्जः। अत्र 'सप्तम्यां जनेर्डः ३।२।९७' इत्यस्य व्यभिचारः। इत्येवं सर्वत्रापि 'अन्येष्वपि दृश्यते ३।२।१०१' इत्यनेनैव डः वाच्यः।

वाच्यपरिवर्तनम्—प्रयुक्तो घ्नन् त्वम् मया किञ्जः दुर्वृत्तो मन्यसे। इति सोपपद-कृदधिकारः ॥ १३७ ॥

सम्प्रति अनुपपदकृदधिकारं प्रदर्शयन् रामः प्रत्युत्तरमाख्याति त्रिभिः—

> प्रत्यूचे वालिनं रामो नाऽकृतं कृतवानहम्।
> यज्वभिः सुत्वभिः पूर्वैर्जरद्भिश् च कपीश्वर ॥ १३८॥

अन्वयः—रामः वालिनं प्रत्यूचे अये कपीश्वर! अहम् पूर्वैः यज्वभिः सुत्वभिः जरद्भिश्च अकृतं न कृतवान्।

हिन्दी—रामने बालीको जवाब दिया—हे कपिराज! मैंने प्राचीन विधिपूर्वक यज्ञकर्ताओं, सोमयाजियों तथा वृद्धोंके न किये हुए कार्यको नहीं किया है।

व्याख्या—रामः राघवः, वालिनं सुग्रीवाग्रजं कपीशम्, प्रत्यूचे अभिदधौ। कपीश्वर वानरराज! अहं रामः, पूर्वैः प्राचीनैः, यज्वभिः विधिवदिष्टिकारकैः, सुत्वभिः सोमयाजिभिः, जरद्भिः स्थविरैः, अकृतम् अननुष्ठितम्, न कृतवान् न अनुष्ठितवान्। वाल्युक्तस्यान्यथाकरणाद् व्याघातालङ्कारः।

कोशः—'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि'।

कृदन्तः—अकृतम् कृतवान् इति क्तक्तवतू 'निष्ठा ३।२।१०२' इति निष्ठाप्रत्ययौ। इष्टवन्त इति सुतवन्त इति विग्रहे 'सुयजोर्ङ्वनिप् ३।२।१०३' इति ङ्वनिप्। जीर्यन्ति स्मेति विग्रहे 'जीर्यतेरतृन् ३।२।१०४' इति जॄष् वयोहानौ इति दैवादिकात् अतृन्।

वाच्य०—रामेण वाली प्रत्यूचे, मया पूर्वैः अकृतम् न कृतम् ॥ १३८ ॥

किं तैः कृतमित्याख्याति—

> ते हि जालैर् गले पाशैस् तिरश्चामुपसेदुषाम्।
> ऊषुषां पर-दारैश् च सार्धं निधनमैषिषुः ॥ १३९ ॥

अन्वयः—हि यतः ते उपसेदुषां तिरश्चां परदारैः सार्धम् ऊषुषां च जालैः गले पाशैश्च निधनम् ऐषिषुः।

हिन्दी—क्योंकि उन्होंने उपद्रवी तिर्यग्योनिके जीवोंको (पशुपक्षियों) तथा दूसरेकी स्त्रियोंके साथ रहनेवालोंको जालोंसे तथा गलेमें फांसी लगाकर मार डालनेका आदेश दिया है।



व्याख्या—हि यतः, ते मन्वादयः वृद्धाः, उपसेदुषां उपसद्य समी...

रुपद्रविणाम्, तिरश्चाम् तिर्यग्योनिसत्त्वानाम् (पशुपक्षिणामिति यावत्), च तथा, परदारैः अन्येषां पत्नीभिः, सार्धम् सह, ऊषुषाम् तस्थुषां, (क्रमेण) जालैः वागुरादिभिः, गले कण्ठे, पाशैः बन्धनैश्च (गलावरोधैरित्यर्थः), निधनं मरणम्, ऐषिषुः अमंसत, आदिदिशुः इत्यर्थः । सहोक्तिरलङ्कारः, यथासंख्येन सङ्करश्च ।

कोशः—'भार्या जायाऽथ पुं भूम्नि दाराः स्यात्तु कुटुम्बिनी' ।

कृदन्तः—उपासेदुः इत्यर्थे 'भाषायां सदवसश्रुवः ३।२।१०८' इति क्वसुः । एवम् ऊषुषाम् शुश्रुवान् इत्यग्रे । तिरश्चामिति तिरोऽश्चन्तीत्यर्थे तिरस्पूर्वस्याञ्चतेः 'ऋत्विग्दधृक्० ३।२।५९' इति क्विन् । 'अचः ३।४।१३८' इत्यल्लोपे आमि रूपम् ।

तिङन्तः—इषु इच्छायामिति तौदादिकस्य लुङि, झेर्जुसि, इटि, गुणे, आटश्चेति वृद्धौ ऐषिषुः ।

वाच्यपरिवर्तनम्—तैः निधनम् ऐषि ॥ १३९ ॥

रामः स्वकर्मण औचित्यं दर्शयति—

अहं तु शुश्रुवान् भ्रात्रा स्त्रियं भुक्तां कनीयसा ।
उपेयिवाननूचानैर् निन्दितस् त्वं लता-मृग ! ॥ १४० ॥

अन्वयः—अये लतामृग ! अनूचानैः निन्दितः त्वम् कनीयसा भ्रात्रा भुक्ताम् स्त्रियम् उपेयिवान् इति तु अहम् शुश्रुवान् ।

हिन्दी—हे लतामृग ! मैंने सुना कि तुमने भाई द्वारा उपभोग की गयी स्त्रीको अपने यहाँ रखा है । तुम उसके पास जाते हो, जो वेदपाठियोंसे निन्दित कर्म है ।

व्याख्या—अये लतामृग कपे ! अनूचानैः साङ्गवेदाऽध्यायिभिः, निन्दितः गर्हितः, त्वम् बाली, कनीयसा कनिष्ठेन, भ्रात्रा सहोदरेण अनुजेनेत्यर्थः, भुक्ताम् कृतभोगाम्, स्त्रियम् योषितम्, उपेयिवान् संजग्मिवान्, इति एवं, तु किन्तु, अहं रामः, शुश्रुवान् आकर्णयामास ।

कोशः—'अनूचानः प्रवचने साङ्गेऽधीती गुरोऽस्तु यः ।
लब्धानुज्ञः समावृत्तः सुत्वा त्वभिषवे कृते' ॥

कृदन्तः—'उपेयिवान० ३।२।१०९' इति निपातितौ द्वौ ।

समासः—लताचारी मृगः लतामृगः । 'शाकपार्थिवादीनां सिद्धये मध्यमपदलोपो वक्तव्यः' इति समासः ।

वाच्यपरिवर्तनम्—मया तु 'उपेयिवांसम् निन्दितं त्वाम्' जना जानन्ति इति शुश्रुवे ॥ १४० ॥

(इति समासः ... प्रकीर्णाधिकारः । अथ ... )

वाली दोषं स्वीकुर्वन्नाह—

अन्वनैषीत् ततो बाली त्रपा-वानिव राघवम् ।
न्यक्षिपच् चाऽङ्गदं यत्नात् काकुत्स्थे तनयं प्रियम् ॥ १४१ ॥

अन्वयः—ततः बाली त्रपावान् इव राघवम् अन्वनैषीत् । प्रियं तनयम् अङ्गदं च यत्नात् काकुत्स्थे न्यक्षिपत् ।

हिन्दी—तब वाली लज्जित-सा होकर रामका अनुनय विनय करने लगा और अपने प्रिय पुत्र अङ्गदको रामचन्द्रकी गोदमें सौंप दिया ।

व्याख्या—ततः रामोक्त्यनन्तरम्, वाली वानरराजः, त्रपावान् लज्जितः, इव यथा, राघवम् रामम्, अन्वनैषीत् अनुनीतवान् । क्षम्यो मेऽपराध इत्याद्युक्तवान् । प्रियम् वल्लभं, तनयम् आत्मजम्, अङ्गदम् तन्नामकं, यत्नात् अभिनिवेशात्, काकुत्स्थे राघवे, न्यक्षिपत् न्यस्तवान् । उत्प्रेक्षालङ्कारः ।

कोशः—'मन्दाक्ष ह्रीस्त्रपा-व्रीडा-लज्जा साऽपत्रपान्यतः' ।

तिङन्तः—'लुङ् ३।२।११०' अन्वनैषीत् । 'अनद्यतने लङ् ३।२।१११' न्यक्षिपत् ।

वाच्यपरिवर्तनम्—वालिना त्रपावता इव राघवः अन्वनायि, प्रियस्तनयः अङ्गदश्च काकुत्स्थे न्यक्षिप्यत ।

शिक्षा—पश्चात्तापेन पापशुद्धिर्भवतीति आत्मशुद्धयर्थं बालिवद् व्यवहरणीयम् इति शिक्षयति पद्यम् ॥ १४१ ॥

वाली तथैव निवेदयति—

म्रियमाणः स सुग्रीवं प्रोचे सद्-भावमागतः ।
संभविष्याव एकस्यामभिजानासि मातरि ॥ १४२ ॥

अन्वयः—म्रियमाणः सद्भावम् आगतः स सुग्रीवं प्रोचे हे भ्रातः ! एकस्यां मातरि संभविष्यावः इति अभिजानासि ।

हिन्दी—मरते समय अच्छे भावको प्राप्त करता हुआ बाली सुग्रीवसे बोला—'हे भाई, तुम यह जानते ही हो कि हमारा जन्म एक ही मातासे है' ।

व्याख्या—म्रियमाणः प्राणान् त्यजन्, सद्भावम् साधुताम्, आगतः सम्प्राप्तः, स वाली, सुग्रीवं सोदरमनुजं, प्रोचे व्याजहार । हे भ्रातः हे अनुज ! एकस्याम् अभिन्नायाम्, मातरि जनन्याम्, सम्भविष्यावः समुपत्स्याव इति अभिजानासि अभिबुध्यसे । कारणेन कार्यसमर्थनादर्थान्तरन्यासालङ्कारः ।

कोशः—'जनयित्री प्रसूर्माता जननी भगिनी स्वसा' ।

तिङन्तः—'अभिज्ञावचने लृट् ३।२।११२' इति अनद्यतनेऽभिज्ञावचने लृटा ...भविष्यावः। विवक्षाभेदेन वर्तमानेऽपि 'प्रोचे' इत्यादि प्रयोगाः।

वाच्यपरिवर्तनम्—म्रियमाणेन आगतेन तेन सुग्रीवः प्रोचे सम्भाविष्यते ...वाभ्याम् अभिज्ञायते त्वया ॥ १४२ ॥

पुनः सहोदरत्वं स्पष्टीकरोति—

अवसाव नगेन्द्रेषु यत् पास्यावो मधूनि च।
अभिजानीहि तत् सर्वं बन्धूनां समयो ह्ययम् ॥ १४३ ॥

अन्वयः—हे भ्रातः! यत् नगेन्द्रेषु अवसाव, मधूनि च पास्यावः, तत् सर्वम् अभिजानीहि। (यतः) बन्धूनाम् अयम् समयः।

हिन्दी—हे भाई! हमलोग पर्वतराज (किष्किन्धाद्रि) पर रहते थे, मधुपान करते थे, वह सब भी जानते ही हो। बन्धुओंका यही समय है।

व्याख्या—हे भ्रातः, यत् हि, नगेन्द्रेषु पर्वतराजेषु, अवसाव उषितवांसौ। मधूनि, पुष्परसान् क्षौद्राणीति यावत्, पास्यावः पीतवन्तौ, तत् पूर्वानुभूतम् सर्वम् समस्तम्, अभिजानीहि अभिबुध्यस्व। बन्धूनाम् अत्यागसहानाम्, अयम् एषः, हि ..., समयः कालः। विशेषेण सामान्यसमर्थनमिति अर्थान्तरन्यासः। एक कारकेऽनेकक्रियाः इति दीपको वेति सन्देहसङ्करः।

तिङन्तः—'न यदि ३।२।११३' इति लृटः निषेधे लङ्। ततोऽग्रे 'विभाषा साकाङ्क्षे ३।२।११४' इति पक्षिके लृटि पास्यावः।

वाच्य०—नगेन्द्रेषु औष्यत, मधूनि पास्यन्ते, तत् सर्वम् अभिज्ञायताम्।

अन्तिमं वाक्यमाह वाली—

दैवं न विदधे नूनं युगपत् सुखमावयोः।
शश्वद् बभूव तद् दुःस्थं यतो ना इति हा ऽकरोत् ॥ १४४ ॥

अन्वयः—दैवं नूनं आवयोः सुखं युगपत् न विदधे। तत् (दैवं) शश्वत् दुःस्थं बभूव। यतः तत् (दैवम्) नौ इति ह अकरोत्।

हिन्दी—भाग्यने निश्चय ही हम दोनोंका सुख एक कालमें नहीं रखा था। वह सदा हमदोनोंका विपरीत रहा। तभी तो उसने हम दोनोंको ऐसा बनाया था। खेद है?

व्याख्या—दैवं भाग्यं, नूनं निश्चयेन, आवयोः उभयोः भ्रात्रोः, सुखम् आनन्दोपभोगम्, युगपत् एककालावच्छेदेन, न नहि, विदधे कृतवान्। तत् दैवम्, शश्वत् सदा, दुःस्थं प्रतिकूलं, बभूव आसीत्। यतः यस्मात् कारणात्, तत् दैवम्,

नौ आवाम् भ्रातरौ, इति ह एवं हि परस्परविरोधिनौ, अकरोत् चकार ( क्लेदः ) । विषमालङ्कारः ।

कोशः—'दैवं दिष्टं भागधेय भाग्यं स्त्री नियतिर्विधिः' ।

तिङन्तः—विदधे–धा धातोः 'परोक्षे लिट् ३।२।११५' इति लिटि विदधे 'हशश्वतोर्लङ् च ३।२।११६' ह योगे लङि अकरोत् ।

वाच्यपरिवर्तनम्—दैवेन सुखं न विदधे । तेन दुःस्थेन बभूवे । (तेन) आवाम् इति ह अक्रियावहि ॥ १४४ ॥

बालिन औदार्यमाह कविः—

> ददौ स दयितां भ्रात्रे मालां चाऽग्र्यां हिरण्मयीम् ।
> राज्यं संदिश्य भोगांश्च ममार व्रण-पीडितः ॥ १४५ ॥

अन्वयः—व्रणपीडितः स भ्रात्रे दयिताम् अग्र्यां हिरण्मयीं मालां च ददौ। राज्यं भोगान् च सन्दिश्य ममार ।

हिन्दी—बाणके घावसे दुःखित उस बालीने भाईको प्रिया और सर्वश्रेष्ठ सुवर्णकी माला दे दी । राज्य और भोगोंको बताकर प्राण त्याग दिया ।

व्याख्या—व्रणपीडितः प्रहार-व्यथितः, स बाली वानरेन्द्रः, भ्रात्रे सुग्रीवाय दयितां तदीयां प्रियाम्, अग्र्यां सर्वश्रेष्ठां, हिरण्मयीं सौवर्णीं, मालां च माल्यं च, ददौ उत्ससर्ज । राज्यं किष्किन्धाशासनम्, भोगान् उपभोगसम्पत्तीः च, संदिश्य समर्प्य, ममार प्राणान् तत्याज । वालिनोऽनेकक्रियान्वयाद्दीपकः ।

कोशः—'अभीष्टे ऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्' ।

तिङन्तः—मृङ् प्राणत्यागे इति धातोः 'म्रियतेर्लुङ्लिङोश्च १।३।६१' इति नियमाल्लिटि परस्मैपदम् ।

वाच्यपरिवर्तनम्—व्रणपीडितेन भ्रात्रे दयिता अग्र्या हिरण्मयी माला च ददे । राज्यं भोगान् समर्प्य मम्रे च ॥ १४५ ॥

उपसंहरति सुग्रीव-संवादम्—

> तस्य निर्वर्त्य कर्तव्यं सुग्रीवो राघवाऽऽज्ञया ।
> किष्किन्धाऽद्रिगुहां गन्तुम् मनः प्रणिदधे द्रुतम् ॥ १४६ ॥

अन्वयः—सुग्रीवः रामाज्ञया तस्य कर्तव्यं निर्वर्त्य द्रुतं किष्किन्धाद्रिगुहां गन्तुं मनः प्रणिदधे ।

हिन्दी—सुग्रीवने रामचन्द्रजीकी आज्ञासे उसके (बालीके) ( और्ध्वदैहिक ) कर्मको समाप्त कर शीघ्र किष्किन्धाचलकी गुफा में जानेको सोचा ।

व्याख्या—सुग्रीवः सम्प्रति कपिराजः, रामाज्ञया रामचन्द्रादेशेन, तस्य वालिनः, कर्तव्यम् और्ध्वदैहिकं कार्य्यं, निर्वर्त्य सम्पाद्य, किष्किन्धाद्रिगुहां किष्किन्धाचलगह्वरम्, गन्तुम् व्रजितुम्, मनः स्वान्तम्, प्रणिदधे संचस्कार। सुग्रीवस्य क्रियाद्वये सम्बन्धाद्दीपकः।

तिङन्तः—प्रणिदधे इति 'प्रश्ने चासन्नकाले ३।२।११७' इति 'गच्छ शरदि पुनरेहि' इत्यर्थे लिट्। 'नेर्गद० ८।४।१७' णत्वम्।

वाच्यपरिवर्तनम्—सुग्रीवेण मनः प्रणिदधे ॥ १४६ ॥

सुग्रीवस्य किष्किन्धाद्रिप्रवेशं सर्गसमाप्त्या सहैवाह—

नाम-ग्राहं कपिभिरशनैः स्तूयमानः समन्ता-
दन्वग्भावं रघु-वृषभयोर् वानरेन्द्रो विराजन्।
अभ्यर्णेऽम्भः-पतन-समये पर्णलीभूत-सानुं
किष्किन्धाद्रिं न्यविशत मधु-क्षीब-गुञ्जद्-द्विरेफम् ॥१४७॥

अन्वयः—कपिभिः नामग्राहम् सर्वतः अशनैः स्तूयमानः रघुवृषभयोः अन्वग्भावं विराजन् वानरेन्द्रः ( सुग्रीवः ) अभ्यर्णे अम्भःपतनसमये पर्णलीभूतसानुम् मधुक्षीबगुञ्जद्द्विरेफम् किष्किन्धाद्रिं न्यविशत।

हिन्दी—वानरोंके द्वारा नाम लेलेकर (वानरराज सुग्रीवकी जय हो) चारों ओरसे जोरोंसे स्तुति किये गये रामचन्द्र और लक्ष्मणजीके पीछे चलने वाले वानरराज सुग्रीवने, जल गिरनेके समयके समीप आनेसे, पत्तियोंसे युक्त शिखर वाले मधुपीनेसे मतवाले भ्रमरोंसे गुञ्जायमान, किष्किन्धा नामके पर्वतपर प्रवेश किया।

व्याख्या—कपिभिः कीशैः, नामग्राहम् अभिधानोच्चारणपूर्वम्, सर्वतः समन्तात्, अशनैः तारस्वरैः, स्तूयमानः जयनादैः वन्द्यमानः, रघुवृषभयोः रघुश्रेष्ठयोः, अन्वग्भावं पश्चाद्गमं, विराजन् शोभमानः, वानरेन्द्रः सुग्रीवः, अभ्यर्णे आसन्ने, अम्भःपतनसमये अम्बुप्रपातकाले वर्षर्तावित्यर्थः, पर्णलीभूतसानुम् नवपत्रसम्भृतशिखरम्, मधुक्षीबगुञ्जद्द्विरेफम् पुष्परसपानप्रमत्तमधुकरम्, किष्किन्धाद्रिम् किष्किन्धाचलं, न्यविशत प्रविवेश। 'मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनो तौ गयुग्मम्' इतिमन्दाक्रान्ता छन्दः। समेन सह विषमालङ्कारः। अतः सङ्करः।

कोशः—'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्'।
'अम्भोऽर्णस्तोय-पानीय-नीर-क्षीराम्बु-शम्बरम्'।

समासः—अम्भसां पतनम्, तस्य समयः, तस्मिन्। पर्णलीभूताः सानवो यस्य सः, तम्। मधुभिः क्षीबाः गुञ्जन्तः द्विरेफाः यस्मिन् सः, तम्।

तद्धितः—पर्णानि सन्ति येषाम् ते पर्णलाः 'सिध्मादिभ्यश्च ५।२।९७' इति लच्प्रत्यये पर्णलशब्दसिद्धौ ततः अपर्णला पर्णलाः सम्भूता इत्यर्थे 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ५।४।५०' इति च्विप्रत्यये 'अस्य च्वौ ७।४।३२' इतीत्वे पर्णलीभूताः।

कृदन्तः—नाम गृहीत्वा इत्यर्थे 'नाम्न्यादिशिग्रहोः ३।४।५८' इति णमुलि, 'अत उपधायाः ७।२।११६' इति वृद्धौ नामग्राहम्। ष्टुञ्-स्तुतौ इति आदादिकात् धातोः कर्मणि लटि 'लक्षणहेत्वोः क्रियायाः ३।२।१२६' इति शानचि 'सार्वधातुके यक् ३।१।६७' इति यकि, मुगागमे स्तूयमानः। क्षीव इति 'अनुपसर्गात् फुल्लक्षीब० ८।२।५५' इति निपात्यते।

तिङन्तः—निपूर्वकात् तौदादिकाद् विश धातोः 'नेर्विशः १।३।१७' इत्यात्मनेपदे लङि न्यविशत।

वाच्यपरिवर्तनम्—स्तूयमानेन विराजता वानरेन्द्रेण पर्णलीभूतसानुः मधुक्षीवगुञ्जद्द्विरेफः किष्किन्धाद्रिः न्यविश्यत ॥ १४७ ॥

इति श्री अधिकारकाण्डे रावणवधाभिधे भट्टिमहाकाव्ये
सुग्रीवाभिषेको नाम षष्ठः सर्गः समाप्तः।

❀ ❀ ❀ ❀

# अथ सप्तमः सर्गः

पञ्चमसर्गीयसप्तनवतितमपद्यतः प्रारब्धमधिकारकाण्डमितोऽपि नवसर्गान्तं विस्तृतमस्ति। तत्र ३।२।११८–१३३ सूत्राणि तु प्रकीर्णके उदाहृत्य पुनः 'आक्वे-स्तच्छीलतद्धर्मतत्साधुकारिषु ३।२।१३४' इत्यधिकारे क्रमशः' तृन् ३।२।१३५' इत्यादि प्रत्ययाधिकारः। इतः प्रयोगसिद्धौ केवल सूत्रमात्रोल्लेखः स्यात्। सिद्धिस्तु स्वयं छात्रैः कार्य्या। षष्ठसर्गान्तं मत्कृतसिद्धिप्रकारं ज्ञात्वा ते प्रवीणा जाताः सन्तीति मन्ये। कोशः शिक्षा च यत्र कुत्रैव दत्ते स्यातामित्यलम्।

तत्र त्रिभिः पद्यैर्वर्षर्तुं वर्णयति कविः—

ततः कर्ता वनाऽऽकम्पं ववौ वर्षा-प्रभञ्जनः।
नभः पूरयितारश् च समुन्नेमुः पयोधराः॥ १॥

अन्वयः—ततः वनाकम्पं कर्ता वर्षाप्रभञ्जनः ववौ। नभः पूरयितारः पयोधराः च समुन्नेमुः।

हिन्दी—सुग्रीवके राज्याभिषेकके बाद वनोंको धीरे-धीरे कँपानेवाला वायु बहने लगा[1]। आकाशमें व्याप्त होनेवाले मेघ भी उमड़ पड़े।

व्याख्या—ततः सुग्रीवस्य राज्याभिषेकानन्तरम्, वनाकम्पं काननेषद्धूननं, साधु विदधत्, वर्षाप्रभञ्जनः प्रावृट्पवनः, ववौ वाति स्म। नभः व्योम, पूरयितारः पूरणशीलाः, पयोधराः अब्दाः, च पुनः, समुन्नेमुः संव्यापुः। समुच्चयालङ्कारः, समाधिश्चेति सङ्करः।

कोशः—'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ सरित् स्त्रियाम्।'
'नभस्वद्वातपवन-पवमान-प्रभञ्जनाः'।
'स्त्रीस्तनाब्दौ पयोधरौ'—इत्याद्यमरः।

कृदन्तः—कर्ता—डुकृञ् करणे इति तानादिकात्, पूरयितारः पूरी आप्यायने

(१) हिन्दीमें हवा शब्द स्त्रीलिङ्ग है। संस्कृतमें वायु तो पुंलिङ्ग ही रहेगा। वह हिन्दीके ढंग पर प्रयुक्त नहीं होगा। हिन्दी हितैषी लोग विकल्प-लिङ्गद्वारा अपना कोश शुद्ध कर लें। यों ही आत्मा, धातु, अग्नि इत्यादि संस्कृत शब्दोंका उभय लिङ्ग रखें।

इति चौरादिकात् 'तृन् ३।२।१३५' इति तृन् प्रत्ययः। 'न लोकाव्यय० २।३।६९' इति कर्मषष्ठीनिषेधः।

तिङन्तः—वा गतिगन्धनयोः इति आदादिकात्, णम प्रह्वत्वे शब्दे च इति भौवादिकात् लिटि 'आत औ णलः ७।१।३४' इति णल औकारः। 'अत एक० ६।४।१२०' इति एत्वाभ्यासलोपौ।

वाच्यपरिवर्तनम्—कर्त्रा प्रभञ्जनेन ववे। पूरयितृभिः पयोधरैः समुन्नेमे।

शिक्षा—नियतिरैश्वरी यथाविधानमेव जगच्चालयतीति ॥ १ ॥

युग्मेन मेघवृष्टिमाख्याति—

> तर्पणं प्रजनिष्णूनां शस्यानाम-मलं पयः ।
> रोचिष्णवः स-विस्फूर्जा मुमुचुर् भिन्न-वद् घनाः ॥
> निराकरिष्णवो भानुं दिवं वर्तिष्णवोऽभितः ।
> अलङ्करिष्णवो भान्तस् तडित्वन्तश् चरिष्णवः ॥ २-३ ॥

अन्वयः—रोचिष्णवः सविस्फूर्जाः भानुं निराकरिष्णवः दिवम् अभितः वर्तिष्णवः तडित्वन्तः भान्तः अलङ्करिष्णवः घनाः प्रजनिष्णूनां शस्यानां तर्पणं अमलं पयः भिन्नवत् मुमुचुः।

हिन्दी—शोभायमान, वज्रनिर्घोष करनेवाले, सूर्यको ढक देनेवाले, आकाशमें सर्वत्र व्याप्त, विद्युत् वाले होनेके कारण स्वयं चमकने वाले एवं शोभा बढ़ानेवाले मेघ, बढ़नेवाले धान्योंके लिए तृप्तिकारी शुद्ध जल, फूटे घड़ेके समान बरसाने लगे।

व्याख्या—रोचिष्णवः दीप्राः, सविस्फूर्जाः वज्रनिर्घोषाः, भानुं रविं, निराकरिष्णवः तिरस्कर्तारः, दिवं द्याम्, अभितः सर्वतः, वर्तिष्णवः व्याप्ताः, तडित्वन्तः विद्युच्छालिनः, अत एव भान्तः दीप्तिमन्तः ( दीप्यमाना इति यावत् ) अलङ्करिष्णवः दिशोऽलङ्कर्तारः, घनाः जीमूताः, प्रजनिष्णूनां प्रादुर्भविष्णूनां शस्यानां धान्यानां, तर्पणं तृप्तिकरं, पयः जलं, भिन्नवत् विदीर्णघटवत्, मुमुचुः ववृपुः। उपमापरिकरानुप्रासादीनां छटा दर्शनीया।

कोशः—'घन-जीमूत-मुदिर-जलमुग्धूमयोनयः'।

'वृक्षादीनां फलं शस्यम्'।

'शस्यं क्षेत्रगतं प्राहुः सतुपं धान्यमुच्यते।
नितुषस्तण्डुलः प्रोक्तः सिद्धमन्नमुदाहृतम्' ॥ इति।

कृदन्तः—'अलङ्कृञ्-निराकृञ् ३।२।१३६' इति सर्वत्रेष्णुच् प्रत्ययः (५-६)

तर्पणम्-इत्यत्र तृप् प्रीणने इति दैवादिकात् 'कृत्यल्युटो० ३।३।११३' इति ल्युट् कर्तरि। नन्द्यादेराकृतिगणत्वाद्वा कर्तरि ल्युट्।

तद्धितः—भिन्नैस्तुल्यमित्यर्थे 'तेन तुल्यं० ५।१।११५' इति वतिः। तडित्वन्तः 'तदस्यास्त्य० ५।२।९४' इति मतुप्। 'झयः ८।२।१०' इति वत्वम्। 'तसौ मत्वर्थे १।४।१९' इति भत्वाज्जश्त्वं न। 'अभितः परितः'० इति दिवमित्यत्र द्वितीया।

वाच्यपरिवर्तनम्—रोचिष्णुभिः इत्यादिभिः मुमुचे पयः। इति।

शिक्षा—ईश्वरेण नियत्या प्राणिनां जीवनोपायो वर्षाकालः शाश्वतिकोऽद्भुतो विहितोऽस्तीति ॥ २–३ ॥

मेघागमे रामावस्थां कविः स्वयमाख्याति द्वाभ्याम्—

तान् विलोक्याऽसहिष्णुः सन् विललापोन्मदिष्णु-वत्।
वसन् माल्यवति ग्लास्नू रामो जिष्णुर-धृष्णु-वत् ॥ ४ ॥

अन्वयः—माल्यवति वसन् जिष्णुः रामः तान् विलोक्य असहिष्णुः ग्लास्नुः सन् उन्मदिष्णुवद् अधृष्णुवत् विललाप।'

हिन्दी—माल्यवान् नामके पर्वत पर रहते हुए विजयी राम उन मेघोंको देखकर अधीर तथा खिन्न होकर उन्मत्त और बेचैन पुरुषके समान विलाप करने लगे।

व्याख्या—माल्यवति माल्यवन्नाम्नि गिरौ, वसन् तिष्ठन्, जिष्णुः जित्वरः, रामः राघवः, तान् उपरि वर्णितान् मेघानित्यर्थः, विलोक्य वीक्ष्य, असहिष्णुः असहनशीलः, ग्लास्नुः ग्लानशीलः, सन् भवन्, उन्मदिष्णुवत् सोन्मादः, अधृष्णुवत्, अप्रगल्भवत्, विललाप शुशोच। उपमालङ्कारः।

कोशः—'सहिष्णुः सहनः क्षन्ता'। 'सोन्मादस्तून्मदिष्णुः स्यात्'।
'जेता जिष्णुश्च जित्वरः'।

कृदन्तः—ग्लास्नुः जिष्णुः इत्यत्र 'ग्लाजिस्थश्च ग्स्नुः ३।२।१३९' इति ग्स्नुः। धृष्णुरित्यत्र 'त्रसिगृधि० ३।२।१४०' इति क्नुः क्रमाज्ज्ञेयः। वसन् इत्यत्र विललापेति परोक्षलिटा सम्बन्धे—'धातुसम्बन्धे प्रत्ययाः ३।४।१' इति परोक्षभूते लट्, तत्स्थाने 'लटः शतृ ३।२।१२३' इति शतृप्रत्ययः।

तिङन्तः—लप-व्यक्तायां वाचि इति भौवादिकस्य परोक्षे लिटि विललापेति।

वाच्य०—वसता जिष्णुना रामेण असहिष्णुना ग्लास्नुना सता विलेपे।



शिक्षा—प्रियवियोगो धीरानपि विक्लेदयत्येवेति त्रयोदशपद्यान्तं शिक्षा ॥४॥

विलापमेव समर्थयति कविः—

भ्रमी कदम्ब-संभिन्नः पवनः शमिनामपि ।
क्लमित्वं कुरुतेऽत्यर्थं मेघ-शीकर-शीतलः ॥ ५ ॥

अन्वयः—( यतः ) भ्रमी कदम्ब-सम्भिन्नः मेघशीकरशीतलः पवनः शमिनाम् अपि अत्यर्थं क्लमित्वं कुरुते ।

हिन्दी—(क्योंकि) भ्रमणशील, कदम्बपुष्पगन्धी एवं मेघजल-कणोंसे शीतल वायुदेव शान्त मुनियोंको भी अत्यन्त बेचैन कर देते हैं तो औरोंकी क्या कथा?

व्याख्या—( यतः ) भ्रमी भ्रमणशीलः, कदम्ब-सम्भिन्नः नीप-पुष्प-गन्ध-संश्लिष्टः, मेघ-शीकरशीतलः घनाम्बुकणक्लिन्नः, पवनः वायुः, शमिनां शान्तिशालिनां मुनीनामिति यावत्, अपि किमुतान्येषामिति, अत्यर्थम् अत्यन्तम् क्लमित्वम् उद्वेगं, कुरुते करोति । कैमुतिकन्यायेनार्थापत्त्यलङ्कारः ।

कोशः—'धारासम्पात आसारः शीकरोऽम्बु-कणाः स्मृताः' ।
'तूलं च नीपप्रियक-कदम्बास्तु हरिप्रियाः'—इत्यमरः ।

समासः—मेघानां शीकरैः शीतलः इति विगृह्य तत्पुरुषो ज्ञेयः ।

कृदन्तः—भ्रमी, शमिनाम्, क्लमित्वमित्यत्र 'शमित्यष्टाभ्यो घिनुण् ३।२।१४१' इति घिनुण्, 'नोदात्तोप० ७।३।३४' इत्युपधा-वृद्धि-निषेधः ।

वाच्यपरिवर्तनम्—भ्रमिणा पवनेन क्लमित्वं क्रियते ॥ ५ ॥

इतो द्वादशपद्यान्तं रामः स्वयं विविधं विलपति—

संज्वारिणेव मनसा ध्वान्तमायासिना मया ।
द्रोहि खद्योत-संपर्कि नयनामोषि दुःसहम् ॥ ६ ॥

अन्वयः—संज्वारिणा मया ( कर्त्रा ) आयासिना मनसा ( करणेन ) द्रोहि खद्योतसम्पर्कि नयनामोषि ध्वान्तं दुःसहम् ।

हिन्दी—ज्वरवाले रोगीके समान मेरे आयासी मनद्वारा, द्रोही जुगनुओंसे युक्त नेत्रवृत्तिको रोकनेवाला अन्धकार सहा नहीं जायगा ।

व्याख्या—सञ्ज्वारिणा ज्वररोगिणा इव यथा, मया रामेण (कर्त्रा), आयासिना प्रयत्न-शीलेन, मनसा चेतसा ( करणेन ), द्रोहि अपकारि, खद्योतसम्पर्कि ज्योतिरिङ्गण-संसर्गि, नयनामोषि नेत्रवृत्तिनिरोधि, ध्वान्तं तमः, दुःसहम् दुर्मर्षणीयम् । उपमाऽतिशयोक्तिसङ्करः ।

कोशः—'समौ पतङ्गशलभौ; खद्योतो ज्योतिरिङ्गणः' ।
'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' ।

'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः'—इत्यमरः ।

कृदन्तः—इतः श्लोकपञ्चकेन १० दशमपद्यान्तम् 'सम्पृचा० ३।२।१४२' इति सूत्रोदाहरणान्येव संज्वारिणेत्यारभ्य त्यागिनं यावद् दत्तानि ज्ञेयानि । तत्रोप-धावृद्धिगुणौ यथा प्राप्तं 'चजोः कु घिण्ण्यतोः ७।३।५२' इति कुत्वं च ज्ञेयम् ।

वाच्यपरिवर्तनम्—संज्वरी अहम् तमः दुःसहेय ।। ६ ।।

प्रकारान्तरेण रामस्य व्यथामाह—

कुर्वन्ति परिसारिण्यो विद्युतः परिदेविनम् ।
अभ्याघातिभिरामिश्राश् चातकैः परिराटिभिः ।। ७ ।।

अन्वयः—परिराटिभिः अभ्यघातिभिः चातकैः आमिश्राः परिसारिण्यः विद्युतः (मां) परिदेविनं कुर्वन्ति ।

हिन्दी—शब्दकारी तथा आघातकारी चातक पक्षियोंसे युक्त चारों ओर बिखरी हुई बिजलियाँ मुझे व्यथित कर रही हैं ।

व्याख्या—परिराटिभिः परिक्रन्दनशीलैः, अभ्याघातिभिः दुःखदशीलैः, चातकैः तोककैः, आमिश्राः मिलिताः, विद्युतः तडितः, (मां रामं) परिदेविनं विलापिनं, कुर्वन्ति विदधति । वाराङ्गनात्वविटत्वादि निगीर्य विद्युच्चातकोक्तिरतिशयोक्तिः ।

कोशः—'दार्वाघाटोऽथ सारङ्गः स्तोककश्चातकः समाः' ।
'तडित्सौदामनी विद्युत्' । 'विलापः परिदेवनम्'—इत्यमरः ।

कृदन्तः—रट-परिभाषणे, हन-हिंसागत्योः, सृ-गतौ, देवृ-देवने—इत्यादयो धातवोऽपि घिनुणन्ताः धातुपाठात् ग्राह्याः ।

वाच्यपरिवर्तनम्—आमिश्राभिः विद्युद्भिः परिदेवी (अहम्) क्रिये ।। ७ ।।

रामः स्वकीयां विषमतां प्रकारान्तरेण व्यनक्ति—

संसर्गी परिदाहीव शीतो ऽप्याभाति शीकरः ।
सोढुमाक्रीडिनो ऽशक्याः शिखिनः परिवादिनः ।। ८ ।।

अन्वयः—संसर्गी शीतः अपि शीकरः परिदाही इव आभाति । अपि च आक्रीडिनः परिवादिनः शिखिनः सोढुम् अशक्याः ।

हिन्दी—अङ्गस्पर्श करनेवाले ठण्ढे जलकण भी जलानेवाले-से ज्ञात होते हैं, और नाचनेवाले एवं शब्द करनेवाले मयूर भाते नहीं हैं ।

व्याख्या—संसर्गी सम्पर्कशीलः, शीतः शीतलः, अपि सम्भावितः, शीकरः वर्षाम्बुकणः, परिदाही परिदग्धा, इव यथा, आभाति भासते । अपि च अन्यदपि, आक्रीडिनः नर्तनशीलाः, परिवादिनः परिवदनशीलाः कूजन्त इत्यर्थः, शिखिनः

केकिनः, सोढुम् मर्षितुम्, अशक्या. असह्याः । सर्वे मां मारयिष्यन्तीति भाति। उत्प्रेक्षागर्भिता विषमालङ्कृतिः ।

कोशः—'शिखावलः शिखी केकी मेघनादानुलास्यपि' ।

वाच्यपरिवर्तनम्—संसर्गिणा शीतेन शीकरेण परिदाहिना आभायते। आक्रोडिभिः परिवादिभिः शिखिभिः सोढुम् अशक्यैः भूयते ॥ ८ ॥

पुनस्तथैव आचष्टे—

> एता देवानुरोधिन्यो द्वेषिण्य इव रागिणम् ।
> पीडयन्ति जनं धाराः पतन्त्यो ऽनपकारिणम् ॥ ९ ॥

अन्वयः—एता देवानुरोधिन्यः पतन्त्यः धाराः द्वेषिण्यः इव अनपकारिणम् अपि रागिणम् न पीडयन्ति ।

हिन्दी—ये भाग्यानुकूल गिरनेवाली जलधाराएँ शत्रुके समान अपराध न करनेवाले प्रेमी जनको भी पीड़ित कर रही हैं।

व्याख्या—एताः प्रत्यक्षं दृश्यमानाः, देवानुरोधिन्यः भाग्यायत्ताः, पतन्त्यः गलन्त्यः, धाराः जलसन्ततयः, द्वेषिण्यः द्वेषणशीलाः, इव यथा, अनपकारिणम् अविरोधिनम् (अपि), रागिणम् प्रेमासक्तं कामिनमित्यर्थः, जनं लोकम्, पीडयन्ति व्यथयन्ति । उपमाविषमयोः सङ्करः ।

कोशः—'लोकस्तु भुवने जने'—इत्यमरः ।

वाच्यपरिवर्तनम्—एताभिः देवानुरोधिनीभिः पतन्तीभिः धाराभिः द्वेषिणीभिः अनपकारी रागी जनः पीड्यते ॥ ९ ॥

विरहव्यथामेव द्रढयति—

> कुर्याद् योगिनमप्येष स्फूर्जा-वान् परिमोहिनम् ।
> त्यागिनं सुख-दुःखस्य परिक्षेप्यम्भसामृतुः ॥ १० ॥

अन्वयः—एषः स्फूर्जावान् अम्भसां परिक्षेपी ऋतुः सुखदुःखस्य त्यागिनं योगिनम् अपि परिमोहिनम् कुर्यात् ।

हिन्दी—यह वज्रनिर्घोष करनेवाला वर्षाऋतु सुखदुःखसे परे रहनेवाले योगीको भी परिमोहित करेगा, औरोंकी क्या कथा ?

व्याख्या—स्फूर्जावान् वज्रनिर्घोषयुक्तः, अम्भसां जलानाम्, परिक्षेपी त्यागी, ऋतुः वर्षर्तुः, सुखदुःखस्य द्वन्द्वस्य, त्यागिनं परिहर्तारं, योगिनम् योगशीलं समाधिप्रियमित्यर्थः, अपि सम्भावितं ( जनमिति शेषः ), परिमोहिनम् मुग्धं, कुर्यात् विदध्यात् । किमुतान्यमित्यर्थापत्तिरलङ्कारः ।

समासः—सुखं च दुःखं चेति द्वन्द्वे 'विप्रतिषिद्धं चानधिकरणवाचि २।४।१३' इति वैकल्पिके एकवद्भावे कर्मणि षष्ठी ।

कृदन्तः—टुओस्फूर्जा वज्रनिर्घोषे इति धातोः 'गुरोश्च हलः ३।३।१०३' इति प्रत्यये, टापि, मतुप् । सम्पृचेत्यादि-धातुभ्यो घिनुण् समासः ।

वाच्यपरिवर्तनम्—एतेन ऋतुना त्यागी परिमोही क्रियेत ॥ १० ॥

स्वकीयानशान्ति हि प्रकटयति—

> विकत्थी याचते प्रत्तम-विश्रम्भी मुहुर् जलम् ।
> पर्जन्यं चातकः पक्षी निकृन्तन्निव मानसम् ॥ ११ ॥

अन्वयः—विकत्थी अविश्रम्भी चातकः पक्षी मानसं निकृन्तन् इव पर्जन्यं प्रत्तं जलं मुहुः याचते ।

हिन्दी—गर्वीला अविश्वासी चातक ( पपीहा ) पक्षी मेरे मनको कुरेदता हुआ 'मुझे जल देगा' इस धारणासे मेघसे बारंवार याचना कर रहा है ।

व्याख्या—विकत्थी विकत्थनशीलः ( पर्जन्यादन्यं नाहं याचे इत्यात्मश्लाघी ), अविश्रम्भी अविश्वसनशीलः (दद्यान्न दद्यादिति विश्वासहीनः), चातकः सारङ्गः, पक्षी विहगः, मानसं ( मे ) मनः, निकृन्तन् छिन्दन्, इव यथा, पर्जन्यं जलदं मेघमित्यर्थः, प्रत्तं पर्णं दत्तं ( न तु भूमौ तस्य चातकानां विषप्रायत्वादग्राह्यत्वम् ), जलं सलिलं, मुहुः पौनःपुन्येन, याचते भिक्षते । याचेर्द्विकर्मकत्वात् पर्जन्यमिति गौणं कर्म । उत्प्रेक्षातिशयोक्तिश्चोपमेयनिगरणात् ।

कोशः—'पर्जन्यो रसदब्देन्द्रौ' । 'स्वान्तं हृन्मानसं मनः' —इत्यमरः ।

कृदन्तः—प्रत्तम् इति 'अच उपसर्गात्तः ७।४।४७' इति तादेशः । 'वौ कषलसकत्थस्रम्भः ३।२।१४३' इत्युभयत्रापि घिनुण् ।

वाच्यपरिवर्तनम्—विकत्थिना चातकेन पक्षिणा पर्जन्यः जलं याच्यते ॥ ११ ॥

हार्दिकीं पीडां व्यनक्ति—

> प्रलापिनो भविष्यन्ति कदा न्वेते ऽपलापिणः ।
> प्रमाथिनो वियुक्तानां हिंसकाः पाप-दर्दुराः ॥ १२ ॥

अन्वयः—प्रलापिनः प्रमाथिनः वियुक्तानां हिंसकाः एते पापदर्दुराः कदा नु अपलापिणः भविष्यन्ति ।

हिन्दी—बकवादी चित्तप्रमाथी अत एव विरहियोंको तड़पानेवाले ये पापी मेंढक कब विफल मनोरथ होंगे ?

व्याख्या—प्रलापिनः प्रलपन-शीलाः व्यर्थराविण इत्यर्थः, प्रमाथिनः

प्रमथनशीलाः कर्णकठोरत्वात् असह्यशब्दा इत्यर्थः, वियुक्तानां वियोगिनां मादृशानां ( तु ), हिंसकाः घातुका एव, एते प्रत्यक्षस्थाः पापदर्दुराः दुष्टभेकाः, कदा कस्मिन् काले, नु वितर्के, अपलाषिणः भग्नमनोरथाः, भविष्यन्ति संपत्स्यन्ते ? अकारणे कारणत्वारोपादतिशयोक्तिर्भेदेऽभेदारोपाच्च ।

कोशः—'दर्दुरस्तोयदे भेके' (इति विश्वः) । 'प्रलापोऽनर्थकं वचः'—इत्यमरः।

कृदन्तः—अपलाषिणः इति 'अपे च लषः ३।२।१४४' इत्यनेन, प्रलापिनः प्रमाथिन इत्यत्र 'प्रे लपसृद्रुमथ० ३।२।१४५' इति घिनुण् । हिंसका इति 'निन्द-हिंस० ३।२।१४६' इति वुञ् ।

तद्धितः—'सर्वैकान्यकियत्तदः काले दा ५।३।१५' इति दाप्रत्यये, 'किमः कः ७।२।१०३' इति कादेशः ।

वाच्यपरिवर्तनम्—प्रलापिभिः एतैः दर्दुरैः कदा भाविष्यते ।। १२ ॥

सम्प्रति कविरुपसंहरति रामविलापम्—

निन्दको रजनिंमन्यं दिवसं क्लेशको निशाम् ।
प्रावृष्यनैषीत् काकुत्स्थः कथंचित् परिदेवकः ॥ १३ ॥

अन्वयः—निन्दकः क्लेशकः परिदेवकः काकुत्स्थः प्रावृषि रजनिंमन्यं दिवसं निशां च कथंचित् अनैषीत् ।

हिन्दी—पूर्वोक्त प्रकारसे निन्दा करनेवाले, क्लेश सहनेवाले, विलाप करनेवाले राम, वर्षा-ऋतुमें अन्धकारके कारण अपनेको रात समझने वाले दिनको तथा रात्रिको, किसी प्रकार व्यतीत करने लगे ।

व्याख्या—निन्दकः अवमन्ता ( पूर्वोक्तरीत्या वार्षिक-पदार्थानामिति शेषः ) क्लेशकः क्लिश्यन् दुःखी भवन्, परिदेवकः विलपिता, काकुत्स्थः राघवः, प्रावृषि वर्षतौ, रजनिम्मन्यं रात्रिमानिनं, दिवसं घस्रं, निशां क्षपां ( च ), कथंचित् केनापि प्रकारेण महता कष्टेनेत्यर्थः, अनैषीत् व्यत्ययापयत् । अत्र केषांचिन्मते 'न लोकाव्यय० २।३।६९' इति सूत्रे तृन्निति शीलार्थस्य वुञोऽपि उपलक्षणत्वात् निन्दक इत्यनेन सम्बन्धस्ततश्च षष्ठीनिषेध इत्यलम् । उत्प्रेक्षातिशयोक्तिः सह्येऽसह्यत्वारोपिका ।

कोशः—'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' ।

कृदन्तः—रजनिम्मन्यम् इति 'आत्ममाने खश्च ३।२।८३' इति खशि 'खित्यनव्ययस्य ६।३।६६' इति ह्रस्वे 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुम् । पूर्वपद सर्वत्र वुञ् । 'देविक्रुशोश्चोपसर्गे ३।२।१४७' इति वुञि परिदेवकः ।

वाच्य०—निन्दकेन क्लेशकेन काकुत्स्थेन दिवसः निशा च अनायि ॥१३॥

अथ कविः शरद उपक्रमं कुर्वन् रामकृत्यमाख्याति—

अथोपशरदे ऽपश्यत् क्रौञ्चानां चेष्टनैः कुलैः।
उत्कण्ठा-वर्धनैः शुभ्रं रवणैरम्बरं ततम् ॥ १४ ॥

अन्वयः—अथ ( रामः ) उपशरदे चेष्टनैः उत्कण्ठावर्द्धनैः रवणैः क्रौञ्चानां कुलैः ततं शुभ्रम् अम्बरम् अपश्यत्।

हिन्दी—वर्षाके बाद ( रामने ) शरदृतुके समीप चेष्टाशील, उत्कण्ठावर्द्धक, शब्दायमान, क्रौञ्चपक्षियोंके समूहोंसे व्याप्त स्वच्छ आकाश देखा।

व्याख्या—अथ अनन्तरम् ( रामः राघवः ), उपशरदे शरत्समीपे, चेष्टनैः चलनैः, उत्कण्ठा-वर्द्धनैः औत्सुक्योद्दीपकैः, रवणैः शब्दायमानैः, क्रौञ्चानाम् पक्षिविशेषाणां, कुलैः गणैः, ततं व्याप्तम्, शुभं स्वच्छम्, अम्बरम् व्योम, अपश्यत् अवालोकयत्। भृत्यसम्भृतराजवदम्बरमिदमिति निदर्शना।

समासः—शरदः समीपमिति विग्रहे 'अव्ययं विभक्ति० २।१।६' इति समासे; अव्ययीभावे शरत्प्रभृतिभ्यः ५।४।१०७' इति टच्। 'तृतीयासप्तम्योर्बहुलम् २।४।८४' इत्यमोऽभावः।

कोशः—'अजिरं विषये कायेऽप्यम्बरं व्योम्नि वाससि।'
'कुलं जनपदे गोत्रे सजातीये गणेऽपि च'—इत्यमरः।

कृदन्तः—चेष्टनैः रवणैरित्युभयत्रापि 'चलनशब्दार्थादकर्म० ३।२।१४८' इति युच्। अन्यत्र 'अनुदात्तेतश्च हलादेः ३।२।१४९' इति युच्।

वाच्य०—अथ (रामेण) उपशरदे क्रौञ्चानां कुलैः ततं शुभ्रम् अम्बरम् अदर्शि।

पुनः रामदशामेव तच्छब्दैराख्याति—

विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनो ऽवदत्।
'पश्य दन्द्रमणान् हंसानरविन्द-समुत्सुकान्' ॥ १५ ॥

अन्वयः—द्योतनं चन्द्रं विलोक्य शोचनः ( रामः ) लक्ष्मणम् अवदत्। हे लक्ष्मण ! अरविन्दसमुत्सुत्कान् दन्द्रमणान् हंसान् पश्य।

हिन्दी—चमकदार चन्द्रमाको देखकर शोकमग्न रामने लक्ष्मणसे कहा—हे लक्ष्मण ! कमलके लिए उत्सुक धीरे-धीरे टेढ़े मेढ़े चलनेवाले हंसोंको देखो।

व्याख्या—द्योतनं दीप्तिमन्तं, चन्द्रं चन्द्रमसं, विलोक्य वीक्ष्य, शोचनः शोकमग्नः ( रामः ), लक्ष्मणम् सौमित्रिम्, अवदत् अब्रवीत्। हे लक्ष्मण ! अरविन्दसमुत्सुकान् कमलोत्कण्ठितान्, दन्द्रमणान् कुटिलगतीन्, हंसान् मरालान्, पश्य विलोकय। विषमेण युता व्याजस्तुतिः। अतः सङ्करः।

कोशः—'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः'।

समासः—अरविन्देषु समुत्सुका इति योगविभागात्सप्तमी-तत्पुरुष-समासः। 'प्रसितोत्सुकाभ्यां तृतीया च २।३।४४' इति सप्तमीविभक्तिः पूर्वं समासात्।

कृदन्तः—शोचनः दन्द्रमणात् इत्यत्र 'जु-चङ्क्रम्य० ३।२।१५०' इति युच्। ततः द्रम-गतौ इति धातोः कौटिल्येऽर्थे 'नित्यं कौटिल्ये गतौ ३।१।२३' इति कृतस्य यङः 'अतो लोपः ६।४।४८' इति अलोपे, 'यस्य हलः ६।४।४९' इति यलोपः।

वाच्य०—शोचनेन (रामेण) अवादि। अरविन्दसमुत्सुका हंसा दृश्यन्ताम्।

सम्प्रति रामः सुग्रीवप्रमादं प्रस्तौति—

> कपिश् चङ्क्रमणो ऽद्यापि ना ऽसौ भवति गर्धनः।
> कुर्वन्ति कोपनं तारा मण्डना गगनस्य माम् ॥ १६ ॥

अन्वयः—असौ गर्धनः कपिः अद्यापि चङ्क्रमणः न भवति। गगनस्य मण्डनाः ताराः मां कोपनं कुर्वन्ति।

हिन्दी—वह विषयासक्त कपि सुग्रीव अभी भी (सीताके विषयमें) गमनोद्यत नहीं कर रहा है। आकाशको विभूषित करनेवाली तारिकाएँ मुझे क्रुद्ध कर रही हैं।

व्याख्या—असौ परोक्षे स्थितः, गर्धनः विषयगृध्नुः, कपिः वानरः, अद्यापि शरदागमेऽपि, चङ्क्रमणः (सीतान्वेषणे) गतिप्रवणः, न नैव, भवति जायते। गगनस्य नभसः, मण्डनाः भूषिकाः, ताराः तारकाः, मां रामं, कोपनं क्रोधनम्, कुर्वन्ति विदधति।

कोशः—'गृध्नुस्तु गर्धनः'। 'लुब्धोऽभिलाषुकस्तृष्णक्'।
'समौ लोलुपलोलुभौ' इत्यमरः।

कृदन्तः—कोपनं, मण्डनाः इत्यत्र तु 'क्रुधमण्डार्थेभ्यश्च ३।२।१५१' इति युच्। गर्धनः चङ्क्रमणः इत्यत्र तु पूर्वसूत्रेणैव।

वाच्यपरिवर्तनम्—अमुना गर्धनेन न भूयते। गगनस्य मण्डनाभिः ताराभिः अहं क्रिये कोपनः ॥ १६ ॥

पुनस्तमेव विशिनष्टि रामः—

> ना ऽवैत्याप्यायितारं किं कमलानि रविं कपिः।
> दीपितारं दिनाऽऽरम्भे निरस्त-ध्वान्त-संचयम् ॥ १७ ॥

अन्वयः—कपिः कमलानि आप्यायितारं दिनारम्भे निरस्तध्वान्तसंचयं दीपितारं रविं न अवैति किम्? इत्याश्चर्यम्।

हिन्दी—वानर ( सुग्रीव ) कमलोंको पुष्ट करने तथा प्रातःकाल अन्धकार-समूहको दूर भगाकर चमकने वाले सूर्य्यको क्या नहीं जान रहा है ? यह आश्चर्य है ।

व्याख्या—कपिः वानरः ( असभ्य इति यावत् ), कमलानि पद्मानि, आप्यायितारं साधु वर्द्धयन्तम्, दिनारम्भे दिवसोपक्रमे प्रातरित्यर्थः, निरस्तध्वान्तसञ्चयं दूरीकृतान्धकारसमूहम्, दीपितारं दीप्तिमन्तम्, रविं सूर्य्यं, न नैव, अवैति जानाति किम् ? इत्याश्चर्यम् । शरदागमोऽभूत् इति वाच्योऽर्थः । अत्र प्रतिपदं ध्वनिरस्ति । मित्र-वर्द्धकं शत्रुविनाशकं रविरूपं मां जानाति नहि किम् ? अत्र पूर्णोपमा ।

कृदन्तः—आप्यायितारमिति 'अनुदात्तेतश्च० ३।२।१४९' इति प्राप्तस्य युचः 'न यः ३।२।१५२' इति निषेधे, 'तृन् ३।२।१३५' इति विहितेन तृना योगे, 'न लोकाव्यय० २।३।६९' इति षष्ठीनिषेधः । दीपितारमित्यत्रापि 'सूददीपदीक्ष० ३।२।१५३' इति निषेधे तृन् ।

वाच्य०—कपिना निरस्तध्वान्तसञ्चयः दीपिता रविर्नावेयते ॥ १७ ॥

तस्यैव विषये विचारयति—

> अतीते वर्षुके काले, प्रमत्तः स्थायुको गृहे ।
> गामुको ध्रुवमध्वानं सुग्रीवो वालिना गतम् ॥ १८ ॥

अन्वयः—वर्षुके काले अतीते ( अपि ) गृहे स्थायुकः प्रमत्तः सुग्रीवः वालिना गतम् अध्वानं ध्रुवं गामुकः ।

हिन्दी—वर्षा-काल बीत जाने पर भी घरमें ही रहनेवाला मतवाला सुग्रीव, लगता है कि, वालीके मार्ग पर जाने वाला है ।

व्याख्या—वर्षुके वर्षणशीले, काले समये प्रावृट्काले इत्यर्थः, गते व्यतीते, अपि संभाविते, गृहे निलये, स्थायुकः स्थितिशीलः, प्रमत्तः प्रमादी, सुग्रीवः तन्नामा मदुपकृतः, वालिना तन्नाम्ना, गतम् यातम्, अध्वानम् मार्गम्, ध्रुवम् अवश्यं, गामुकः साधु गन्तेति । तद्वदयमपि मे वध्य इति भावः । उत्प्रेक्षापरिकरसंसृष्टिः ।

कोशः—'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः'—इत्यमरः ।

कृदन्तः—सर्वत्रैव 'लषपत० ३।२।१५४' इत्युकञ् । 'न लोकाव्यय० २।३।६९' इति षष्ठीनिषेधः ।

वाच्य०—सर्वत्रैव प्रथमान्तः तृतीयान्तेन भविष्यते, भूयते इति क्रियापदम् ।

शिक्षा—इत्थं [illegible] सुग्रीवं प्रति व्यवहारो '[illegible]समये कार्यकरो भवतीति' शिक्षयति ॥ १८ ॥

क्रुद्धो रामो लक्ष्मणमादिशति—

जल्पाकीभिः सहाऽऽसीनः स्त्रीभिः प्रजविना त्वया ।
गत्वा लक्ष्मण ! वक्तव्यो जयिना निष्ठुरं वचः ॥ १९ ॥

अन्वयः—अये लक्ष्मण ! जयिना प्रजविना त्वया गत्वा जल्पाकीभिः स्त्रीभिः सहासीनः ( सुग्रीवः ) निष्ठुरं वचः वक्तव्यः ।

हिन्दी—अये लक्ष्मण ! तुम विजयी हो, द्रुतगतिसे जाकर बकवाद करने-वाली स्त्रियोंके साथ बैठे हुए सुग्रीवको डांटकर कहो ।

व्याख्या—अये लक्ष्मण ! जयिना जयशीलेन, प्रजविना अतिवेगवता, त्वया मद्वचनपालकेन, गत्वा उपस्थाय, जल्पाकीभिः वाचालाभिः, स्त्रीभिः नारीभिः, सहासीनः सार्धमुपविष्टः, अन्तः-पुरे एव गत्वेति भावः, ( सुग्रीवः मदुपकृतः ) निष्ठुरं कठोरं, वचः वाक्यं, वक्तव्यः कथयितव्यः । अथ 'गौणे कर्मणि दुह्यादेः' इति अप्रधाने कर्मणि तव्यत् । काव्यलिङ्गपरिकरसङ्करः ।

कोशः—'स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्'—इत्यमरः ।

कृदन्तः—'जु वेगितायां गतौ' इति सौत्र-धातोः 'प्रजोरिनिः ३।२।१५६' इति इनिः । जयिनेति 'जिदृक्षि० ३।२।१५७' इति इनिः । जल्पाकीति 'जल्पभिक्ष० ३।२।१५५' इति षाकनि षित्वाद् 'षिद्गौरादिभ्यश्च ४।१।४१' इति ङीप् । आस उपवेशने इति धातोः शानचि 'ईदासः ७।२।८३' इतीत्वम् ।

वाच्य०—जयी प्रजवी त्वम् आसीनं ( सुग्रीवं ) ब्रूयाः ॥ १९ ॥

क्रोधे तमेवादेशं द्रढयति—

शैले विश्रयिणं क्षिप्रमनादरिणमभ्यमी ।
न्याय्यं परिभवी ब्रूहि पापम-व्यथिनं कपिम् ॥ २० ॥

अन्वयः—क्षिप्रम् अभ्यमी परिभवी ( त्वं ) शैले विश्रयिणम् अव्यथिनं पापं कपिं न्याय्यं वचः ब्रूहि ।

हिन्दी—शीघ्र सन्मुख जाकर अनादर करते हुए तुम, पर्वत पर विश्वस्त बैठे हुए, अनादर करनेवाले, व्यथाको न समझने वाले पापी कपिको, न्यायो-चित बात कहो ।

व्याख्या—क्षिप्रं शीघ्रम्, अभ्यमी अभिगन्ता, परिभवी परिभावुकः, त्वम् मदाज्ञापालकः इत्यर्थः, शैले गिरौ, विश्रयिणं निश्चिन्तस्थितम्, अनादरिणं माम-गणयन्तम्, अव्यथिनं मद्दुःखानुद्विग्नम्, अत एव पापं कदाचारिण, कपिं वानरं,

सुग्रीवं), न्याय्यं न्यायोचितं, वचः वाक्यं, ब्रूहि कथय। दुःखे पुनरुक्तिर्दार्ढ्यायैव ... ।प्रतिपदध्वनि-काव्यम् इदम्। समपरिकरयोः संकरः।

कोशः—'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरः।

कृदन्तः—पूर्वत्रैव 'जिदृक्षि० ३।२।१५७' इतीनिः।

तद्धितः—न्यायादनपेतं न्याय्यमिति विगृह्य 'धर्मपथ्यर्थन्यायादनपेते ४।४। ...' इति यत्प्रत्ययः।

वाच्य०—अव्यथिना परिभविना। त्वया त्रिश्रयी अव्यथी कपिः उच्यताम्।

पौनःपुन्येन सुग्रीवं सविशेषणीकृत्य सौमित्रिमादिशति रामः—

स्पृहयालुं कपिं स्त्रीभ्यो निद्रालुम-दयालु-वत्।
श्रद्धालुं भ्रामरं धारुं सद्रुमद्रौ वद द्रुतम्॥ २१॥

अन्वयः—(अये लक्ष्मण!) त्वम् स्त्रीभ्यः स्पृहयालुम् श्रद्धालुम् निद्रालुम् ...रम् धारुम् अद्रौ सद्रुम् कपिम् अदयालुवत् द्रुतं वद।

हिन्दी—हे लक्ष्मण! तुम स्त्रियोंकी चाह करनेवाले, उनपर श्रद्धा करनेवाले, ...के साथ सोनेवाले, मधुपायी, पर्वतपर रहनेवाले वन्दर (सुग्रीव) से निर्दयीके ...न फौरन बोलो।

व्याख्या—(अये लक्ष्मण!) त्वम् मद्वचनपोषकः, स्त्रीभ्यः नारीभ्यः, स्पृह... स्पृहावन्तम्, स्त्रीकामुकम् इत्यर्थः, श्रद्धालुं श्रद्धायुक्तं (ताभ्य एवेति ...), निद्रालुम् शयालुम् (ताभिः सहेति शेषः), भ्रामरं क्षौद्रं (मधु), धारुम् ...तारं (पातारमित्यर्थः), अद्रौ पर्वते, सद्रुम् सत्तारं, स्थातारमिति यावत्, कपिं ...नरं (सुग्रीवम्), अदयालुवत् निर्दयिवत्, द्रुतम् शीघ्रम्, वद ब्रूहि। क्रोधे ...रुक्तिर्न्याय्या। दीपकपरिकरयोः संकरः। अनुप्रासः स्पृहणीयः।

कोशः—'श्रद्धास्तिक्याभिलाषयोः'—(यादवः)। 'श्रद्धालुः श्रद्धयायुक्ते'।
'स्वप्नक् शयालुर्निद्रालुर्निद्राणशयितौ समौ'—इत्यमरः।

कृदन्तः—चौरादिकात् स्पृहेः निद्रातेः श्रद्धातेश्च 'स्पृहिगृहि० ३।२।१५८' ...लुच्। 'अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।५५' इत्ययादेशोऽपि पूर्वस्मिन्। ...रीप्सित. १।४।३६' इति सम्प्रदानतया स्त्रीभ्य इत्यत्र चतुर्थी। सद्रुं धारुं ...दे० ३।२।१५९' इति रुणा संसाध्य तद्योगे भ्रामरमित्यत्र 'न लोकाव्यय० ...।६९' इति षष्ठी निषेध्या।

वाच्यपरिवर्तनम्—त्वया स्पृहयालुः श्रद्धालुः कपिः उच्यताम्।

शिक्षणम्—"...रामये यश्च तनोति तिग्मताम्" इत्यपि शिक्षणीयमत्र॥ २१॥

अधुना परमाज्ञाकारी लक्ष्मणो रामाज्ञामादाय किष्किन्धां प्रयाति—

सृमरोऽभङ्गुर-प्रज्ञो गृहीत्वा भासुरं धनुः ।
विदुरो जित्वरः प्राप, लक्ष्मणो गत्वरान् कपीन् ।। २२ ।।

अन्वयः—सृमरः अभङ्गुरप्रज्ञः विदुरः जित्वरः लक्ष्मणः भासुरं धनुः गृहीत्वा गत्वरान् कपीन् प्राप ।

हिन्दी—गमनशील, दृढ़बुद्धि, जानकार, विजयी लक्ष्मण चमकदार धनु लेकर चञ्चल कपियोंके पास पहुँच गये ।

व्याख्या—सृमरः साधुगमनशीलः, अभङ्गुर-प्रज्ञः स्थिरधिः, विदुरः सर्व रहस्यज्ञः, जित्वरः विजयशीलः, लक्ष्मणः आज्ञाकारी भ्राता, भासुरं देदीप्यमानं धनुः चापं, गृहीत्वा आदाय, गत्वरान् चञ्चलान्, कपीन् प्लवगान्, प्राप जगाम परिकरश्लेषसङ्करः ।

समासः—अभङ्गुरा प्रज्ञा यस्य सः इति बहुव्रीहौ पूर्वपदस्य पुंवद्भाव उत्तर पदस्य च ह्रस्वः । अभङ्गुरश्चासौ प्रज्ञः इति कर्मधारयो वा । भङ्गुरप्रज्ञ इति पदे भङ्गुरं प्रतिज्ञाच्युतं ( सुग्रीवं ) प्रकर्षेण जानातीति विगृह्य 'प्रे दाज्ञः ३।२।६' इति अणोऽपवादके कप्रत्यये प्रज्ञ इत्यत्र उपपद—समासः ।

कोशः—'कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः'—इत्यमरः ।

कृदन्तः—'सृघस्यदः क्मरच् ३।२।१६०' इति क्मरचि सृमरः । 'भञ्जभास ३।२।१६१' विदिभिदि० ३।२।१६२' 'इण्नश० ३।२।१६३' इति क्रमेण सूत्राणामुदाहरणानि । 'गत्वरश्च ३।२।१६४' इति निपातनमपि । भञ्जेस्तु कर्तरि घुरच् ।

वाच्यपरिवर्तनम्—सृमरेण विदुरेण लक्ष्मणेन गत्वराः कपयः प्रापिरे ।

शिक्षा—'आज्ञा गुरूणामविचारणीया' इति ।। २२ ।।

मारुतिस्तं राजधानीं प्रवेशयति—

तं जागरूकः कार्येषु दन्दशूक-रिपुं कपिः ।
अ-कम्प्रं मारुतिर् दीप्रं नम्रः प्रावेशयद् गुहाम् ।। २३ ।।

अन्वयः—कार्येषु जागरूकः नम्रः मारुतिः कपिः दन्दशूकरिपुं दीप्रम् अकम्प्रं तम् गुहाम् प्रावेशयत् ।

हिन्दी—कार्योंसे जागरूक विनयी हनुमानने, हिंस्र जानवरोंके शत्रु, तेजस्वी एवं बलशाली ( लक्ष्मण ) को, राजधानीमें प्रवेश कराया ।

व्याख्या--कार्येषु राज्यकार्येषु ( मन्त्रित्वात् ), जागरूकः सावधानः, नम्रः विनयी, मारुतिः पवनसुतः, कपिः वानरः ( हनुमान् ), दन्दशूकरिपुं हिंस्रशत्रुम्, दीप्रम् दीप्यमानम्, अकम्प्रम् दृढम्, तम् पूर्वोक्तम् ( लक्ष्मणमित्यर्थः ), गुहाम् किष्किन्धां राजधानीं, प्रावेशयत् प्रणीतवान् । समपरिकरकाव्यलिङ्गसङ्करः ।

कोशः—'दन्दशूकस्तु पुंलिङ्गो राक्षसे च सरीसृपे' ।

'चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम्'—इत्यमरः ।

कृदन्तः—'जागरूकः ३।२।१६५' इत्यूक-प्रत्ययः । 'यजजप० २।२।१६६' 'नमिकम्पि० ३।२।१६७' इत्येतेषां क्रमेणोदाहरणानि ।

वाच्यपरिवर्तनम्—जागरूकेण मारुतिना कपिना दन्दशूकरिपुः दीप्रः प्रावेश्यत ॥ २३ ॥

सम्प्रति कविः सुग्रीव-पटुत्वं प्रकटयति--

कम्राभिरावृतः स्त्रीभिराशंसुः क्षेममात्मनः ।
इच्छुः प्रसादं प्रणयन् सुग्रीवः प्रावदन् नृपम् ॥ २४ ॥

अन्वयः—कम्राभिः स्त्रीभिः आवृतः आत्मनः क्षेमम् आशंसुः प्रसादम् इच्छुः नृपं प्रणमन् सुग्रीवः प्रावदत् ( तमिति शेषः ) ।

हिन्दी—कामुकी स्त्रियों द्वारा घिरा हुआ, अपने कल्याणकी आशा रखनेवाला, लक्ष्मणकी प्रसन्नता चाहनेवाला, उनको राजासन देकर प्रणाम करता हुआ, सुग्रीव बोला।

व्याख्या—कम्राभिः कमनीयाभिः, स्त्रीभिः नारीभिः, आवृतः परिवृतः ( आत्मानं गोपितुम् ), आत्मनः स्वस्य, क्षेमं कल्याणम्, आशंसुः आशासानः, प्रसादम् अनुग्रहम् ( लक्ष्मणस्येति यावत् ), इच्छुः अभिलाषुकः, नृपम् राजानम् चाटुकारित्वात्, ( 'नृपस्त्वं मत्पालक' इति सोपचारं ) प्रणमन् अनुनयन्, सुग्रीवः तन्नामा कपिः, प्रावदत् प्रोवाच (तं लक्ष्मणमिति शेषः) । दीपकपरिकरसङ्करः ।

कोशः—'कम्रः कामयिता ऽभीकः कमनः कामनोऽभिकः'—इत्यमरः ।

कृदन्तः—'सनाशंसभिक्ष उः ३।२।१६८' 'विन्दुरिच्छुः ३।२।१६९' इति अनयोः क्रमेणोदाहरणे ।

वाच्यपरिवर्तनम्—स्त्रीभिः आवृतेन नृपं प्रणमता सुग्रीवेण स प्रोच्यत ।

शिक्षा—'स्वकार्यं साधयेद्धीमान्' 'कार्यध्वंसो हि मूर्खता' इत्येव इतः सप्तविंशावधि सुग्रीव-व्यवहारः शिक्षयति ॥ २४ ॥

तमनुनयति सप्तविंश-पद्यान्तम् सुग्रीवः—

अहं स्वप्नक् प्रसादेन तव वन्दारुभिः सह ।
अ-भीरुरवसं स्त्रीभिर् [1]भास्वराभिरिहेश्वर ॥ २५ ॥

अन्वयः—हे ईश्वर ! अहम् तव प्रसादेन वन्दारुभिः भास्वराभिः स्त्रीभिः सह स्वप्नक् इह अभीरुः सन् अवसम् ।

हिन्दी—हे स्वामिन् ! आपकी कृपासे मैं स्तुतिकारिणी सुन्दरी स्त्रियोंके साथ सोनेवाला इस अन्तःपुरमें निर्भय होकर रह रहा हूँ ।

व्याख्या—हे ईश्वर स्वामिन् ! अहं सुग्रीवः, तव भवतः, प्रसादेन कृपया, वन्दारुभिः वन्दनशीलाभिः, भास्वराभिः सुन्दरीभिः, स्त्रीभिः योषिद्भिः, सह साकम्, स्वप्नक् शयालुः, इह अन्तःपुरे, अभीरुः निर्भयः सन्, अवसम् अतिष्ठम् । काव्यलिङ्गपरिकरसङ्करः ।

कोशः—'ईश्वरः पतिरीशिता' । (२१ एकविंशपद्ये स्वप्नक्-कोशो द्रष्टव्यः) ।

कृदन्तः—'स्वपितृषोर्नजिङ् ३।२।१७२' 'शृवन्द्योरारुः ३।२।१७३' 'भियः क्रुक्लुकनौ ३।२।१७४' 'स्थेश-भास० ३।२।१७५' इत्येतेषामुदाहरणानि ।

वाच्यपरिवर्तनम्—स्वप्नजा मया अभीरुणा सता औष्यत ।। २५ ।।

तं प्रणतस्तथैवानुनयति सुग्रीवः—

विद्युन्-नाशं रवेर् भासं विभ्राजं शशलाञ्छनम् ।
राम-प्रत्तेषु भोगेषु नाहमज्ञासिषं रतः ॥ २६ ॥

अन्वयः—रामप्रत्तेषु भोगेषु रतः अहम् विद्युन्नाशं रवेः भासं विभ्राजं शशलाञ्छनं न अज्ञासिषम् ।

हिन्दी—रामजी द्वारा दिये गये भोगोंमें लिप्त मैं बिजलीकें नाश, सूर्यके प्रकाश और चमकदार चन्द्रमाको नहीं जान सका ।

व्याख्या—रामप्रत्तेषु भवदग्रजवितीर्णेषु, भोगेषु विषयेषु, रतः आसक्तः, अहम् तव दासः, विद्युन्नाशं तडिदुपरमं, रवेः सूर्य्यस्य, भासम् दीप्तिं प्रकाशम् इति यावत्, विभ्राजं देदीप्यमानं, शशलाञ्छनं चन्द्रम्, न नैव, अज्ञासिषम् अवेदिषम् । कदेयं शरदुपस्थितेति भावः । अनुप्रासकाव्यलिङ्गसङ्करः ।

कोशः—'तडित्सौदामनी विद्युच्चञ्चला चपला अपि'—इत्यमरः ।

---

(१)—अत्र 'भास्वराभिः' इत्येव कविसम्मतः पाठः । भासुरम् २२ पद्ये द्रष्टव्यम् ।

कृदन्तः—सर्वत्र 'भ्राज-भास० ३।२।१७७' इति क्विप्। नाश इति घञ् भावे।
तिङन्तः—ज्ञा अवबोधने इति क्र्यादिस्थस्य धातोर्लुङि 'यमरम० ७।२।७३' इति सगिटौ।
वाच्य०—एतेन मया विद्युन्नाशः रवेः भा शशलाञ्छनः न अज्ञायि ॥२६॥
प्रतिज्ञातमनुतिष्ठन् चाटुकारित्वमुपसंहरति—

एष-शोक-च्छिदो वीरान् प्रभो ! सम्प्रति वानरान्।
धरा-शैल-समुद्राणामन्त-गान् प्रहिणोम्यहम् ॥ २७ ॥

अन्वयः—हे प्रभो ! एषः अहम् सम्प्रति धराशैलसमुद्राणाम् अन्तगान् शोकच्छिदः वीरान् वानरान् प्रहिणोमि।

हिन्दी—हे स्वामिन् ! यह मैं आपका दास सुग्रीव अभी पृथ्वी, पर्वत तथा समुद्रोंके अन्ततक पहुँचनेवाले, ( रामचन्द्रजीके ) शोकको दूर कर देनेवाले, (सीता-प्राप्तिद्वारा ) वीर वानरोंको भेजता हूँ।

व्याख्या—हे प्रभो स्वामिन् ! ( सुहृदमपि लक्ष्मणं चाटुकारितया प्रभुत्वेन सम्बध्नाति ) एष भवतो दासः, अहम् सुग्रीवः, सम्प्रति अद्युनैव, धराशैलसमुद्राणाम् अवनिगिरिवारिधीनाम्, अन्तगान् पर्यन्तप्राप्तिविदः, लोकच्छिदः (रामस्य ) वियोगदुःखापहर्तॄन् ( सीतान्वेषणेनेति यावत् ), वीरान् शूरान्, वानरान् ( हनुमदादीन् ) कपीन्, प्रहिणोमि प्रस्थापयामि। परिकरालङ्कारः।

कोशः—'शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वरः'—इत्यमरः।

समासः—धरा च शैलाश्च समुद्राश्चेति इतरेतरद्वन्द्वः। क्वचित् धरा-समुद्रशैलानामिति पाठान्तरेऽपि 'बहुष्वनियमः' इति पूर्वनिपातो ज्ञेयः।

कृदन्तः—शोकच्छिदः—'अन्येभ्योऽपि दृश्यते ३।२।१७८' इति क्विप्। अन्तगान् 'अन्तात्यन्त० ३।२।४८' इति डः। समासास्ताच्छीलिकाः।

वाच्य०—एतेन मया अन्तगाः शोकच्छिदः वीराः वानराः प्रहीयन्ते ॥२७॥
इतस्तच्छीलतद्धर्मादिकृतः समाप्य निर्विशेषकृतो दर्शयन्सुग्रीवोद्योगं प्रक्रमते—

राघवस्य ततः कार्यं कारुर् वानर-पुङ्गवः।
सर्व-वानर-सेनानामाश्वागमनमादिशत् ॥ २८ ॥

अन्वयः—ततः राघवस्य कार्यं कारुः वानरपुङ्गवः सर्ववानरसेनानाम् आशु आगमनम् आदिशत्।

हिन्दी—लक्ष्मणजीसे अनुनय विनय करनेके बाद रामचन्द्रका कार्य करनेको वानरेन्द्र सुग्रीवने सभी वानर, सेनाओंको शीघ्र उपस्थित होनेकी आज्ञा दी।

व्याख्या—ततः लक्ष्मणानुनयविनयानन्तरम्, राघवस्य रामस्य, कार्यं प्रयोजनं, कारुः कर्ता, वानरपुङ्गवः कपिश्रेष्ठः सुग्रीव इत्यर्थः, सर्ववानरसेनानां सकलकपिकटकानाम्, आशु शीघ्रम्, आगमनम् स्वपार्श्वोपस्थितिम्, आदिशत् आज्ञापयत्। राघवकार्यकारित्वस्य हेतोरुक्तौ काव्यलिङ्गम् ।

कोशः—( ५-३२ पुङ्गवकोशः ) ।

समासः—पुमान् चासौ गौः इति कर्मधारये 'गोरतद्धितलुकि ५।४।९२' इति समासान्तष्टच् ।

कृदन्तः—कारुः, आशुः इत्यत्र 'उणादयो बहुलम् ३।३।१' इति सूत्रस्य 'कृवापाजि० ३।३।१' इति वार्तिकबलादुण् प्रत्ययः । 'न लोकाव्यय० २।३।६९' इति षष्ठीनिषेधः । इत उणादिप्रत्ययकृदधिक्रियते ।

वाच्यपरिवर्तनम्—कारुणा वानरपुङ्गवेन आदिश्यतागमनम् ।

शिक्षा—'दण्डं धर्मं विदुर्बुधाः' इत्ययमेव निष्कर्षः ।। २८ ।।

सुग्रीवो रामकार्यतत्परतां व्यनक्ति—

> वयमद्यैव गच्छामो रामं द्रष्टुं त्वरान्विताः ।
> कारका मित्र-कार्याणि सीता-लाभाय सोऽब्रवीत् ।। २९ ।।

अन्वयः—सीता-लाभाय मित्र-कार्याणि कारकाः त्वरान्विताः वयम् अद्यैव रामं द्रष्टुं गच्छामः ( इति सः अब्रवीत् ) ।

हिन्दी—सीता ( महारानीकी )—प्राप्तिके निमित्त मित्रके कार्य करनेवाले हमलोग शीघ्रताके साथ आज ही रामचन्द्रजीके दर्शनार्थ चलते हैं। यह भी उन्होंने कहा ।

व्याख्या—सीतालाभाय जानकीप्राप्तये, मित्र-कार्याणि सुहृत्प्रयोजनानि, कारकाः करिष्यन्तः कर्तुमिति यावत्, त्वरान्विताः शीघ्रताजुषः, वयम् सैन्यसमेताः, अद्यैव अधुनैव, रामं राघवं ( नृपं ), द्रष्टुम् साक्षात्कर्तुम्, गच्छामः व्रजामः ( इत्यपि सः सुग्रीव अब्रवीत् अभ्यधात् ) । समुच्चयालङ्कारः ।

कोशः—( मित्रकोशः ६-४३ ) ।

कृदन्तः—'तुमुन्-ण्वुलौ क्रियायां क्रियार्थायाम् ३।३।१०' इति कारकाः। भविष्याम इति गच्छाम इति क्रियामुपपदीकृत्य ण्वुल् विधीयते । ततः 'अकेनोर्भविष्यदाधमर्ण्ययोः २।३।७० इति षष्ठीप्रतिषेधिका कार्याणीति द्वितीया । सीतालाभायेति [illegible] ३।३।१४' इति चतुर्थी। दृशिर् प्रेक्षणे धातोः तेनैव तुमुन्, 'सृजिदृशोः० ६।१।५८' इत्यमु च

वाच्य०—सीतालाभाय कारकैः त्वरान्वितैः गम्यते इति तेनोच्यत ॥ २९ ॥

इतः कविः कार्यप्रारम्भं प्रस्तौति—

ततः कपीनां संघाता हर्षाद् राघव-भूतये ।
पूरयन्तः समाजग्मुर् भय-दाया दिशो दश ॥ ३० ॥

अन्वयः—ततः भयदायाः कपीनां संघाताः दश दिशः पूरयन्तः राघवभूतये हर्षात् समाजग्मुः ।

हिन्दी—सुग्रीवका आदेश पाकर भविष्यमें ( राक्षसोंको भयदेनेवाले ) बन्दरोंके झुण्ड दशों दिशाओंको पूर्ण करते हुए रामचन्द्रका कार्य करनेके लिये बड़े आनन्दसे एकत्र हो गये ।

व्याख्या—ततः आदेशानन्तरम्, भयदायाः भीतिं दास्यन्तः ( राक्षसेभ्य इति यावत् ), कपीनां कीशानां, संघाताः सार्थाः, दश दिशः सर्वा अपि ककुभः, पूरयन्तः व्याप्नुवन्तः, राघवभूतये रामाभ्युदयं कर्तुम्, हर्षात् आनन्दात्, समाजग्मुः समाययुः । समागमहेतूक्तौ काव्यलिङ्गम् ।

कोशः—'वृन्दभेदाः समैर्वर्गः संघसार्थौ तु जन्तुभिः'—इत्यमरः ।

कृदन्तः—समाजग्मुरिति क्रियायाम् उपपदत्वभाजि 'भाववचनाश्च ३।३।११' इति भविष्यति क्तिन् । तथैव चतुर्थी । भयं दास्याम इति 'अण् कर्मणि च ३।३।१२' इत्यण्, आतो युक् च । हर्षादिति 'विभाषा गुणेऽस्त्रियाम् २।३।२५' इति पञ्चमी ।

वाच्यपरिवर्तनम्—संघातैः भयदायैः पूरयद्भिः समाजग्मे ॥ ३० ॥

सैन्योत्साहमाख्याति कविः—

सुग्रीवाऽन्तिकमासेदुः सादयिष्याम इत्यरिम् ।
करिष्यन्त इवाऽकस्माद् भुवनं निर्-दशाननम् ॥ ३१ ॥

अन्वयः—अरिं सादयिष्याम इति अकस्माद् भुवनं निर्दशाननम् करिष्यन्त इव ( कपिसंघाताः ) सुग्रीवान्तिकम् आसेदुः ।

हिन्दी—शत्रुको मार डालेंगे—यों अकस्माद् भुवनको रावणविहीन करनेवाले कपि-समूह सुग्रीवके पास जुट गये ।

व्याख्या—अरिम् शत्रुम्, सादयिष्यामः व्यापादयिष्यामः, इति इत्थम् ( विचार्येति शेषः ), अकस्मात् अकाण्डे, भुवनं लोकम्, निर्दशाननम् रावणरहितं, करिष्यन्तः विधास्यन्तः इव मन्ये ( कपि-संघाताः ) सुग्रीवान्तिकम् स्वराजोपकण्ठम् आसेदुः प्रापुः । काव्यलिङ्गेन सहोत्प्रेक्षासङ्करः ।

कोशः—( अन्तिककोशः ६-१४६ )।

कृदन्तः—'लृट् शेषे च ३।३।१३' इति कृञः लृट्। आसेदुरिति क्रिया क्रियार्था।

वाच्यपरिवर्तनम्—'अरिः सादयिष्यते' इति करिष्यद्भिः आसेदे ॥ ३१ ॥

इदानीं ससाधनस्य सुग्रीवस्य रामशरण-गमनमाख्याति कविः—

कर्तास्मि कार्यमायातैरेभिरित्यवगम्य सः।
काकुत्स्थ-पादपच्छायां शीतस्पर्शामुपागमत् ॥ ३२ ॥

अन्वयः—आयातैः एभिः कार्यं ( रामस्य ) कर्तास्मि इति अवगम्य सः शीतस्पर्शां काकुत्स्थपादपच्छायम् उपागमत्।

हिन्दी—आये हुए इन कपियोंसे कार्य ( रामचन्द्रका ) करूँगा—ऐसा सोचकर वह ( सुग्रीव ) रामरूपी पेड़की शीतल छायामें गया।

व्याख्या—समागतैः समुपस्थितैः, एभिः प्रत्यक्षस्थितैः ( कपि सङ्घैः ), कार्यं कृत्यं ( रामस्य ), कर्तास्मि संविधातास्मि, इति एवम्, अवगम्य संज्ञाय, सः सुग्रीवः, शीतस्पर्शाम् आर्द्रामर्शाम् काकुत्स्थपादपच्छायाम् रामतरुमाश्रयां कान्तिम्, उपागमत् अयासीत्। सकाव्यलिङ्गं रूपकम्।

कोशः—'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः'—इत्यमरः।

समासः—शीतः स्पर्शो यस्याः सा, ताम्, बहुव्रीहिः। कपिसेनां विलोक्य शान्तमन्यू रामो मामनुग्रहीष्यति इति ध्वनति। काकुत्स्थ एव पादपः, तस्य छाया, ताम्। मयूरव्यंसकादित्वात् कर्मधारयानन्तरं तत्पुरुषः।

कृदन्तः—शीतस्पर्शाम्—स्पृश्यत इति स्पर्शः तन्मात्र उच्यते। अतः 'अकर्तरि च० ३।३।१९' इति घञ्, न तु 'पदरुज० ३।३।१६' इति। तत्र 'स्पृश उपताप इति वक्तव्यम्' इत्युक्तत्वात्। कर्तेति—'अनद्यतने लुट् ३।३।१५' इति लुट् ज्ञेयः। पद्यन्त इति पादाः—'पदरुजः ३।३।१६' इति कर्तरि घञ्। पादैः पिबतीति पादपो वृक्षः। 'आतोऽनुपसर्गे कः ३।२।३' इति कः।

वाच्य०—कारितेति तेन शीतस्पर्शा काकुत्स्थपादपच्छाया उपागामि ॥ ३२ ॥

अधुना रामनिर्वृत्तिमाख्याति कविः—

कार्यं सार-निभं दृष्ट्वा वानराणां समागमम्।
अवैन् नाशं दशाऽऽस्यस्य निर्वृत्तमिव राघवः ॥ ३३ ॥

अन्वयः—राघवः वानराणां समागमं दृष्ट्वा सारनिभं कार्यं दशास्यस्य नाशं निर्वृत्तम् इव अवैन्।

हिन्दी—रामने वानरोंके समागमको देखकर 'प्रधान कर्तव्य रावण वध हो चुका' इसके समान मान लिया।

व्याख्या—राघवः रामः, वानराणां कपीनां, समागमं समुपस्थितिं, दृष्ट्वा वीक्ष्य, सारनिभं सीतालाभरूपप्रधानकर्मतुल्यं, कार्यं करणीयं, दशास्यस्य रावणस्य, नाशं वधं, निर्वृत्तं सम्पन्नम्, इव ध्रुवम्, अवैत् अजानात्। सानुमानालङ्कृतिरतिशयोक्तिः।

कोशः—'सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु'।

'निभसंकाशनीकाश-प्रतीकाशोपमादयः'—इत्यमरः।

कृदन्तः—सरति कालान्तरे तिष्ठति इति सारः। कर्तरि कारके 'सृ स्थिरे ३।३।१७' इति घञ्। ततस्तृतीयातत्पुरुषः। कर्तुं योग्यमित्यर्थे 'ऋहलोर्ण्यत् ३।१।१२४' इति ण्यत्। 'भावे ३।३।१८' इति घञा समागमः, नाशः इति सिध्यति।

तिङन्तः—अवपूर्वात् इण्-गतौ आदादिकात् लङि, सर्वकार्ये, आटि, 'आटश्च ६।१।९०' इति वृद्धिः अवैत्।

वाच्य०—राघवेण सारनिभः करणीयः नाशः निर्वृत्तः अवैयत॥ ३३॥

सम्प्रति भावेऽकर्तरि घञधिकारेण कपीन्द्रोपदेशं प्रक्रमते कविः—

ततः कपि-समाहारमेकनिश्रायमागतम्।

उपाध्याय इवाऽऽयामं सुग्रीवोऽध्यापिपद् दिशाम्॥ ३४॥

अन्वयः—ततः सुग्रीवः उपाध्यायः इव एकनिश्रायम् आगतम् कपिसमाहारम् दिशाम् आयामम् अध्यापिपत्।

हिन्दी—वानरोंके आ चुकनेपर सुग्रीवने आये हुए एकत्र हुए कपियोंके समुदायको उपाध्यायके समान दिशाओंके विस्तारको समझाया।

व्याख्या—ततः वानरोपस्थित्यनन्तरम्, सुग्रीवः कपीन्द्रः, उपाध्यायः अध्यापकः, इव यथा, एकनिश्रायम् अद्वितीयराशितां प्राप्तम्, आगतम् उपस्थितम्, कपिसमाहारम् वानर-समूहम्, दिशाम् हरिताम्, आयामम् विस्तारम्, अध्यापिपत् बोधितवान्। उपमालङ्कारः।

कोशः—'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः'।

कृदन्तः—समाहरन्ति अस्मादिति अपादाने 'अकर्तरि च० ३।३।१९' इति घञ्। निश्रायमिति 'परिमाणाख्यायाम् ३।३।२०' इति घञ्। 'पूर्वकालैक० २।१।४९' इति समासः। उपेत्य अधीतेऽस्मात् उपाध्याय इति 'इङश्च ३।३।२१' इति। 'गतिबुद्धि० १।४।३२' इति समाहारस्य कर्मत्वम्। आयाम इति भावे घञ्।

वाच्यपरिवर्तनम्—उपाध्यायेनेव सुग्रीवेण कपिसमाहारः अध्यापि ॥ ३४॥

सम्प्रति नामग्राहं सुग्रीवोपदेशं निर्दिशति—

स-जलाऽम्भो-द-संरावं हनुमन्तं सहाऽङ्गदम् ।
जाम्बवं नील-सहितं चारु-सन्द्रावमब्रवीत् ॥ ३५ ॥

अन्वयः—( सुग्रीवः ) सजलाम्भोदसंरावं चारुसन्द्रावम् सहाङ्गदं हनुमन्तम् नीलसहितं जाम्बवम् अब्रवीत् ।

हिन्दी—सजल मेघके समान गरजनेवाले, सुन्दरगतिवाले अङ्गदके साथ हनुमान्को तथा नीलके साथ जाम्बवन्तको ( सुग्रीवने ) उपदेश किया ।

व्याख्या—सजलाम्भोदसंरावं तोयसम्मित-मेघारावम्, चारुसन्द्रावं शुभप्रद्रावं, सहाऽङ्गदम् अङ्गदोपेतम् हनुमन्तं, नीलसहितं नीलयुक्तं, जाम्बवम् जाम्बवन्तम्—एवम् उभयं सेनापतिम्, अब्रवीत् अभ्यदधात् । सहोक्तिरलङ्कारः ।

कोशः—'आरवारावसंरावविरावा अथ मर्मरः' ।

'प्रद्रावोद्रावसंद्राव-संदावा विद्रवो द्रवः'—इत्यमरः ।

समासः—सजलश्चासौ अम्भोद इति कर्मधारयानन्तरं सजलाम्भोदस्येव संरावो यस्येसि बहुव्रीहिः । चारुः सन्द्रावो यस्य सः इति स एव समासः ।

कृदन्तः—'उपसर्गे रुवः ३।३।२२' इति घञ् संरावः । 'समि युद्रुदुवः ३।३।२३' इति घञ् सन्द्रावः ।

वाच्यपरिवर्तनम्—सुग्रीवेण सहाङ्गदः हनुमान् नीलसहितः जाम्बवः औच्यत।

शिक्षा—मानार्हा एवाधिकारिण माननीया इति ॥ ३५ ॥

सम्प्रति बालितिरस्कृतो दृष्टदिग्विभागः सुग्रीवः साधु तान् शास्ति कुलकेन—

यात यूयं यम-श्रायं दिशं नायेन दक्षिणाम् ।
विक्षावैस् तोय-विश्रावं तर्जयन्तो महोदधेः ॥ ३६ ॥
उन्नायानधिगच्छन्तः प्रदावैर् वसुधाभृताम् ।
वनाऽभिलावान् कुर्वन्तः स्वेच्छया चारु-विक्रमाः ॥ ३७ ॥
सदोद्गार-सुगन्धीनां फलानामलमाशिताः ।
उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः ॥ ३८ ॥
संस्तावमिव शृण्वन्तश् छन्दोगानां महाध्वरे ।
शिञ्जितं मधु-लेहानां पुष्पप्रस्तार-शायिनाम् ॥ ३९ ॥
आलोचयन्तो विस्तारमम्भसां [illegible] ।
स्वादयन्तः फल-रसं मुष्टि-संग्राह-पीडितम् ॥ ४० ॥

अन्वयः---(हे सेनापतयः) यूयम् महोदधेः तोयविश्रावं विक्षावैः तर्जयन्तः, चारुविक्रमाः वसुधाभृताम् उन्नायान् प्रद्रावैः अधिगच्छन्तः, स्वेच्छया वनाभिलावान् कुर्वन्तः, सदा उद्गार-सुगन्धीनां फलानाम् अलम् आशिताः, धान्यानाम् उत्कारेषु अनभीष्टपरिग्रहाः, पुष्पप्रस्तारशायिनां मधुलेहानां शिञ्जितं महाध्वरे छन्दोगानां संस्तावम् इव शृण्वन्तः, दक्षिणोदधेः अम्भसां विस्तारम् आलोचयन्तः, मुष्टि-संग्राह-पीडितं फलरसं स्वादयन्तः, नायेन यमश्रायं दक्षिणां दिशं यात।

हिन्दी---( सेनापतियों! ) आपलोग महासागरके गरजनेको अपने शब्दोंसे दबाते हुए, सुन्दर पराक्रमवाले पर्वतोंकी ऊँचाई को अपनी गतियोंसे प्राप्त करते हुए, अपनी इच्छासे वनोंको तोड़ते हुए, सदा ही उद्गारमें सुगन्ध फैलानेवाले, फलोंको खूब खानेवाले, धान्योंकी राशियोंमें अभिलाषा नहीं रखनेवाले, फूलोंकी शय्यापर सोनेवाले भौंरोंके गुञ्जनको महायज्ञमें सामवेदियोंके सामगानके समान सुनते हुए, दक्षिण महासागरके जलविस्तारकी आलोचना करते हुए ( हाथसे तोड़-तोड़कर ), मुष्टिसे दबा दबाकर फलोंके रसोंको चूसकर स्वाद लेते हुए, नीतिके साथ यमदेवके निवासभूत दक्षिण दिशाको जायें।

व्याख्या—( अये सेनापतयः ! ) यूयं विश्वस्ताः, महोदधेः महासागरस्य, तोय-विश्रावं जलध्वनिम्, विक्षावैः सिंहनादैः, तर्जयन्तः तिरस्कुर्वन्तः, चारुविक्रमाः श्लाघ्यपराक्रमाः, वसुधाभृताम् अचलानाम्, उन्नायान् उत्सेधान्, प्रद्रावैः स्वप्रकृष्ट-गतिभिः, अधिगच्छन्तः आरोहन्तः, स्वेच्छया यथाभिलाषम्, वनाभिलावान् काननो-च्छेदान्, कुर्वन्तः विदधतः, सदा सर्वदा, उद्गार-सुगन्धीनां भक्षणोत्तरमुदानोद्गमे हृद्यगन्धानां, फलानाम् अन्नेतररसस्यानां, अलम् पर्याप्तम्, आशिताः आशितवन्तः सुहिता इत्यर्थः, धान्यानां व्रीहियवादीनाम्, उत्कारेषु राशिषु, अनभीष्टपरिग्रहाः तत्स्वीकारनिःस्पृहाः,पुष्पप्रस्तार-शायिनां कुसुम-शय्यास्वापिनां,मधुलेहानां भ्रमरा-णाम्, शिञ्जितं गुञ्जितं, महाध्वरे बृहद्यागे, छन्दोगानां सामगायकानाम्, संस्तावं सम्भूय स्तवनम्, इव यथा, शृण्वतः आकर्णयन्तः, दक्षिणोदधेः अवाचीन-समुद्रस्य, अम्भसां वाराम्, विस्तारम् परिणाहम्, आलोचयन्तः निरूपयन्तः, मुष्टिसंग्राह-पीडितम् मुष्टिबन्धनिःसारितं, फल-रसं फलनिःस्यन्दं, स्वादयन्तः मधुरमधुरमि-त्यनुभवन्तः, नायेन नीत्या रीत्या, यमश्रायम् अन्तकस्थानम्, दक्षिणाम् अवाचीम्, दिशम् आशाम्, यात गच्छत ( इति मे निर्देशः )। दीपकेन सह उपमालङ्कृतिः।

समासः—यमस्य श्रायम्, तोयानां विश्रावम्, वनानाम् अभिलावान् इति तत्पुरुषः। मुष्टिसंग्राहेण पीडितम् इत्यपि स एव। यद्यपि 'समि मुष्टौ ३।३।३६'

इति यद्यपि मुष्टिशब्दार्थोऽभिहितस्तथापि स्पष्टप्रतिपत्त्यर्थं पुनर्मुष्टिशब्दोल्लेखः। आशिता इति 'आदिकर्मणि क्तः कर्तरि च ३।४।७१' इति कर्तरि क्तः। कृत्प्रयोगे कर्मणि षष्ठी तु 'न लोकाव्य० २।३।६९' इति निषिध्यते। इयं शेष-षष्ठी। अस्या अपि 'आशित' शब्दस्य सुहितार्थतया 'पूरणगुण० २।२।११' इति समासनिषेधः।

कोशः—'उन्नाय उन्नये श्रायः श्रयणे जयने जयः'।

'निगारोद्गार-विक्षावोद्ग्राहास्तु गरणादिषु'।

'लवोऽभिलावो लवने निष्पावः पवने पवः'।

'उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ'।

कृदन्तः—श्रयति एनम् इति विग्रहे 'श्रिणीभुवोऽनुपसर्गे ३।३।२४' इति कर्मणि घञ्। विक्षाव-विश्रावौ 'वौ क्षुश्रुवः ३।३।२५' इत्यस्योदाहरणे। ततः क्रमेण संग्राहान्तं 'समि मुष्टौ ३।३।३६' इति घञन्तमुदाहरणमष्टाध्यायीतोऽनुभवन्तु।

वाच्यपरिवर्तनम्—तर्जयद्भिः अधिगच्छद्भिः कुर्वद्भिः चारुविक्रमैः आशितैः अनभीष्टपरिग्रहैः शृण्वद्भिः युष्माभिः यायताम्॥ ३६-४०॥

सुग्रीवो व्यवहारनीतिमुपदिशति तान् पद्यैः षड्भिः—

न्याय्यं यद् यत्र, तत् कार्यं पर्यायेणाऽविरोधिभिः।
निशोपशायः कर्तव्यः फलोच्चायश् च संहतैः॥ ४१॥

अन्वयः—अविरोधिभिः संहतैः (युष्माभिः) यत्र यद् न्याय्यं तत् कार्यम्। निशोपशायः फलोच्चायश्च पर्यायेण कर्तव्यः।

हिन्दी—परस्पर विरोध न रखते हुए आपसमें मेलसे जहाँ जो कार्य उचित जान पड़े, वह करना। रात्रिमें सोना (पहरा देना) और फलोंको लाना—ये काम बारी-बारीसे करना होगा।

व्याख्या—अविरोधिभिः परस्परमविरुन्धानैः, संहतैः मिलितैः ऐकमत्यमाश्रितैरित्यर्थः, यत्र स्थले, यत् कर्म, न्याय्यं समुचितम्, तत् निर्दिष्टं, कार्यम् सम्पाद्यम्। निशोपशायः रात्रिशयनं जागरणं च, फलोच्चायः फलादानम्, पर्यायेण तवोपशायोऽद्य मम फलोच्चायोऽद्य इत्येवं क्रमेण, कर्तव्यः निश्चेतव्यः। पर्यायालङ्कृतिः।

कोशः—'उपशायो विशायश्च पर्यायशयनार्थकौ'—इत्यमरः।

कृदन्तः—'परिन्योर्नीणोः० ३।३।३७' इति घञनन्तरम् 'धर्मपथ्यर्थ० ४।४।९२' इति तद्धितो यत् न्याय्यम्। ततः 'व्युपयोः शेतेः पर्याये ३।३।३८' 'परावनुपात्यय इणः ३।३।३९' इत्यनयोरुदाहरणे। 'हस्तादाने चेरस्तेये ३।३।४०' इत्यस्यापि।



वाच्य०—यूयम् अविरोधिनः संहताः निशोपशायं फलोच्चायं च कुर्यात॥४१॥

कार्यसाधने युक्तिमुपदिशति—

सीता रक्षो-निकायेषु स्तोक-कायैश् छलेन च।
मृग्या शत्रु-निकायानां व्यावहासीमनाश्रितैः ॥ ४२ ॥

अन्वयः—स्तोककायैः ( सद्भिः ) शत्रु-निकायानां व्यावहासीम् अनाश्रितैः (युष्माभिः ) रक्षोनिकायेषु छलेन सीता मृग्या।

हिन्दी—छोटे शरीरवाले होकर शत्रु-समूहोंके परिहासकी उपेक्षा करते हुए [आप] लोगोंको राक्षसोंके भवनोंमें छलसे सीताकी खोज करनी है।

व्याख्या—स्तोक-कायैः लघु-देहैः भवद्भिः, शत्रुनिकायानाम् अरिसंघानां, [व्याव]हासीं मिथ उपहसनम्, अनाश्रितैः उपेक्षकैः ( युष्माभिः ), रक्षोनिकायेषु [राक्षस]निवासेषु, छलेन छद्मना, सीता जानकी, मृग्या गवेषणीयेति रहस्यम्। [...]ति हेतूक्तौ काव्यलिङ्गम्।

कोशः—'कायो देहः क्लीवपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः'— इत्यमरः।

कृदन्तः—'निवास-चिति० ३।३।४१' इति घञा निकायः। 'संघे चानौत्तरा-[धर्ये] ३।३।४२' इत्यपि घञ्। पूर्वत्र निवसति अस्मिन् इति अधिकरणेऽत्र निचीयत [इति] निकायः। कर्मणि इति मर्म। व्यवपूर्वाद् हसः 'कर्मव्यतिहारे णच् स्त्रियाम् [३।३।]४३' इति भावे णचं विधाय 'णचः स्त्रियामञ् ५।४।१४' इति स्वार्थेऽञि [न] कर्मव्यतिहारे ७।३।२६' इत्यैचः प्रतिषेधे—आदिवृद्धौ व्यावहासतः 'टिड्ढा-[ण]ञ्० ४।१।१५' इति ङीप्।

वाच्य०—( यूयम् ) स्तोककायाः अनाश्रिताः सीतां मृगयेध्वम् ॥ ४२ ॥

पुनरुपदिशति—

सांराविणं न कर्तव्यं, यावन् नाऽऽयाति दर्शनम्।
संदृष्टायां तु वैदेह्यां निग्राहो वोऽर्थवानरेः ॥ ४३ ॥

अन्वयः—यावत् ( वैदेही ) दर्शनं न आयाति ( तावत् ) सांराविणं न [कर्त]व्यम्। वैदेह्यां दृष्टायां तु वः अरेः निग्राहः अर्थवान् ( भवति )।

हिन्दी—जबतक विदेह-नन्दनीका दर्शन न हो जाय तबतक विशेष शोरगुल [(को]लाहल ) करना नहीं है। हाँ विदेह-पुत्रीका साक्षात्कार हो जाने पर तो [आप] लोगों द्वारा शत्रुका तिरस्कार सार्थक है।



व्याख्या—यावत् यत्कालावधि, ( वैदेही ) दर्शनं दृष्टिपथं, न नहि, आयाति (तावत्) सांराविणम् समन्तात् कोलाहलम्, न नैव, कर्तव्यम् आचरणीयम्।

वैदेह्यां मैथिल्यां, सन्दृष्टायां सम्यग् वीक्षितायां तु, वः युष्माकम्, अरेः शत्रोः निग्राहः आक्रोशोऽभिभवरूपः. अर्थवान् सफलः ( स्यादिति )। सूक्ष्मालङ्कारः।

कोशः—'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे'।

कृदन्तः—संपूर्वाद् रु शब्दे इति आदादिकाद् धातोः 'अभिविधौ० ३।३।४४' इत्यनेनेनुणि ततः 'अणिनुणः ५।४।१५' इत्यणि 'इनण्यनपत्ये ६।४।१६४' इति प्रकृतिभावेन सांराविणम्। निग्राह इति 'आक्रोशेऽवन्योर्ग्रहः ३।१।४५' इति भावे घञ्।।

वाच्य०—वैदेह्या दर्शनं नायायते। न कुर्य्यात। निग्रहेण अर्थवता भूयते।

तत्र साक्षात्सीतान्वेषणप्रकारमुपदिशति—

> प्रग्राहैरिव पात्राणामन्वेष्या मैथिली कृतैः।
> ज्ञातव्या चेङ्गितैर् धर्म्यैर् ध्यायन्ती राघवाऽऽगमम् ॥ ४४ ॥

अन्वयः—कृतैः पात्राणां प्रग्राहैः इव मैथिली अन्वेष्या। धर्म्यैः इङ्गितैः राघवागमम् ध्यायन्ती च ज्ञातव्या।

हिन्दी—कल्पित पात्र लेकर भीख माँगने वालोंके समान तुम लोगोंको (प्रत्येक घरमें) सीताजीको खोजना होगा। धार्मिक चेष्टाओंके द्वारा रामचन्द्रकी प्राप्तिका ध्यान करती हुई सीताको पहचानना होगा।

व्याख्या—कृतैः तल्लिप्सया कल्पितैः, पात्राणां भिक्षाभाजनानां, प्रग्राहैः स्वीकारैः, इव यथा, मैथिली सीता, अन्वेष्या मार्गयितव्या। प्रत्येकं गृहम् गत्वा भिक्षुकैरिव अन्वेषणीयेत्यर्थः। च तथा, धर्म्यैः धर्मोपेतैः, इङ्गितैः पतिव्रता चेष्टितैः, राघवागमं रामप्राप्तिं, ध्यायन्ती चिन्तयन्ती, ज्ञातव्या प्रत्यभिज्ञेया ( प्रोषिते मलिना कृशेत्यादिचिह्नैरवसेयेत्यर्थः ) उपमालङ्कारः, परिचये राघवागमने ध्यानहेतुरिति काव्यलिङ्गसङ्करोऽपि।

कोशः—'तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च'।

कृदन्तः—'प्रे लिप्सायाम् ३।३।४६' इति घञि प्रग्राहः।

वाच्यपरिवर्तनम्—( यूयम् ) अन्वेषयत, ध्यायन्तीं जानीत च ॥ ४४ ॥

अवधिं विवृण्वन्नपि सीताचिह्नं सूचयति—

> वेदि-वत् स-परिग्राहा यज्ञियैः संस्कृता द्विजैः।
> दृश्या मास-तमादह्नः प्राग-निन्दित-वेश-भृत् ॥ ४५ ॥

अन्वयः—अनिन्दित वेषभृत् यज्ञियैः द्विजैः वेदिवत् संस्कृता सपरिग्राहा ( सा ) मासतमाद् अह्नः प्राग् दृश्या ( ततः प्रत्यावर्तनम्, अन्यथा द्रक्ष्यथ

हिन्दी—उचित वेश धारण करनेवाली, यज्ञ करने योग्य ब्राह्मणोंसे जात-कर्मादि संस्कार की गयी, स्थण्डिल व्रतपरिग्रह करने वाली सीताको, शयनादि संस्कार वाली वेदिके समान, एक मास व्यतीत होनेके दिनसे पहले ही देखना है (बादमें लौट आना है। नहीं तो दण्ड है)।

व्याख्या—अनिन्दित-वेषभृत् पतिव्रतोचित-परिच्छदधारिणी, यज्ञियैः यज्ञार्हैः, द्विजैः विप्रैः, वेदिवत् यज्ञभूमिवत्, संस्कृता जातकर्मादि-संस्कार-सम्पन्ना (वेदिपक्षे प्रोक्षणादि-संस्कारवती), सपरिग्रहा स्थण्डिल-शयनादिव्रत-परिग्रहवती, (वेदिपक्षे 'वसवस्त्वा परिगृह्णन्तु' इत्यादि मन्त्रसाध्य-पूर्वोत्तर-परिग्रहाख्य-संस्कार-वतिनी), मासतमाद् मासपूरणात्, अह्नः दिनात्, प्राक् पूर्वमेव, दृश्या द्रष्टव्या (ततः परावर्तनम्। अन्यथा दण्डः)। सूक्ष्मोपमालङ्कारयोः सङ्करः।

कोशः—'वेदिः परिष्कृता भूमिः समे स्थण्डिल-चत्वरे'।

(द्विजकोशः ६–६४)।

कृदन्तः—ग्रहः 'परौ यज्ञे ३।३।४७' इति घञ्। 'नित्यं शतादिमास० ५।२।५७' इति तमडागमः। अस्मादेव निपातनाद् मासस्यासंख्यावाचित्वेऽपि डट्।

वाच्यपरिवर्तनम्—अनिन्दितवेषभृतं सपरिग्राहां तां मासतमादह्नः प्रागेव द्रष्टव्ये(न) (यूयम्)॥ ४५॥

सम्प्रति सुग्रीवः स्वीयानुशासनमवसाययति—

नीवार-फल-मूलाऽशानृषीनप्यतिशेरते।
यस्या गुणा निरुद्द्रावास् तां द्रुतं यात, पश्यत॥ ४६॥

अन्वयः—यस्या निरुद्द्रावाः गुणाः नीवारफल-मूलाशान् ऋषीन् अपि अति-शेरते। द्रुतं यात (यूयम्), तां पश्यत।

हिन्दी—जिसके स्थिर गुण तिन्नोके चावल एवं फल-मूल खानेवाले ऋषियोंसे भी बढ़कर हैं, (अतः तुम लोग) जल्दी जाओ, उसे देखो यानी दर्शन करो।

व्याख्या—यस्याः सीतायाः, निरुद्द्रावाः निश्चलाः स्थिरा इति यावत्, गुणाः ब्रह्मचर्यादयः, नीवारफलमूलाशान् मुन्यन्न-मोचादि-शालूकादि-भक्षकान्, ऋषीन् मुनीन् अपि, अतिशेरते न्यक्कुर्वते। (यूयम्) द्रुतं शीघ्रम्, यात गच्छत, ताम् सीतां, पश्यत अवलोकयत। इत्यनुशासनम्। व्यतिरेकेण सह दीपकोऽपीति सङ्करः।

कोशः—'तृणधान्यानि नीवाराः'। (उद्द्रावस्तु ३५ श्लोके गतः)।

कृदन्तः—'नौ वृ धान्ये ३।३।४८' इति घञ्। 'उपसर्गस्य घञि० ६।३।१२२' इति दीर्घः। 'उदि श्रयति० ३।३।४९' इति घञ् उद्द्रावाः।

वाच्यपरिवर्तनम्—निरुद्द्रावैः गुणैः नीवारफलमूलाशा ऋषयः अतिशय्यन्ते युष्माभिः यायताम्, सा दृश्यताम् ॥ ४६ ॥

सम्प्रति सुग्रीवानुशासनान्ते रामस्त्रिभिः पद्यैर्ब्रूते—

उच्छ्राय-वान् घनाऽऽरावो वानरं जलदाऽऽरवम् ।
दूराऽऽप्लावं हनू-मन्तं रामः प्रोचे गजाप्लवः ॥ ४७ ॥

अन्वयः—उच्छ्रायवान् घनारावः गजाप्लवः रामः जलदारवं दूराप्लावं वानरम् हनूमन्तं प्रोचे ।

हिन्दी—उन्नत शरीरधारी (लम्बे) हाथीके समान चलनेवाले, मेघके समान गरजने वाले रामचन्द्रजीने, मेघनादी एवं दूरतक कूदने वाले वानर हनूमान्‌से कहा ।

व्याख्या—उच्छ्रायवान् उन्नतकायः, घनारावः मेघनादी, गजाप्लवः करिगतिः, रामः दाशरथिः, जलदारवम् अम्भोदशब्दं, दूराप्लावं दूरप्लुतिं वानरं कीशं, हनूमन्तं मारुतिं, प्रोचे प्रबभाषे । समालङ्कारेण सहोपमा ।

कृदन्तः—उभयत्रापि 'विभाषाऽङि रुप्लुवोः ३।३।५०' इति घञ्पौ ।

वाच्यपरिवर्तनम्—उच्छ्रायवता घनारावेण रामेण जलदारवः दूराप्लावः हनुमान् प्रोचे ॥ ४७ ॥

पुनरपि सीतान्वेषणाय प्रेरयति—

अवग्राहे यथा वृष्टिं प्रार्थयन्ते कृषीवलाः ।
प्रार्थयध्वं तथा सीतां, यात सुग्रीव-शासनात् ॥ ४८ ॥

अन्वयः—कृषीवलाः अवग्राहे यथा वृष्टिं प्रार्थयन्ते, तथा सीतां प्रार्थयध्वम् सुग्रीव-शासनात् यात ।

हिन्दी—किसान जैसे सूखा पड़ने पर वृष्टिके लिये तड़पते रहते हैं वैसे ही सीताके लिये तड़पते रहो, यानी सुग्रीवकी आज्ञासे जाओ और सीताकी खोज करो ।

व्याख्या—कृषीवलाः कृषकाः, अवग्राहे वृष्टिप्रतिबन्धे, यथा यद्वत्, वृष्टिं वर्षणं, प्रार्थयन्ते आकाङ्क्षन्ति, तथा तद्वत्, ( यूयम् ) सीतां जानकीं, प्रार्थयध्वम् आशंसध्वम् । सुग्रीवशासनात् कपीन्द्राज्ञया, यात गच्छत । उपमा श्रौती ।

कोशः—'क्षेत्राजीवः कर्षकश्च कृषकश्च कृषीवलः'—इत्यमरः ।

'वृष्टिर्वर्षम् तद्विघातेऽवग्राहावग्रहौ समौ' ।

कृदन्तः—'अवे ग्रहो० ३।३।५१' इति पाक्षिके घञि अपि च अवग्राहावग्रहौ ।

वाच्य०—कृषीवलैः वृष्टिः प्रार्थ्यते, सीता प्रार्थ्यताम्, यायताम् ॥ ४८ ॥

रामोऽभिज्ञानं ददत्स्वादेशमुपसंहरति—

वणिक् प्रग्राह-वान् यद्वत् काले चरति सिद्धये।
देशाऽपेक्षास् तथा यूयं याताऽऽदायाऽङ्गुलीयकम् ॥ ४९ ॥

अन्वयः—प्रग्राहवान् वणिक् यद्वत् काले सिद्धये चरति। तथा अङ्गुलीयकम् आदाय देशापेक्षाः ( यूयम् सिद्धये ) यात।

हिन्दी—हाथमें तराजू लेकर बनिया जैसे समयपर अपने लाभके लिये घूमता है, वैसे ही आप लोग भी अंगूठीकी निशानी लेकर देशकी ( स्थानकी ) अपेक्षा रखते हुए अपनी अभीष्टसिद्धिके लिए निकल पड़े।

व्याख्या—प्रग्राहवान् तुलासूत्रहस्तः, वणिक् वैदेहः व्यापारीत्यर्थः; यद्वत् यथा, काले कृषि-परिणामे समये, सिद्धये स्वलाभाय, चरति ग्रामाद् ग्राममटति। तथा तद्वद्, अङ्गुलीयकम् अभिज्ञानचिह्नमादाय गृहीत्वा, देशापेक्षाः सीताधिष्ठितदेशोन्मुखाः, ( यूयम् सिद्धये ) यात निःसरत। उपमेहापि।

कोशः—प्रग्राह-कोशस्तु—४४ पद्ये गतो द्रष्टव्यः। 'अङ्गुलीयकमूर्मिका'।
'वैदेहकः सार्थवाही नैगमो वाणिजो वणिक्'।

कृदन्तः—'प्रे वणिजाम् ३।३।५२' इति करणे घञ्, ततो मतुप्।

तद्धितः—'जिह्वामूलाङ्गुलेश्छः ४।३।६२' इति ककारोत्तरेण तद्धितछेनाङ्गुलीयकम्।

वाच्यपरिवर्तनम्—वणिजा प्रग्राहवता काले सिद्धये चर्यते। देशापेक्षैः यायताम् ( युष्माभिः ) ॥ ४९ ॥

सम्प्रति सेनापति-कृत्यमाह—

अभिज्ञानं गृहीत्वा ते समुत्पेतुर् नभस्-तलम्।
वाजिनः स्यन्दने भानोर् विमुक्त-प्रग्रहा इव ॥ ५० ॥

अन्वयः—ते अभिज्ञानं गृहीत्वा भानोः स्यन्दने विमुक्तप्रग्रहाः वाजिन इव नभस्तलं समुत्पेतुः।

हिन्दी—वे ( सेनापति ) पहचान ( अंगूठी ) लेकर सूर्यके रथमें छोड़ दिये गये ढीलगामवाले घोड़ोंके समान आकाशमें उछल पड़े।

व्याख्या—ते सेनापतयः, अभिज्ञानम् प्रत्यभिज्ञाचिह्नम्, आदाय गृहीत्वा, भानोः रवेः, स्यन्दने रथे, विमुक्तप्रग्रहाः शिथिलितरश्मयः, वाजिनः अश्वाः, इव यथा, नभस्तलं व्योमप्रदेशं, समुत्पेतुः उत्ससृपुः। सेनापतीनां सूर्याश्वसाम्यमुपमालङ्कारः। उपमैव ग्रहणसमुत्पतनक्रियाद्वयान्वितैककर्तृकदीपकसङ्करः।

कोशः—प्रग्रहस्य ४४ पद्ये गतो द्रष्टव्यः। 'वाजिनोऽश्वेषुपक्षिणः' इत्यमरः।

कृदन्तः—'रश्मौ च ३।३।५३' इत्यत्र विभाषानुवृत्त्या घञोऽभावे 'ग्रहवृदृनिश्चिगमश्च ३।३।५८ इति अप् प्रत्ययः।

वाच्यपरिवर्तनम्—विमुक्तप्रग्रहैः वाजिभिः इव तैः नभस्तलं समुत्पेते ॥५०॥

अन्यदिक्प्रस्थाने सेनापतिनामानि—

उदक् शतवलिं कोट्या, सुषेणं पश्चिमां तथा।
दिशं प्रास्थापयद् राजा वानराणां कृतत्वरः ॥ ५१ ॥

अन्वयः—कृतत्वरः राजा शतवलिं ( सेनापतिं ) वानराणां कोट्या उदक्, तथा सुषेणं (सेनापतिं) पश्चिमां दिशं प्रास्थापयत्।

हिन्दी—जल्दी करनेवाले राजाने ( सुग्रीवने ) शतवलि नामके सेनापतिको करोड़ वानरोंकी सेनाके साथ उत्तरको तथा सुषेण नामके सेनापतिको पश्चिम दिशाको भेजा।

व्याख्या—कृतत्वरः शीघ्रताजुट् ससंभ्रम इति यावत्, राजा भूपः (सुग्रीवः), शतवलिं तन्नामानं सैन्याध्यक्षम्, वानराणां कपीनां, कोट्या कोटिसंख्यया सह, उदक् उदीचीं दिशम्, तथा तद्वत्, सुषेणं सुषेणनामकं सेनापतिं (कोट्या कपिसेनया सह), पश्चिमां प्रतीचीं, दिशं ककुभं, प्रास्थापयत् प्रस्थापितवान्। क्रमालङ्कारः।

कोशः—'सम्भ्रमस्त्वरा'। 'दिग्देशकाले प्राच्यादौ प्रागुदक्प्रत्यगादयः'।

तद्धितः—प्रथमान्ताद्-उदीची-शब्दात् 'दिक्शब्देभ्यः० ५।३।२७' स्तातिप्रत्ययः, तस्य 'अञ्चेर्लुक् ५।३।३०' इति लुकि, 'लुक् तद्धितलुकि १।२।४९' इति स्त्रीप्रत्ययलुकि भत्वाभावाद् 'उद ईत् ६।४।१३९' इत्यस्याप्रवृत्तौ 'तद्धितश्चासर्वविभक्तिः १।१।३८' इत्यव्ययत्वम्। ततो द्वितीयालुक्।

वाच्य०—कृतत्वरेण राज्ञा शतवलिः सुषेणश्च प्रास्थाप्येताम् ॥ ५१ ॥

सम्प्रति पूर्वदिशः प्राधान्यात् तत्र विनतस्य प्रस्थानमाह—

प्राचीं तावद्भिर-व्यग्रः कपिभिर् विनतो ययौ।
अ-प्रग्राहैरिवाऽऽदित्यो वाजिभिर् दूरपातिभिः ॥ ५२ ॥

अन्वयः—अव्यग्रः विनतः अप्रग्राहैः दूरपातिभिः वाजिभिः आदित्य इव तावद्भिः एव कपिभिः प्राचीं दिशं ययौ।

हिन्दी—दृढ विनत नामका सेनानी बन्धनमुक्त ( लगाम छूटे ) दूरतक उछलनेवाले घोड़ोंके साथ सूर्यकी तरह ( नाईं ) उतनी ही अर्थात करोड़ सेनाके साथ पूर्वदिशाको गया।

व्याख्या—अव्यग्रः अनाकुलः, विनतः तन्नामासेनाध्यक्षः, अप्रग्राहैः रश्मि-विरहितैः, दूरपातिभिः विप्रकृष्टयायिभिः, वाजिभिः हयैः, आदित्यः सूर्यः, इव यथा, तावद्भिः तत्प्रमाणैः कोटिसंख्यकैः, एव निश्चितैः, कपिभिः कीशैः ( सह ) प्राचीं पूर्वां, दिशम् आशाम्, ययौ जगाम । उपमया क्रमालङ्कारस्य संकरः ।

कोशः—'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' ।

कृदन्तः—'रश्मौ च ३।३।५३' इति पाक्षिको घञ् अप्रग्राहैः । दूरं पतन्ति तच्छीलाः इति ताच्छील्ये णिनिः दूरपातिभिः ।

तद्धितः—'दित्यदित्यादित्य० ४।१।८५' इति ण्ये आदित्यः । तत् परिमाणं येषाम् इति विगृह्य 'यत्तदेतेभ्यः परिमाणे वतुप् ५।२।३९' इति वतुप् ।

वाच्यपरिवर्तनम्—अव्यग्रेण विनतेन प्राची[1] यये ॥ ५२ ॥

पुनरपि प्रधान-सेनाध्यक्षाणां दक्षिणदिग्गमादि-कृत्यं वर्णयति—

ययुर् विन्ध्यं शरन् मेघैः प्रावारैः प्रवरैरिव ।
प्रच्छन्नं मारुति-प्रष्ठाः सीतां द्रष्टुं प्लवङ्गमाः ॥ ५३ ॥

अन्वयः—मारुति-प्रष्ठाः प्लवङ्गमाः सीतां द्रष्टुम् प्रवरैः प्रावारैः इव शरन्मेघैः प्रच्छन्नं विन्ध्यं ययुः ।

हिन्दी—हनुमान् आदि वानर सीताकी खोजमें स्वच्छ दुपट्टेके समान शरत्कालीन मेघसे आच्छन्न विन्ध्य पर्वतको गये ।

व्याख्या—मारुति-प्रष्ठाः हनुमत्पुरोगाः, प्लवङ्गमाः कपयः, सीतां जानकीं, द्रष्टुम् अन्वेष्टुम्, प्रावारैः श्रेष्ठैः, प्रवारैः उत्तरासङ्गैः, इव यथा, शरन्मेघैः शारदाभ्रैः, (जलाभावाच्छुक्लैरित्यर्थः ), प्रच्छन्नं प्रावृतं, विन्ध्यं विन्ध्यगिरिम्, ययुः ईयुः । गमनदर्शनयोरेककर्त्रन्वयाद्दीपकेनोपमासङ्करः ।

कोशः—'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा' ।
'पुरोगाग्रे-सरप्रष्ठाग्रतःसरपुरःसराः' इत्यमरः ।

---

(१) अत्र विनतो नम्र इति विशेषणीकृत्य सुग्रीवस्य प्राची-प्रेषणं कस्यचित् संकल्पयितुः कियान् प्रमादः । सुग्रीवस्तु नियामकः । तस्य तु स्थानोपवेशनादेव निर्देशां तेषां सेनाध्यक्षाणाम् नियन्त्रणं सम्पद्येत । तस्य बहिर्गमने कथं कार्य्यसञ्चालनं स्यात् । प्रधानस्य तस्य प्रेषणं यदि सम्मतं चेत् कवेस्तदा नामग्राहं सर्वानभिधायापि प्रधानस्य तस्यैव नामग्रहं विस्मरेदिति हास्यास्पदमिदम्, वाल्मीकीयरामायणेऽपि । वाल्मीकिना तु न सुग्रीवस्य क्वापि प्रस्थानमभिहितम् ।

कृदन्तः—'वृणोतेराच्छादने ३।३।५४' इति घञ्, प्रावारैः। अनाच्छादने 'ग्रहवृ० ३।३।५८' इत्यप्, प्रवरैः।

वाच्यपरिवर्तनम्—मारुतिप्रष्ठैः प्लवङ्गमैः विन्ध्यः यये ॥ ५३ ॥

तत्र प्रथमं विन्ध्यपर्वतविचरणमाह—

परिभावं मृगेन्द्राणां कुर्वन्तो नग-मूर्धसु।
विन्ध्ये तिग्मांशु-मार्गस्य चेरुः परिभवोपमे ॥ ५४ ॥

अन्वयः—नगमूर्द्धसु मृगेन्द्राणां परिभावं कुर्वन्तः तिग्मांशुमार्गस्य परिभवोपमे विन्ध्ये चेरुः ( ते )।

हिन्दी—पर्वतके शिखरों पर सिंहोंका तिरस्कार करते हुए बन्दर सेनापति सूर्य्यके मार्गका भी ( ऊँचाईके कारण ) मानों तिरस्कार करनेवाले विन्ध्य पर्वतपर घूमने लगे।

व्याख्या—नगमूर्द्धसु पर्वतशिखरेषु, मृगेन्द्राणां सिंहानां, परिभावम् अवज्ञां, कुर्वन्तः आचरन्तः ( सेनापतयः ), तिग्मांशुमार्गस्य सूर्याध्वनः, (उच्चैस्तरत्वात्) परिभवोपमे तिरस्क्रियातुल्ये, विन्ध्ये तन्नाम्नि पर्वते, चेरुः बभ्रमुः। उपमा... करणचरणक्रियाद्वयेन कप्यन्वयाद्दीपकसङ्करः।

कोशः—'अनादरः परिभवः परीभावस्तिरस्क्रिया'।
'शैल-वृक्षौ नगावगौ'—इत्यमरः।

कृदन्तः—'परौ भुवोऽवज्ञाने ३।३।५५' इति घञ् परिभावः। पक्षेऽप् परिभवः।

वाच्यपरिवर्तनम्—मृगमूर्धसु मृगेन्द्राणां परिभावं कुर्वद्भिः तैः चेरे ॥ ५४॥

पुनस्तेषामेव कृत्यं व्याख्याति—

भ्रेमुः शिलोच्चयांस् तुङ्गानुत्तेरुरतरान् नदान्।
आशंसवो लवं शत्रोः सीतायाश् च विनिश्चयम् ॥ ५५ ॥

अन्वयः—शत्रोः लवं सीतायाश्च विनिश्चयम् आशंसवः ( ते ) तुङ्गान् शिलोच्चयान् भ्रेमुः। अतरान् नदान् उत्तेरुः।

हिन्दी—शत्रुका उच्छेद तथा सीताजीका निश्चय चाहने वाले वे (सेनापति) ऊँचे पर्वतोंको घूमकर लाँघ जाते थे और न तैरने योग्य नदीको भी तैर जाते थे।

व्याख्या—शत्रोः अरेः, लवम् उच्छेदं, सीताया मैथिल्याश्च, विनिश्चयं निनिर्णयम्, आशंसवः अभीप्सवः (ते सेनापतयः), तुङ्गान् उन्नतान्, शिलोच्चयान् पर्वतान्, भ्रेमुः भ्रान्त्वा आरुरुहुः। भ्रमण-क्रियाया व्याप्यत्वात् सकर्मकत्वम्।

त्तरान् तरितुमशक्यान्, नदान् जलाशयविशेषान्, उत्तेरुः उत्तीर्णवन्तः । दीपकः क्रियाद्वयेन कर्त्रन्वयात् ।

कोशः—'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने' इत्यमरः ।

कृदन्तः—'एरच् ३।३।५६' 'ऋदोरप् ३।३।५७' इति क्रमेणोदाहृते सूत्रे । विनिश्चयमिति 'ग्रहवृ० ३।३।५८' इत्यप् ॥ ५५ ॥

पुनस्तानेव विवृणोति—

आदरेण गमं चक्रुर् विषमेष्वप्य-सङ्घसाः ।
व्याप्नुवन्तो दिशो ऽन्यादान् कुर्वन्तः स-व्यधान् हरीन् ॥ ५६ ॥

अन्वयः—हरीन् सव्यधान् (अत एव) अन्यादान् कुर्वन्तः, दिशो व्याप्नुवन्तः, असंघसाः (ते) विषमेषु अपि आदरेण गमम् चक्रुः ।

हिन्दी—सिंहको जख्मी बनाकर आहार छोड़ देनेवाले करते हुए, दिशाओंमें व्याप्त खूब भोजन न करते हुए, विषम स्थानोंमें भी आदरके साथ पहुँच जाते थे ।

व्याख्या—हरीन् सिंहान्, सव्यधान् सप्रहारान्, अत एव अन्यादान् अकृतभोजनान्, कुर्वन्तः विदधतः, दिशः आशाः, व्याप्नुवन्तः व्याप्ताः, असंघता अप्राप्ताहाराः, (ते) विषमेषु दुर्गमेषु (स्थलेषु), आदरेण अनवज्ञया, गमं गतिम्, चक्रुः कृतवन्तः । गमनकर्तारोऽनेकक्रियावन्त इति दीपकालङ्कारः ।

कोशः—'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।'
'जेमनं लेह आहारो निघसो न्याद इत्यपि'—इत्यमरः ।

कृदन्तः—गमम् 'ग्रहवृदृ० ३।३।५८' इत्यप् । सम्पूर्वाद् आदादिकाद् अद भक्षणे इत्यतः 'उपसर्गेऽदः ३।३।५९' इत्यपि, 'घञपोश्च २।४।३८' इत्यदेः घस्लादेशे संघसाः । नञ्समासेऽसंघसाः । 'नौ ण च ३।३।६०' इति ण प्रत्यये उपधावृद्धौ न्यादः । नञ्समासे शसि अन्यादान् । 'व्यधजपोरनुपसर्गे ३।३।६१' इति भावेऽर्थेऽप् सव्यधान् । कर्तरि तु विध्यति मृगानित्यर्थे 'श्याद्व्यधास्रु० ३।१।१४१' इति णे व्याधः ।

वाच्यपरिवर्तनम्—कुर्वद्भिः व्याप्नुवद्भिः असंघसैः गमः चक्रे ॥ ५६ ॥

अधुना तेषां विविधां चेष्टामाह—

संचेरुः स-हसाः केचिदस्वनाः केचिदाटिषुः ।
संयाम-वन्तो यति-वन्-निगदानपरे ऽमुचन् ॥ ५७ ॥

अन्वयः—केचित् सहसाः संचेरुः । केचित् अस्वनाः आटिषुः । अपरे यतिवत् संयामवन्तः निगदान् अमुचन् ।

हिन्दी—कोई हँसते हुए घूमने लगे, कोई मौनी बनकर और कोई संन्यासीके समान संयमी बनकर बढ़े।

व्याख्या—केचित् केचन ( वानराः ), सहसाः हास्योपेताः, संचेरुः प्राचलन्। केचित् केऽपि, अस्वनाः निःशब्दाः, आटिषुः परितोऽभ्रमन्। अपरेऽन्ये तु, यतिवत् संन्यासिसदृशाः, संयामवन्तः यमिनो भूत्वा, निगदान् वचनानि, अमुचन् तत्यजुः। मौनव्रतिनो जाता इत्यर्थः। समुच्चय एवायं किंशब्दवाच्यैककर्तुरनेकक्रियान्वयात्।

कोशः—'शब्दे निनादनिनद-ध्वनिध्वानरव-स्वनाः'।

'निगादो निगदे मादो मद उद्वेग उद्भ्रमे'—इत्यमरः।

कृदन्तः—'स्वनहसोर्वा ३।३।६२' इत्यस्योदाहरणे सहसाः, स्वनाः। 'यमः समुप० ३।३।६३' इत्यस्योदाहरणम् संयाम इति। 'नौ गद० ३।३।६४' इत्यप् निगदान्।

वाच्यपरिवर्तनम्—सहसैः कैश्चित् संचेरे। अस्वनैः आटि। अपरैः संयामवद्भिः निगदा अमुच्यन्त ॥ ५७ ॥

सम्प्रति तेषामेकत्र स्थितिमाख्याति—

अथ क्लमाद-निःक्वाणा नराः क्षीण-पणा इव।
अ-मदाः सेदुरेकस्मिन् नितम्बे निखिला गिरेः ॥ ५८ ॥

अन्वयः—अथ निखिलाः (वानराः) क्लमाद् अनिःक्वाणाः क्षीणपणाः ( अत एव ) अमदा नरा इव गिरेः एकस्मिन् नितम्बे सेदुः।

हिन्दी—परिभ्रमणके बाद क्लान्त थके-मांदे सभी वानर निःशब्द होकर द्रव्य घट जानेसे खिन्न आदमीके समान पर्वतके एक शिखरपर बैठ गये।

व्याख्या—अथ परिभ्रमणानन्तरम्, निखिलाः सर्वेऽपि वानराः, क्लमात् परिश्रमात्, अनिःक्वाणाः निःशब्दाः सन्तः, क्षीणपणाः अर्थरहिताः धनहीना इत्यर्थः, (अत एव) अमदाः गतहर्षाः, नराः जना इव, एकस्मिन् अनिश्चिते, गिरेः पर्वतस्य नितम्बे शिखरे, सेदुः निषण्णाः। काव्यलिङ्गोपमासङ्करः।

कोशः—'निःक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि'।

'पणो द्यूतादिपूत्सृष्टे भृतौ मूल्ये धनेऽपि च'—इत्यमरः।

कृदन्तः—क्षीणपणाः 'नित्यं पणः परिमाणे ३।३।६६' 'मदोऽनुपसर्गे ३।३।६७' इत्यपा अमदाः। 'क्वणो वीणायां च ३।३।६५' इति घञा अपा च निःक्वाणः निक्वण इत्याद्युदाहार्यम्।



वाच्य०—निखिलैः अनिःक्वाणैः क्षीणपणैः अमदैः नरैः इव सेदे ॥ ५८ ॥

इतः कविस्तेषां गुहाप्रवेशभूमिकामुपक्रमते त्रिभिः--

ततः स-संमदास् तत्र निरैक्षन्त पतत्रिणः ।
गुहाद्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥

अन्वयः—ततः ससम्मदाः ते तत्र समजेन निर्यातः पशून् इव गुहाद्वारेण निर्यातः पतत्रिणः निरैक्षन्त ।

हिन्दी—विश्राम करनेके बाद उन लोगोने झुण्डरूपसे निकलते पशुओंके समान गुफाके दरवाजेसे यूथरूपसे निकलते हुए पक्षियोंको देखा ।

व्याख्या—ततः विश्रामानन्तरम्, ससम्मदाः हर्षाप्लुताः, ते वानराः, तत्र तस्मिन् गिरौ, समजेन वृन्दरूपतः, निर्यातः निःसरतः, पशून् चतुष्पदान्, इव यथा, गुहाद्वारेण गह्वरमार्गेण, निर्यातः निर्गच्छतः ( इत्युभयान्वयी ), पतत्रिणः पतगान्, निरैक्षन्त अपश्यन् । अनुमानोपमासङ्करः ।

कोशः—'पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम्' ।
देवखातबिले गुहा गह्वरम्'—इत्यमरः ।

कृदन्तः—'प्रमद-संमदौ हर्षे ३।३।६८' इति निपातनादप् । 'समुदोरजः पशुषु ३।३।६९' इत्यप् । निरुपसर्गपूर्वात् या प्रापणे इत्यादादिकाच्छतरि द्वितीया-बहुवचनम् निर्यातः ।

तिङन्तः—निरुपसर्गेण सह ईक्ष दर्शनाङ्कनयोरिति भौवादिकस्य लङि बहु-वचनम् निरैक्षन्त ।

वाच्य०—ससम्मदैः तैः निर्यान्तः पशव इव पतत्रिणो निरैक्ष्यन्त ॥ ५९ ॥

क्रमशश्च ते गुहां प्रविविशुः—

वीनामुपसरं दृष्ट्वा तेऽन्योन्योपहवा गुहाम् ।
प्राविशन्नाहव-प्रज्ञा आहावमुपलिप्सवः ॥ ६० ॥

अन्वयः—आहवप्रज्ञाः आहावम् उपलिप्सवः ते वीनाम् उपसरं दृष्ट्वा अन्योऽन्योपहवाः सन्तः गुहाम् प्राविशन् ।

हिन्दी—युद्धके जानकार जलाशयकी प्राप्तिके इच्छुक वे वानर पक्षियोंका लगातार निर्गमन देखकर एक दूसरेको पुकारते हुए गुफामें प्रविष्ट हुए ।

व्याख्या—आहवप्रज्ञाः संग्रामबुद्धयः, आहावम् निपानम्, उपलिप्सवः अभि-लाषुकाः, ते पूर्वोक्ताः, वानराः कपयः, वीनां पक्षिणाम्, उपसरम् नैरन्तर्येण निर्गमनम्, दृष्ट्वा वीक्ष्य, अन्योपहवाः परस्पराह्वानकर्तारः, सन्तः भवन्तः, गुहाम् गह्वरम्, प्राविशन् प्रविष्टाः । सूक्ष्मालङ्कारः ।

कोशः—'अभ्यामर्द-समाघात-संग्रामाभ्यागमाऽऽहवाः' ।
'आहावस्तु निपानं स्यादुपकूपजलाशये' ।

कृदन्तः—उपपूर्वात् सृ गतौ इति भौवादिकस्य 'प्रजने सर्तेः ३।३।७१' इत्यपि प्रत्यये उपसर-शब्दसिद्धिः । पुङ्गवानां स्त्रीगवीषु अभिगम उपसरः । स च नैरन्तर्येण भवतीति उपसर इवेति लाक्षणिकः प्रयोगोऽयम् । उपहव इत्यत्र 'ह्वः सम्प्रसारणम्० ३।३।७२' इत्यप् सम्प्रसारणं च । आहव इत्यत्र 'आङि युद्धे ३।३।७३' इत्यप् सम्प्रसारणमपि । 'निपानमाहावः ३।३।७४' इति घञि निपातनात् सम्प्रसारणं, ञित्वाद् वृद्धिः ।

वाच्यपरिवर्तनम्—आहवप्रज्ञैः तैः गुहा प्राविश्यत ॥ ६० ॥

तथैव च तेषां कार्यमाह—

कुर्वन्तो हवमाप्तानां पिपासा-वध-काङ्क्षिणः ।
द्वारं तमो-घन-प्रख्यं गुहायाः प्राविशन् द्रुतम् ॥ ६१ ॥

अन्वयः—आप्तानां हवं कुर्वन्तः पिपासावधकाङ्क्षिणः ते तमोघनप्रख्यम् गुहाया द्वारं द्रुतं प्राविशन् ।

हिन्दी—अपने स्नेहियोंको पुकारते हुए प्यास बुझानेकी कामनावाले वे वानर अन्धकारकी कठोरताके तुल्य गुफाद्वारमें घुस गये ।

व्याख्या—आप्तानां स्निग्धानां, हवम् आह्वानं, कुर्वन्तः विदधतः, पिपासावधकाङ्क्षिणः उदन्यापनयनेच्छवः, ते वानराः, तमोघनप्रख्यम् अन्धकार-काठिन्यतुल्यं ( मूर्तिमत्तम इवेत्यर्थः ), गुहाद्वारं गह्वरमुखम्, प्राविशन् प्रविष्टाः । प्रवेशे पिपासोपशमहेतोरुक्तौ काव्यलिङ्गम् ।

कोशः—'घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे' ।

समासः—पिपासाया वधः तस्याकाङ्क्षिणः । तमसां घनः, तेन प्रख्यम् ।

कृदन्तः—हव इत्यत्र 'भावेऽनुपसर्गस्य ३।३।७५' इत्यप् सम्प्रसारणं च । 'हनश्च वधः ३।३।७६' इत्यप् वधादेशश्च । तं काङ्क्षितुं शीलं येषामित्यर्थे काक्षि माक्षि—काङ्क्षायाम् इत्यस्मात् 'सुप्यजातौ० ३।२।७८' इति णिनिः । मूर्तौ घनः ३।३।७७' इति हन्तेरप्, घनादेशश्च निपातनात् ।

वाच्यपरिवर्तनम्—हवं कुर्वद्भिः तैः गुहाया द्वारं प्राविश्यत ।

शिक्षा—'तादृशी जायते बुद्धिर्व्यवसायोऽपि तादृशः ।
सहायास्तादृशा ज्ञेया यादृशी भवितव्यता' इति शिक्षोदेति ॥६१॥

तत्रत्यां स्थितिं वर्णयति कविः—

तस्मिन्नन्तर्घणे ऽपश्यन् प्रघाणे सौध-सद्मनः।
लौहोद्घन घन-स्कन्धा ललिताऽपघनां स्त्रियम् ॥ ६२ ॥

अन्वयः—लौहोद्घन-घनस्कन्धाः (ते) तस्मिन् अन्तर्घणे सौधसद्मनः प्रघाणे ललिताऽपघनां स्त्रियम् अपश्यन् ।

हिन्दी—लोहेके उद्घनके समान दृढ कन्धे वाले (उन वानरोंने) उस गुफाके अन्दर सफेद कोठेके बहिर्द्वारप्रकोष्ठमें एक स्त्रीको देखा ।

व्याख्या—लौहोद्घनघनस्कन्धाः आयसात्याधानदृढांसाः, ते पूर्वोक्ताः वानराः, तस्मिन् गुहाद्वारे, अन्तर्घणे द्वारातिक्रमणानन्तरं सावकाशप्रदेशे, सौधसद्मनः सुधाभवनस्य, प्रघाणे बहिर्द्वारप्रकोष्ठके, ललिताऽपघनां सुन्दरावयवां, स्त्रियं नारीम्, अपश्यन् ऐक्षन्त । उपमालङ्कारः ।

समासः—लौहस्य उद्घनी तद्वद् घनौ स्कन्धौ येषां ते इति तत्पुरुषगर्भो बहुव्रीहिः । ललिता अपघना यस्याः सेति बहुव्रीहिः ।

कोशः—'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ।
'निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः' ।।
'अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम्'—इत्यमरः ।

कृदन्तः—'अन्तर्घनो देशे ३।३।८७' 'आगारैकदेशे प्रघणः प्रघाणश्च–७९' 'उद्घनोऽत्याधानम्–८०' 'अपघनोऽङ्गम्–८१' इति क्रमात् सूत्राणि ।

वाच्य॰—लौहोद्घनघनस्कन्धैः ललितापघना स्त्री तैः अदृश्यत ।। ६२ ।।

सा स्त्री तेषाम् स्वागतम् कुर्वन्ती ब्रूते द्वाभ्याम्—

सा स्तम्बघ्न-पद-न्यासान् विघनेन्दु-सम-द्युतिः ।
परिघोरु-भुजानाह हसन्ती स्वागतं कपीन् ।। ६३ ।।

अन्वयः—विघनेन्दुसमद्युतिः हसन्ती सा स्तम्बघ्नपदन्यासान् परिघोरु–भुजान् कपीन् स्वागतम् आह ।

हिन्दी—सभी कान्तियोंको परास्त करने वाले चन्द्रमाकी कान्तिके समान कान्तिवाली तथा हँसती हुई उस स्त्रीने अपने पैरोंसे तृण काष्ठादिकोंको रौंददेने-वाले तथा परिघ-कपाटके बेड़ेके समान लम्बी भुजावाले वानरोंका स्वागत किया ।

व्याख्या—विघनेन्दुसमद्युतिः सर्वकान्त्यपहारिचन्द्रकान्तिः, हसन्ती स्मय-माना, सा पूर्वोक्ता स्त्री, स्तम्बघ्न-पदन्यासान् तृणकाष्ठादिमर्दक-चरणविक्षेपान्,

परिघोरुभुजान् अर्गलविशाल-बाहून्, कपीन् वानरान्, स्वागतम् कुशलप्रश्नम् आह ब्रवीति स्म । उपमालङ्कारः ।

समासः—विघनः ( सर्वकान्तिहृत् ) चासौ इन्दुः । अथवा विगता घना यस्मात् स विघनः ( मेघशून्यः ) चासौ इन्दुः । आहो विघनः ( निविडः पूर्णः इति यावत् ) चासौ इन्दुः, तेन समा द्युतिः यस्याः इति कर्मधारयगर्भो बहुव्रीहिः । स्तम्बघ्नः पदन्यासो येषां ते, तान् । परिघौ इव ऊरू भुजौ येषां ते तान् इत्युभयत्र बहुव्रीहिः । उपमालङ्कारः ।

कोशः—'स्तम्बघ्नस्तु स्तम्बधनः स्तम्बो येन निहन्यते' ।
'स्वागतं कुशलप्रश्नः' इति हारावली ।

कृदन्तः—विहन्यतेऽभिभूयते सर्वा द्युतिर्येनेति विगृह्य 'करणेऽयोविद्रुषु ३। ८२' इत्यपि घनादेशे विघनः । स्तम्बो हन्यते येनेति विगृह्य 'स्तम्बे क च ८' इति करणे के 'गमहन० ६।४।९८' इत्युपधालोपे स्तम्बघ्नः । परिहन्यते येन इति विगृह्य 'परौ घः ८४' इत्यपि घादेशे च परिघः ।

वाच्यपरिवर्तनम्—विघनेन्दुसमद्युत्या हसन्त्या तया स्तम्बघ्नपदन्यासाः कपयः उच्यन्ते ॥ ६३ ॥

स्वागतप्रकारमाह—

पिप्रायाऽद्रि-गुहोपघ्नानुद्घान् संघसमागतान् ।
फलैर् नानारसैश् चित्रैः स्वादुशीतैश् च वारिभिः ॥ ६४ ॥

अन्वयः—( सा ) अद्रिगुहोपघ्नान् संघसमागतान् उद्घान् ( तान् ) नानारसैः चित्रैः फलैः स्वादुशीतैः वारिभिश्च पिप्राय ।

हिन्दी—उस स्त्रीने पर्वतकी गुफामें पहुँचे समुदायरूपसे उपस्थित श्रेष्ठ उन कपियोंको तरह-तरह के रसवाले चित्र विचित्र फलोंसे तथा स्वादु ठण्डे जलसे तृप्त किया ।

व्याख्या—( सा स्त्री ) अद्रिगुहोपघ्नान् गिरिगह्वराश्रयान्, संघसमागतान् समूहतः उपस्थितान्, उद्घान् प्रशस्तान् ( तान् वानरान् ), नानारसैः विविधनिस्यन्दैः; चित्रैः बहुविधैः, फलैः आम्रादिभिः, स्वादुशीतैः मधुरशीतलैः, वारिभिः जलैः, पिप्राय ततर्प । काव्यलिङ्गम् ।

समासः—अद्रेः गुहा उपघ्नो येषां ते, तान् । संघेन समागताः तान् क्रमशो बहुव्रीहितत्पुरुषौ ।

कोशः—'स्यादुपघ्नोऽन्तिकाश्रये'।

'मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ।
प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः'—इत्यमरः।

कृदन्तः—'उपघ्न आश्रये ३।३।८५' इत्यप्, उपधापहारश्च निपातनात्। 'संघोद्घौ गणप्रशंसयोः ८६' इति अप्-टिलोपौ निपातनात्।

तिङन्तः—प्रीञ्—तर्पणे कान्तौ च इति क्र्यादिस्थाद् धातोर्लिटि द्वित्वादि-कार्ये पिप्राय।

वाच्यपरिवर्तनम्—( तया ) अद्रिगृहोपघ्नाः सङ्घसमागताः उद्घाः ( ते ) पिप्रियिरे ॥ ६४ ॥

कपिजिज्ञासां कविराख्याति—

निघाऽनिघ-तरुच्छन्ने तस्मिंस् ते लब्ध्रिमैः फलैः।
तृप्तास् तां भ्राजथु-मतीं पप्रच्छुः-'कस्य पूरियम्' ॥ ६५ ॥

अन्वयः—निघानिघतरुच्छन्ने तस्मिन् ( प्रघणे ) लब्ध्रिमैः फलैः तृप्ताः ते 'कस्य इयं पूः' इति भ्राजथुमतीं तां पप्रच्छुः।

हिन्दी—बराबर लम्बाई चौड़ाईवाले तथा उससे भिन्न विषम लम्बाई चौड़ाईवाले पेड़ोंसे ढके हुए उस भवनके बहिर्द्वार-प्रकोष्ठमें प्राप्त होनेवाले फलोंसे तृप्त हुए उन वानरोंने 'यह किसकी नगरी है' ऐसा उस रूपवती रमणीसे पूछा।

व्याख्या—निघानिघतरुच्छन्ने समारोहपरिणाह-तद्भिन्नारोहपरिणाहशील-वृक्षाच्छादिते ( निमितानिमित-द्रुम-निचिते इत्यर्थः ), तस्मिन् पूर्वोक्ते, प्रघाणे भवनबहिर्द्वारप्रकोष्ठे, लब्ध्रिमैः लाभनिर्वृत्तैः ( प्राप्तैरित्यर्थः ), फलैः आम्रादिभिः, तृप्ताः सन्तुष्टाः, ते कपयः, 'कस्य अज्ञातस्य इयं दृश्यमाना पूः नगरी इति इत्थं, भ्राजथुमतीम् शोभाशालिनीं, तां पूर्वोक्तां नारीं, पप्रच्छुः अनुयुयुजुः। फलैस्तृप्ति-तृप्त्या प्रश्न इति कारणमालालङ्कारः।

समासः—निघाश्चानिघाश्चेति निघानिघा इतरेतरद्वन्द्वः। ते च ते तरवः, तैः छन्नः, तस्मिन्, इति कर्मधारयतत्पुरुषौ।

कोशः—'तत्र विष्वक्समे निघः'। 'पूः स्त्री पुरीनगर्यौ वा' इत्यमरः।

कृदन्तः—'निघो निमितम् ३।३।८७' इति निपूर्वाद्धन्तेरपि टिलोपो निपातनात्। 'ड्वितः क्त्रिः ८८' इति क्त्री, 'क्त्रेर्मम्नित्यम् ४।४।२०' इति मप् च। लब्ध्रिमैः इत्यत्र 'ट्वितोऽथुच् ८९' इत्यथुचि मतुप्।

वाच्यपरिवर्तनम्—तृप्तैः तैः सा पप्रच्छे 'अनया पुरा भूयते' इति ॥ ६५ ॥

स्वयं कपयः पृच्छन्ति—

रक्षणं करोषि कस्मात् त्वं यत्नेनाऽऽख्यायतां शुभे ।
स्वप्ने निधि-वदाभाति तव संदर्शनं हि नः ॥ ६६ ॥

अन्वयः—हे शुभे ! त्वं कस्माद् ( हेतोः ) यत्नेन रक्षणं करोषि ? आख्यायताम्, हि तव दर्शनम् नः स्वप्ने निधिवद् आभाति ।

हिन्दी—हे कल्याणि ! तुम किस हेतुसे यत्नपूर्वक रक्षा कर रही हो बताओ, क्योंकि तुम्हारा दर्शन हमलोगोंको स्वप्नमें निधि-प्राप्तिकी तरह प्रतीत हो रहा है।

व्याख्या—हे शुभे कल्याणि ! त्वं पुरोदृश्या, कस्मात् कुतः हेतोः, यत्नेन आदरेण, रक्षणं त्राणं, करोषि विधत्से, आख्यायताम् कथ्यताम् । हि यतः, तव भवत्याः, दर्शनम् ईक्षणम्, नः अस्माकम्, स्वप्ने स्वापकाले, निधिवत् शेवधिरिव, आभाति आभासते । उपमालङ्कारः ।

कोशः—'रक्षणस्त्राणे रणः क्वणे' ।

'निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेः'—इत्यमरः ।

कृदन्तः—'यजयाच० ३।३।९०' इति नङा रक्षणः, यत्नः इत्युभयमपि । 'स्वपो नन् ३।३।९१' इति नना स्वप्नः । 'उपसर्गे: घो किः ३।३।९२' इति किना निधिः ।

वाच्यपरिवर्तनम्—त्वया रक्षणः क्रियते । आचक्ष्व । दर्शनेन आभायते ।

साप्युत्तरयति तान् यथोचितम् स्त्रीलिङ्गप्रत्ययैः—

ततो जलधि-गम्भीरान् वानरान् प्रत्युवाच सा ।
'इयं दानव-राजस्य पूः सृष्टिर् विश्वकर्मणः' ॥ ६७ ॥

अन्वयः—ततः सा 'इयं पूः दानवराजस्य विश्वकर्मणः सृष्टिः' ( इति ) जलधिगम्भीरान् वानरान् प्रत्युवाच ।

हिन्दी—उनके पूछनेके बाद उस स्त्रीने समुद्रके समान गम्भीर वानरोंको जवाब दिया कि यह नगरी दानवराज विश्वकर्माकी सृष्टि है ।

व्याख्या—ततः कपिप्रश्नानन्तरम्, सा स्त्री, जलधिगम्भीरान् रत्नाकरदृढान्, वानरान् कपीन्, प्रत्युवाच उत्तरयामास । 'इयं पुरोदृश्या, पूः नगरी, दानवराजस्य दैत्याधिपतेः, विश्वकर्मणः तदाख्यस्य, सृष्टिः रचना ( अस्तीति शेषः )' । उपमालङ्कारः ।



कोशः—'रत्नाकरो जलनिधिर्यादःपतिरपांपतिः' ।

समासः—जलधिरिव गम्भीराः तान्। 'उपमानानि सामान्यवचनैः २।१।५५' समासः। दानवानां राजेति समासे 'राजाहःसखिभ्यष्टच् ५।४।९१' इति टच्।
कृदन्तः—जलं धीयतेऽस्मिन्निति विगृह्य 'कर्मण्यधिकरणे च ३।३।९३' इति किना जलधिः। सृज्यत इति कर्मणि 'स्त्रियां क्तिन् ९४' इति क्तिना सृष्टिः।
वाच्यपरिवर्तनम्—तया जलधिगम्भीरा वानराः प्रत्यूचिरे। 'अनया पुरा ...कर्मणः सृष्ट्या भूयते' ॥ ६७ ॥
स्वविषये सा वदति—

निहतश् च स्थितिं भिन्दन् दानवोऽसौ बल-द्विषा।
दुहिता मेरुसावर्णेरहं नाम्ना स्वयं-प्र-भा ॥ ६८ ॥

अन्वयः—स्थितिं भिन्दन् असौ दानवः बलिद्विषा निहतः। अहम् च नाम्ना स्वयंप्रभा मेरुसावर्णेः दुहिता।
हिन्दी—लोकमर्यादा के विनाशक उस दानवको इन्द्रने मार डाला और मैं स्वयंप्रभा नामवाली मेरुसावर्णिकी पुत्री हूँ।
व्याख्या—स्थितिं लोकमर्यादां, भिन्दन् विलोपयन्, असौ प्रसिद्धः, दानवः ...नः, बलद्विषा इन्द्रेण, निहतः मारितः। अहम् भवतां पुरोगा, च पुनः, नाम्ना ...या, स्वयंप्रभा इति ख्याता, मेरुसावर्णेः इति नाम्नः, दुहिता पुत्री (शेषः ...स्मीति)। घाते स्थितिविहननहेतोरुक्तौ काव्यलिङ्गमुत्तरेण प्रश्नोहनादुत्तरा-...ङ्कारसङ्करः। इतः स्त्रियां कृदधिकारः ७७ पद्यं यावत्।
कोशः—'संस्था तु मर्यादा धारणा स्थितिः'—इत्यमरः।
कृदन्तः—'स्था-गा-पा-पचो भावे ३।३।९५' इति क्तिना 'द्यतिस्यतिमास्था-...ति किति ७।४।४०' इति इत्वेन च स्थितिः।
वाच्यपरिवर्तनम्—बलद्विट् भिन्दन्तम् अमुम् दानवम् अवधीत्। मेरुसावर्णेः ...दुहित्रा मया भूयते ॥ ६८ ॥
सा स्वप्रभावादेव ततस्तान् बहिश्चकारेति द्वाभ्यामाह—

जूतिमिच्छथ चेत् तूर्णं, कीर्तिं वा पातुमात्मनः।
करोमि वो बहिर्-यूतीन्, पिधध्वं पाणिभिर्दृशः ॥ ६९ ॥

अन्वयः—(यूयम्) तूर्णं जूतिम् वा आत्मनः कीर्तिम् पातुम् इच्छथ चेत् (तदा) पाणिभिः दृशः पिधध्वम्। वः बहिर्यूतीन् करोमि।
हिन्दी—आपलोग निश्चय ही यहाँसे शीघ्र जाने की इच्छा रखते हैं तथा अपनी कीर्तिकी रक्षा चाहते हैं तो आँखे बन्द करें। मैं आप लोगोंको बाहर कर देती हूँ।

व्याख्या—( यूयम् ) तूर्णं शीघ्रम्, जूतिम् गमनं, वा निश्चयतः, ( अत्र निश्चये वा ), आत्मनः स्वस्य, कीर्तिम् यशः, पातुम् अवितुम्, इच्छथ वाञ्छथ, चेत् यदि, ( तदा ) पाणिभिः हस्तैः, दृशः चक्षूंषि, पिधध्वम् रुन्ध्वम् । वः युष्मान् बहिर्यूतीन् बाह्यस्थितीन्, करोमि विदधे । यद्यर्थकल्पनामूलिका अतिशयोक्तिः ।

समासः—बहिः यूतिः येषाम् ते, तान्—इति बहुव्रीहिणा विशेष्यनिघ्नतया पुंस्त्वम् ।

कोशः—'जवने जूतिः सातिस्त्ववसाने स्यादथ ज्वरे जूतिः' ।
'स्युरेवं तु पुनर्वैवे-त्यवधारणवाचकाः'—इत्यमरः ।

कृदन्तः—'ऊतियूति० ३।३।९७' इति निपातिताः सर्वे । कृत-संशब्दने इति चौरादिकात् कीर्तिधातोः क्तिनि, णिचो लोपे कीर्तिः ।

तिङन्तः—लुप्ताकारकाप्युपसर्गपूर्वाद् डुधाञ्-धारणपोषणयोः इति धातोः लोटि, ध्वमि, द्वित्वादिकार्ये 'श्नाभ्यस्तयोः० ६।४।११२' इत्यालोपे 'दधस्तथोश्च ८।२।३८' इत्यभ्यासस्य भष्भावे, 'झलां जश् झशि ८।४।५३' इति दत्वे पिधद्ध्वम् इति । इषेः 'इषुगमि० ७।३।७७' इति छे इच्छथ ।

वाच्य०—युष्माभिः जूतिः इष्यते । बहिर्यूतयः क्रियध्वे । दृशः पिधीयन्ताम् ।

सा तान् निष्कासितवती—

व्रज्या-वती निरुद्धाऽक्षान् विद्येवाऽनुष्ठितक्रियान् ।
निरचिक्रमदिच्छातो वानरांश् चङ्क्रमावतः ॥ ७० ॥

अन्वयः—व्रज्यावती ( सा ) निरुद्धाक्षान् चङ्क्रमावतः वानरान् अनुष्ठितक्रियान् विद्या इव इच्छातः निरचिक्रमत् ।

हिन्दी—प्रशस्तगतिवाली उस स्त्रीने आँख बन्द किये हुए एवं छलांग मारने वाले वानरोंको, जैसे क्रिया-शीलोंको विद्या सफल करती है, वैसे ही उनकी इच्छाके अनुरूप बाहर कर दिया ।

व्याख्या—व्रज्यावती प्रशस्त-गतिशालिनी, सा स्त्री, निरुद्धाक्षान् मुद्रितचक्षुषः, चङ्क्रमावतः विविधगमितः, वानरान् कपीन्, अनुष्ठितक्रियान् सम्पादितशास्त्रविधीन् विद्याशास्त्रम्, इव यथा, इच्छातः तद्वाञ्छानुरूपम्, निरचिक्रमत् निष्कासितवती । यथा शास्त्रविध्यनुसारं व्यवहरन्तः सफला भवन्ति, तथैव तत्कथानुसारं व्यवहरन्तस्ते सफला जाताः । उपमया सह काव्यलिङ्गसङ्करः ।

समासः—निरुद्धानि अक्षीणि यैः ते, तान् । 'बहुव्रीहौ० ५।४।११३' इति षच् । अनुष्ठिताः क्रियाः यैस्त, तान् । अत्र 'गोस्त्रियो० १।२।४८' इति

कोशः—'आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रसारणम्'।

कृदन्तः—व्रज्यावती 'व्रजयजोर्भावे क्यप् ३।३।९८' इति क्यपि प्रशंसायां मतुप्। क्रियते इति विगृह्य कर्मणि 'कृञः श च १००' इति शे 'सार्वधातुके यक् ३।१।६७' इति यकि रिङादेशश्च। 'इच्छा १०१' इति निपातनादिच्छा; ...ऽपि तसिल्। चङ्क्रमावतः—इत्यत्र यङन्तात् 'अप्रत्ययात् १०२' इति अप्रत्यये, 'अतो लोपः ६।४।४८' इत्यलोपे, 'यस्य हलः ६।४।४९' इति यलोपे, टापि, ततो मतुप्। विद्येति 'संज्ञायां समजनि० ९९' इति क्यपा साधुः।

तिङन्तः—क्रमेर्ण्यन्तस्य लुङि, चङि, द्वित्वादौ 'सन्वल्लघुनि० ७।४।९३' इति सन्वद्भावः। ततः इत्वम्।

वाच्य०—व्रज्यावत्या निरुद्धाक्षा वानराः निरक्रमयिषत ॥ ७० ॥

सम्प्रति निष्क्रान्तास्ते ७८ अष्टसप्ततितमपद्यान्तं विविधं चिन्तयन्ति—

> निष्क्रम्य शिक्षया तस्यास् त्रपावन्तो रसातलात्।
> ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे ॥ ७१ ॥

अन्वयः—तस्याः शिक्षया रसातलात् निष्क्रम्य, मासम् अतिक्रान्तं ज्ञात्वा, त्रपावन्तः (ते) व्यथाम् अवललम्बिरे।

हिन्दी—उसकी शिक्षासे रसातलसे निकलकर 'एकमास बीत गया है' यह जानकर लज्जित होकर वे व्यथित हो गये।

व्याख्या—तस्याः स्वयंप्रभायाः, शिक्षया सदुपदेशेन, रसातलात् धराधो-भागात्, निष्क्रम्य विनिर्गत्य, मासम् सुग्रीवप्रत्तं त्रिंशद्दिनावधिकालम्, अतिक्रान्तम् व्यतिगतं, ज्ञात्वा विदित्वा, त्रपावन्तः लज्जिताः (ते वानराः), व्यथाम् दुःखं भयम्, अवललम्बिरे आशिश्रियुः। असफला मासात्ययेऽपीति भयकारणम्। निष्क्रमे तच्छिक्षाहेतुः, व्यथायां मासातिक्रमहेतुरिति काव्यलिङ्गम्।

कोशः—'मन्दाक्षं ह्रीस्त्रपा लज्जा'।
'अधःस्वरूपयोरस्त्री तलम्'—इत्यमरः।

कृदन्तः—शिक्ष विद्योपादाने इति भौवादिकात् 'गुरोश्च हलः ३।३।१०३' इति अः शिक्षा। 'षिद्भिदादिभ्योऽङ् १०४' इत्यङ् त्रपा। व्यथ-भयचलनयोः इत्यस्मात् भिदादित्वादङ्। अत्र भये व्यथिः।

तिङन्तः—लबि अवस्रंसने इत्यस्य लिटि अवललम्बिरे।

वाच्यपरिवर्तनम्—त्रपावद्भिः व्यथा अवललम्बे ॥ ७१ ॥

तेषां चिन्तामेव निर्दिशति कविः—

चिन्ता-वन्तः कथां चक्रुरुपधा-भेद-भीरवः ।
'अ-कृत्वा नृपतेः कार्यं पूजां लप्स्यामहे कथम्' ॥ ७२ ॥

अन्वयः—उपधाभेद-भीरवः चिन्तावन्तः ( ते ) नृपतेः कार्यम् अकृत्वा पूजाम् कथं लप्स्यामहे, इति कथां चक्रुः ।

हिन्दी—भेद खुलनेसे डरे हुए अत एव चिन्ताशील वे 'राजाका कार्य न करके हमलोग सत्कार कैसे पावेंगे' ऐसी वात करने लगे ।

व्याख्या—उपधाभेदभीरवः अवधिपरीक्षा-भेदोद्घाटनभीताः, (अतएव) चिन्ता-वन्तः कर्तव्यविमूढाः (ते वानराः), 'नृपतेः राज्ञः, कार्यम् कृत्यम्, अकृत्वा न विधाय, पूजां सत्कारं, कथं केन प्रकारेण, लप्स्यामहे प्राप्स्यामः' इति कथां वार्ता, चक्रुः विदधुः ।

कोशः—'भेदोपजापावुपधा धर्माद्यैर्यत् परीक्षणम्'—इत्यमरः ।

कृदन्तः—चिन्तादयः 'चिन्तिपूजि० ३।३।१०५' इत्यङ्-प्रत्ययान्ताः । 'आतश्चोपसर्गे १०६' इत्यङ्—उपधा । तस्या भेदात् भीरवः। वयम् मासं यावदन्यकार्यव्यासक्ता इति भीः ।

वाच्य०—उपधाभेदभीरुभिः कथं पूजा लप्स्यते इति कथा चक्रे ॥ ७२ ॥

अङ्गदादीनां नाम्ना तत्तत्कर्त्तव्यं ब्रूते कविः—

प्रायोपासनया शान्ति मन्वानो बालि-सम्भवः ।
युक्त्वा योगं स्थितः शैले विवृण्वंश्चित्त-वेदनाम् ॥ ७३ ॥

अन्वयः—चित्तवेदनां विवृण्वन् बालिसम्भवः प्रायोपासनया शान्ति मन्वानः योगं युक्त्वा शैले स्थितः ।

हिन्दी—अपने मनकी व्यथा प्रगट करते हुए बालिपुत्र ( अङ्गद ) तो अनशन द्वारा शान्ति प्राप्त करनेकी इच्छासे योगका अवलम्बनकर पर्वतपर बैठ गये ।

व्याख्या—चित्तवेदनां मनोव्यथां, विवृण्वन् प्रकाशयन्, बालिसम्भवः वालिसूनुः अङ्गद इत्यर्थः, प्रायोपासनया मरणानशनकर्मणा, शान्तिम् वेदनापगमम्, मन्वानः निश्चिन्वानः, योगं चित्तवृत्तिनिरोधं, युक्त्वा अनुष्ठाय, शैले गिरौ, स्थितः उपविष्टः । उभयत्र हेतुद्वयोक्तौ काव्यलिङ्गम् ।

कोशः—'प्रायश्चानशने मृत्यौ तुल्य-बाहुल्ययोरपि'—इति विश्वः ।

कृदन्तः—उपासनेति 'ण्यासश्रन्थो युच् ३।३।१०७' इति युचा प्रायेणोपासनेति समासः । 'घट्टि-विदि-वन्दिभ्यो युच् वक्तव्यः ३।३।१०७' (वा०) वेदनेति ।



वाच्य०—मन्वानेन विवृण्वता बालिसम्भवेन स्थितेनाभावि ॥ ७३ ॥

जाम्बवतो निर्वेदमाह—

प्रस्कन्दिकामिव प्राप्तो ध्यात्वा ब्रूते स्म जाम्बवान्।
'धिक् शालभञ्जिका-प्रख्यान् विषयान् कल्पनारुचीन्' ॥ ७४ ॥

अन्वयः—जाम्बवान् प्रस्कन्दिकां प्राप्त इव ध्यात्वा कल्पनारुचीन् शालभञ्जिकाप्रख्यान् विषयान् धिक् ब्रूते स्म ।

हिन्दी—जाम्बवान्, प्रास्कन्दिक रोगीके समान सोचकर, ( वास्तवमें कुछ नहीं है) कल्पना मात्रहीमें जिनकी स्थिति है ऐसे शालभञ्जिका-क्रीडाके समान विषयोंको धिक्कार है, यह कहने लगे ।

व्याख्या—जाम्बवान् नामा ऋक्षराजः, प्रस्कन्दिकां रोगविशेषं, प्राप्तः आसादितः, इव यथा, ध्यात्वा विचार्य, कल्पनारुचीन् विकल्पसत्ताकान्, शालभञ्जिकाप्रख्यान्, तन्नामक्रीडातुल्यान्, विषयान् रूपादीन्, धिक् हेयान्, इति एवम्, ब्रूते स्म उक्तिस्म । उत्प्रेक्षा निर्वेदध्वनिश्च ।

समासः—शालभञ्जिकया प्रख्याः, तान् । कल्पनया रुचिः प्रकाशो येषामिति व्यधिकरण-बहुव्रीहिः ।

कोशः—'स्यादुत्तरपदे प्रख्यः प्रकारः प्रतिभो निभः' ( हेमचन्द्रः ) ।
'रूपं रसः स्पर्शगन्धौ शब्दश्च विषया इमे' इति ।

कृदन्तः—'रोगाख्यायां ण्वुल् बहुलम् ३।३।१०८' इति ण्वुला प्रस्कन्दिका । 'संज्ञायाम् १०९' इति ण्वुलन्तेन 'नित्यं क्रीडा० २।२।१७' इति समासः शालभञ्जिकेति ।

वाच्यपरिवर्तनम्—जाम्बवता प्राप्तेन उच्यते स्म ॥ ७४ ॥

जाम्बवत एव कृत्यमाह—

यां कारिं राजपुत्रो ऽयमनुतिष्ठति, तां क्रियाम् ।
अहमप्यनुतिष्ठामि सो ऽप्युक्त्वैवमुपाविशत् ॥ ७५ ॥

अन्वयः—सः अपि 'अयम् राजपुत्रः यां कारिम् अनुतिष्ठति, तां क्रियाम् अहम् अपि अनुतिष्ठामि' एवम् उक्त्वा उपाविशत् ( तत्रेति शेषः ) ।

हिन्दी—'यह राजकुमार जो कार्य करना चाहते हैं, वही कार्य मैं भी करता हूँ' ऐसा कहकर वह भी वहीं बैठ गये ।

व्याख्या—सः जाम्बवान्, अपि तु, अयम् एषः, राजपुत्रः तृणबिन्दुः, यां कारिं क्रियाम्, अनुतिष्ठति करोति, तां तदीयां, क्रियां कृतिम्, अहम् जाम्बवान्,

अपि निश्चयेन, अनुतिष्ठामि करोमि, एवम् इत्थम्, उक्त्वा अभिधाय, उपाविशत् उपविष्टः तत्रेति। उपमाध्वनावृत्तिरुपविष्टिरितिक्रियाद्वयी जाम्बवत्कर्तृकेति दीपकम्।

कृदन्तः—'विभाषाऽऽख्यान-परिप्रश्नयोरिञ् च ३।३।११०' इति इञ् कारिम्। पक्षे शेन क्रियेति ७० सप्ततितमे पद्ये साधिता।

वाच्यपरिवर्तनम्—या कारी राजपुत्रेणानुष्ठीयते सा क्रिया मयाऽप्यनुष्ठीयते, तेनोपावेशि ॥ ७५ ॥

मारुतेरध्यवसायमाह—

> उवाच मारुतिर् वृद्धे संन्यासिन्यत्र वानरान्।
> अहं पर्याय—संप्राप्तां कुर्वे प्रायोपवेशिकाम् ॥ ७६ ॥

अन्वयः—मारुतिः 'अत्र वृद्धे संन्यासिनि ( सति ) अहम् पर्याय-सम्प्राप्तां प्रायोपवेशिकां कुर्वे' इति वानरान् उवाच।

हिन्दी—यहाँ जब वृद्ध जाम्बवान्ने संन्यास ले लिया है और वे प्राण छोड़ने पर उतारू हैं तो मैं भी क्रमप्राप्त अनशन करूँगा ऐसा हनुमान्ने वानरोंसे कहा।

व्याख्या—मारुतिः हनुमान्, अत्र प्रसङ्गे, वृद्धे स्थविरे ( जाम्बवतीत्यर्थः ) संन्यासिनि त्यक्तसर्व-परिग्रहे प्राणत्यागोद्यते इति यावत्, अहम् तदनुगः हनूमान्, पर्यायप्राप्ताम् क्रमोपस्थितां, प्रायोपवेशिकाम् आमरणमनशनं, कुर्वे आचरामि, इति एवम्, वानरान् कपीन्, उवाच जगाद। पर्यायालङ्कारः।

कोशः—'आनुपूर्वी स्त्रियां वावृत् परिपाटी अनुक्रमः।
पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः'। इत्यमरः।

कृदन्तः—'पर्यायार्हणोत्पत्तिषु ण्वुच् ३।३।१११' इति ण्वुजन्तेन समासः। पर्याय इति 'परावनुपात्यय इणः ३।३।३८' इति घञा साधुः।

वाच्यपरिवर्तनम्—मया प्रायोपवेशिका क्रियते। वानरा ऊचिरे ॥ ७६ ॥

सर्वोपसंहारमाह—

> अ-भावे भवतां यो ऽस्मिन् जीवेत्, तस्याऽस्त्व-जीवनिः।
> इत्युक्त्वा सर्व एवा ऽस्थुर् बद्ध्वा योगाऽऽसनानि ते ॥ ७७ ॥

अन्वयः—भवताम् अस्मिन् ( अद्भुते ) अभावे यः जीवेत् तस्य अजीवनिः अस्तु इति उक्त्वा ते सर्वे एव योगासनानि बद्ध्वा अस्थुः।

हिन्दी—आप लोगोंके इस अद्भुत अभावमें अर्थात् आमरण अनशन करने पर जो भी जीयेगा, उसका तो मरण ही अच्छा है। यह कहकर वे सभी योगासन लगाकर बैठ गये।

व्याख्या—भवताम् महासत्त्वानाम्, अस्मिन् ( अद्भुते ) प्रायोपवेशनजे, अभावे विनाशे, यः वानरः, जीवेत् प्राणान् धारयेत्, तस्य निकृष्टस्य, अजीवनिः मरणं, धिग्जीवनम्, अस्तु स्यात्, इति इत्थम् उक्त्वा अभिधाय, ते तदनुगाः कपयः, सर्वे सकलाः, एव निश्चयेन, योगासनानि पद्मस्वस्तिकादीनि, बद्ध्वा विरचय्य, अस्थुः स्थितवन्तः। काव्यलिङ्गासङ्गत्योः सङ्करः।

कृदन्तः—'आक्रोशे नञ्यनिः ३।३।११२' इति जीव-धातोः अनिः इति स्त्रीप्रत्ययकृत्।

तिङन्तः—ष्ठा गतिनिवृत्तौ इत्यस्य लुङि 'गातिस्थाघु० २।४।७७' इति सिचो लुक्, 'आतः ३।४।११०' इति झेर्जुस्, 'आतो लोप इटि च ६।४।६४' इत्यालोपः।

वाच्य०—येन जीव्येत। अजीवन्या भूयताम्। तैः सर्वैः अस्थायि॥ ७७॥

इतः स्त्रीलिङ्गभावं त्यक्त्वा सामान्य-कृदधिक्रियते—

अ-क्लेश्यमसिना ऽत्यन्तं कबन्ध-वधमभ्यधुः।
धिङ् नः प्रपतनं घोरं क्लेदाऽन्तत्वम-नाथ-वत्॥ ७८॥

अन्वयः—( प्रायोपविष्टास्ते ) 'असिना अक्लेश्यम् अत्यन्तं कबन्धवधम् ( तद्विपरीतम् ) अनाथवत् क्लेदान्तत्वम् घोरं नः प्रपतनं धिक्' इति अभ्यधुः।

हिन्दी—( आमरणान्त अनशन करनेवाले वे ) 'तलवारसे बिना कष्टका विराधका मरणवाला, अन्तमें रामके द्वारा जटायुका अग्नि-संस्कारवाला तथा दीर्घबाहु कबन्धका वध अच्छा हुआ, उससे उलटा अनाथोंके समान अन्तमें सड़ जानेवाले भयानक हम लोगोंके विनाश को धिक्कार है'—ऐसा कहने लगे।

व्याख्या—( प्रायोपविष्टास्ते ) 'असिना खड्गेन, अक्लेश्यम्, अकष्टकरम् ( विराधमरणम् ), अत्यन्तम् वह्निजन्यान्त्येष्टिसंस्कारान्तम् ( जटायुमरणम् ), कबन्ध-वधम् योजनबाहुपातनम् तु शोभनम्, अभ्यधुः व्याहार्षुः। ( तद्विपरीतम् ) अनाथवत् अस्वामिकतुल्यम्, घोरम् भयानकम्, क्लेदान्तत्वम् दुर्गन्ध-पूतिभाव-युक्तम्, नः अस्माकम्, प्रपतनम् अवसानम्, धिक् निन्दनीयम्। उपमा।

कृदन्तः—भावार्थौ अक्लेश्य-प्रपतन-शब्दौ 'कृत्यल्युटो बहुलम् ३।३।११३' इत्यनेन साध्यौ।

वाच्य०—तैः कबन्धवधः अभ्यधायि, क्लेदान्तत्वेन प्रपतनेन अभावि॥७८॥

अदृष्टप्रेरितम् यदृच्छया सम्पाति-सम्पातमाह—

ततो मन्दगतिः पक्षी तेषां प्रायोपवेशनम्।
अशनीयमिवाशंसुर् महानायाद-शोभनः॥ ७९॥

अन्वयः—ततः मन्दगतः अशोभनः महान् पक्षी तेषां प्रायोपवेशनम् अशनीयम् इव आशंसुः आयात् ।

हिन्दी—इसके बाद धीरे-धीरे चलनेवाला कुरूप एक बड़ा पक्षी उनके मरणान्त अनशनको अपना भोज्य समझता हुआ आ पहुँचा ।

व्याख्या—ततः प्रायोपवेशनानन्तरम्, मन्दगतः मन्थरगतिः, अशोभनः अदर्शनीयः, महान् बृहदाकारः, पक्षी शकुन्तः, जटायुभ्राता सम्पातिः, तेषां वानराणाम्, प्रायोपवेशनम् मरणान्तमनशनम्, अशनीयम् स्वभोजनीयम्, इव यथा, आशंसुः आशंसिता अभिलाषुक इति यावत्, आयात् प्राप्तः । उत्प्रेक्षालङ्कारः।

कोशः—'आशंसुराशंसितरि'—इत्यमरः ।

कृदन्तः—'नपुंसके भावे क्तः ३।३।११४' इति गमेः क्तः, मन्दं गतम् यस्येति तत्समासे, 'वा हिताग्न्यादिषु २।२।३७' इति परनिपातः । अशोभनः 'ल्युट् च ३।३।११५' इति भावे ल्युट् । अविद्यमानं शोभनं यस्येति बहुव्रीहिः । नन्द्यादित्वाल्ल्युटि तु नञ्समासः । 'कर्मणि च० ३।३।११६' इति प्रकीर्णकाण्डे गतमिति भट्टिकर्तुर्नाभिमतम् । तस्मादिह तदुदाहरणम् नास्ति ।

वाच्यपरिवर्तनम्—मन्दगतेन महता पक्षिणा आशंसुना आयायि ।। ७९ ।।

पक्षिदर्शनाद् भयं दर्शयन्नाह कपिः—

देह-व्रश्चन-तुण्डाग्रं तं विलोक्या ऽशुभाऽऽकरम् ।
पापगोचरमात्मानमशोचन् वानरा मुहुः ।। ८० ।।

अन्वयः—वानराः देहव्रश्चनतुण्डाग्रम् अशुभाकरम् तं विलोक्य आत्मानम् पापगोचरम् मुहुः अशोचन् ।

हिन्दी—वानर, देहको काट डालने वाली नोंकीली चोंचसे युक्त बुराईकी खानस्वरूप उस पक्षी को देखकर 'हम लोग पापी के वशमें पड़ गये' ऐसा बार-बार सोचने लगे ।

व्याख्या—वानराः कपयः, देहव्रश्चन-तुण्डाग्रं कायकर्तनपरशु-मुखाग्रम्, अशुभाकरम् अमङ्गलखनिभूतं तं सम्पातिं, विलोक्य दृष्ट्वा, आत्मानं स्वम्, पापगोचरं कल्मषविषयं, मुहुः भूयो भूयोऽशोचन् अचिन्तयन् । तुण्डाग्रस्य देहव्रश्चनरूपणाद्रूपकम् ।

कोशः—'व्रश्चनः पत्रपरशुरीषिका तूलिका समे' इत्यमरः ।

समासः—देहस्य व्रश्चनः, तुण्डस्य अग्रं यस्य तत्पुरुष-गर्भो बहुव्रीहिः । अशुभस्य आकरः ।



कृदन्तः—वृश्च्यते अनेनेति विगृह्य 'करणाधिकरणयोश्च ३।३।११७' इति

करणे ल्युट्। आकर इति 'पुंसि संज्ञायां घः प्रायेण ११८' इति घेन आक्रियते-ऽस्मिन्निति विग्रहे साधुः। अत्राकरं इवाकर इति ज्ञेयम्। पापगोचरमिति गोचरं-सञ्चर० ११९' इत्यधिकरणे निपातितम्।

वाच्यपरिवर्तनम्—वानरैः पापगोचर आत्मा अशोचि ॥ ८० ॥

वानरा अदृष्टतुन्ना जटायुं स्मरन्ति—

> जटायुः पुण्यकृत् पक्षी दण्डकारण्य-सञ्चरः।
> कृत्वा राघव-कार्यं यः स्वराऽऽरूढो ऽग्नि-संस्कृतः ॥ ८१ ॥

अन्वयः—दण्डकारण्य-संचरः जटायुः पक्षी पुण्यकृत् ( अभूत् ), यः राघव-कार्यं कृत्वा ( तेन ) अग्नि-संस्कृतः स्वरारूढोऽजनि।

हिन्दी—दण्डकाननमें विहरण करनेवाला जटायु पक्षी पुण्यात्मा था, जो रामचन्द्रका कार्य करके ( उनके द्वारा ) अग्नि-संस्कार पाकर स्वर्गको चला गया।

व्याख्या—दण्डकारण्यसञ्चरः दण्डकारण्य-काननावस्थानः, जटायुः तन्नामा, पक्षी शकुन्तः, पुण्यकृत् सुकृतकारी, बभूव अभूत्। यः प्रसिद्धः, राघव-कार्यम् रामकृत्यं सीतात्राणरूपं, कृत्वा विधाय, (तेन रामेण) अग्नि-संस्कृतः रणोत्तरम् अन्त्येष्टिरूपचितादाहसंस्कारं लम्भितः, स्वरारूढः नाकवासः, अजनि जातः।

कृदन्तः—सञ्चर इति सञ्चरति अस्मिन्नित्यर्थे पूर्व-सूत्रसिद्धः। पुण्यकृत् इति क्विपि तुक्। स्वर इति अव्ययत्वात् सुपो लुकि द्वितीयान्तम्। रुहेः क्ते आरूढः कर्तरि। कारणमालानुमानयोः संकरः।

वाच्य०—पुण्यकृता जटायुना पक्षिणा अभावि। येन स्वरारूढेनाभावि।

तद्विपरीतं सम्पातिमामनन्ति ते—

> नरकस्या ऽवतारो ऽयं प्रत्यक्षो ऽस्माकमागतः।
> अ-चेष्टा यदिहाऽन्यायादनेनाऽत्स्यामहे वयम् ॥ ८२ ॥

अन्वयः—अयम् अस्माकं प्रत्यक्षः नरकस्य अवतारः आगतः। यत् इह अचेष्टा वयम् अनेन अन्यायाद् अत्स्यामहे।

हिन्दी—( उसके विपरीत ) यह तो हमलोगोंके प्रत्यक्ष नरकका अवतार ही आया है, क्योंकि यहाँ कुछ भी चेष्टा न करनेवाले अर्थात् आमरण अनशन करने वाले हमलोग इसके द्वारा अन्यायसे खा लिये जायेंगे।



व्याख्या—(तद्विपरीतः) अयम् पुरोगः, अस्माकं वानराणां, प्रत्यक्षं दृश्यः

गोचरः, नरकस्य निरयस्य, अवतारः अवतरणस्वरूपः, आगतः उपस्थितः। यत् यस्मात् कारणात्, इह अस्मिन् स्थाने, अचेष्टाः निश्चलाः आमरणमनशनव्रतिन इति यावत्, वयं वानराः, अनेन पुरोगेण पापात्मना, अन्यायात् अनौचित्यात्, अत्स्यामहे भक्षयिष्यामहे ॥ ८२ ॥

कृदन्तः—'अवे तॄस्त्रोर्घञ् ३।३।१२०' इति घञ्। अक्षू व्याप्तौ इति भौवादिकात् प्रत्यक्षति व्याप्नोति चक्षुरस्मिन्निति 'हलश्च ३।३।१२१ इति घञि प्रत्यक्षः। 'अध्यायन्याय० ३।३।१२२' इति निपातनघञा न्यायः।

वाच्यपरिवर्तनम्—अनेन प्रत्यक्षेण अवतारेण आगतेन भूयते। अयमस्मान् अत्स्यति ॥ ८२ ॥

पूर्वोक्तमेव द्रढयन्ति ते युक्तिभिः—

हृदयोदङ्क-संस्थानं कृतान्ताऽऽनाय-सन्निभम्।
शरीराऽऽखन-तुण्डाऽग्रं प्राप्या-ऽमुं शर्म दुर्लभम् ॥ ८३ ॥

अन्वयः—हृदयोदङ्कसंस्थानं कृतान्तानाय-सन्निभम् शरीराखन-तुण्डाग्रम् अमुं प्राप्य शर्म (अस्माकम्) दुर्लभम्।

हिन्दी—अँतड़ी निकालने वाली सँड़सीके समान, यमके जालके तुल्य, देहको नोचनेवाले चोंचकी नोंक से युक्त इस पक्षीको पाकर कल्याण दुर्लभ है।

व्याख्या—हृदयोदङ्कसंस्थानम् उदर-सन्दंशतुल्यम्, कृतान्तानाय-सन्निभम् यमजालसदृशम्, शरीराखन-तुण्डाग्रम् देहव्रश्चनमुखाग्रम्, अमुम् पुरोगम् पक्षिणं, प्राप्य उपलभ्य, शर्म कल्याणम् (अस्माकम्), दुर्लभम् कृच्छ्रलभ्यम्। उपमा-रूपकानुमानसंसृष्टिः।

कोशः—'आनायः पुंसि जालं स्याच्छण-सूत्रं पवित्रकम्'—इत्यमरः।

समासः—हृदयस्य उदङ्कः तेन संस्थानम्। उभयथा तत्पुरुषः। कृतः अन्तो येन सः, तस्य आनायः, तेन सन्निभम्। बहुव्रीहि-गर्भोभयतत्पुरुषः। शरीरस्य आखनं तुण्डाग्रं यस्येति तत्पुरुषगर्भो बहुव्रीहिः।

कृदन्तः—'उदङ्कोऽनुदके ३।३।१२३' इति घञ् निपात्यते। 'जालमानायः ३।३।१२४' इति करणे घञ् निपातितः। आखन्यतेऽनेनेति विगृह्य 'खनो घ च ३।३।१२५' इति घे आखनः। दुर्लभम् 'ईषद्० ३।३।१२६' इति खल्। 'तयोरेव कृत्यक्तखलर्थाः ३।४।७०' इति कर्मणि ज्ञेयः। 'न सुदुर्भ्याम् ७।१।६८' इति 'उपसर्गात् खल्घञोः ७।१।६७' इति प्राप्तस्य नुमो निषेधः।



वाच्यपरिवर्तनम्—शर्मणा दुर्लभेन भूयते ॥ ८३ ॥

पुनस्तथैव कल्पयन्ति—

ईषदाढ्यङ्करो ऽप्येष न परत्राऽशुभ-क्रियः[1] ।
अस्मानत्तुमितो ऽभ्येति परिग्लानो बुभुक्षया ॥ ८४ ॥

अन्वयः—अशुभक्रियः परत्र न ईषदाढ्यङ्करोऽपि बुभुक्षया परिग्लानः एषः अस्मान् अत्तुम् इतः अभ्येति ।

हिन्दी—खराब कर्म करनेवाला, परलोकमें थोड़ा भी पुण्य सञ्चित न करते हुए यह भूखसे तड़पता हुआ हमलोगोंको खानेके लिये इधर आ रहा है ।

व्याख्या—अशुभक्रियः अभद्रकर्मा, परत्र अन्यलोके, न नहि, ईषदाढ्यङ्करः अनाढ्यः, ईषदपि आढ्यः न कृत इत्यर्थः । ( अतएव ) बुभुक्षया क्षुधा, परिग्लानः प्रम्लानः, एषः अयम्, अस्मान् कपीन्, अत्तुम् खादितुम्, अभ्येति उपसर्पति । अशुभकारीति सार्गायोग्यः । बुभुक्षित इति अस्मानत्यति । अनुमानद्वयसङ्करः ।

कृदन्तः—'कर्तृकर्मणोश्च भूकृञोः ३।३।१२७' इति च्व्यर्थे कर्मोपपदात् कृञः खल् । परिग्लानः परिग्लायति इत्यर्थे वाहुलकात् कर्तरि ल्युट् । 'संयोगादेः० ८।२।४३' इति निष्ठानत्वात् निष्ठान्तो वाऽयं प्रयोगः ।

वाच्य०—एतेनाशुभक्रियेण परिग्लानेन अभीयामहे वयमत्तुम् ॥ ८४ ॥

यावत्तेऽन्यथा तर्कयन्ति तावदुपस्थितः सम्पातिः मधुरं ब्रूते—

सम्प्राप्य वानरान् पक्षी जगाद मधुरं वचः ।
'के यूयं दुरुपस्थाने मनसा ऽप्यद्रि-मूर्धनि' ॥ ८५ ॥

अन्वयः—पक्षी वानरान् सम्प्राप्य 'मनसा अपि दुरुपस्थाने अद्रिमूर्द्धनि यूयं के' इति मधुरं वचः जगाद ।

हिन्दी—पक्षी ( सम्पाति ) वानरोंको पाकर 'मनसे भी मुश्किलसे चढ़ने लायक पर्वतके शिखरपर तुम लोग कौन हो' ऐसा मधुर वचन बोला ।

व्याख्या—पक्षी पत्री ( सम्पातिः ), वानरान् कपीन्, सम्प्राप्य अधिगत्य, मनसा चेतसा, अपि सम्भावनया, दुरुपस्थाने कृच्छ्रलभ्ये (किं पुनः कायेन), अद्रिमूर्द्धनि गिरिश्रृङ्गे, यूयं दृश्यमाना भवन्तः, के किम्परिचयाः ? इति मधुरं मनोहरं वचः वाचं, जगाद उवाच । क्व यूयं क्वाद्रिश्रृङ्गमिति विषमालङ्कारः ।

कृदन्तः—'आतो युच् ३।३।१२८' इति युचा दुरुपस्थानम् । दुःखेनोपस्थीयते-ऽस्मिन्निति विग्रहः । इति कृदधिकारः ।

---

(१) प्रतिमहध्वनिरुत्कुलमकव्यामिदम् । पूर्वमशुभकारीति परलोके दुःखी, क्षुधादि-पीडित इत्यत्रापि अन्यायकारीति । अग्रेऽपि दुःखभाक् इत्यादिध्वनिः ।

वाच्यपरिवर्तनम्—पक्षिणा वचो जगदे । कैः युष्माभिः भूयते ।। ८५ ।।

कृदधिकारं समाप्य पञ्चभिः प्रकीर्णकमाख्याति । अग्रेऽपि सम्पातिः स्वाभिप्रायं विवृणोति—

आत्मनः परिदेवध्वे कुर्वन्तो राम-संकथाम् ।
समानोदर्यमस्माकं जटायुं च स्तुथाऽऽदरात् ॥ ८६ ॥

अन्वयः—रामसंकथां कुर्वन्तः आत्मनः परिदेवध्वे । अस्माकं समानोदर्यं जटायुं च आदरात् स्तुथ । के यूयम् इति पूर्वान्वयः ।

हिन्दी—रामचन्द्रकी उत्तम कथा कहते हुए आपलोग आत्मग्लानि कर रहे हो, मेरे सहोदर जटायुकी बड़े आदरसे प्रशंसा कर रहे हो ? आपलोग कौन हैं ?

व्याख्या—रामसंकथां राघव-सत्प्रबन्धकल्पनां, कुर्वन्तः विदधतः, आत्मनः स्वान्, परिदेवध्वे शोचथ । अस्माकं मम, समानोदर्यं सहोदरं, जटायुम् तन्नामानं कनिष्ठभ्रातरम्, आदरात् बहुमानेन, स्तुथ प्रशंसथ । के यूयमिति प्रश्नः पूर्वमुक्तः । विषमालङ्कारः ।

कोशः—'प्रबन्धकल्पना कथा, प्रवह्लिका प्रहेलिका'—इत्यमरः ।

तद्धितः—'समानोदरे शयितः ४।४।१०८' इति यत् ।

वाच्य०——रामसंकथां कुर्वद्भिः परिदेव्यते । समानोदर्यः जटायुः स्तूयते ।।८६।।

विश्वस्ता वानराः सम्पातिमुत्तरयन्ति—

शङ्का-धवित्र-वचनं प्रत्यूचुर् वानराः खगम् ।
'वयं शत्रु-लवित्रेषोर् दूता रामस्य भू-पतेः' ॥ ८७ ॥

अन्वयः—वानराः शङ्काधवित्र-वचनं खगं प्रति वयम् शत्रु-लवित्रेषोः रामस्य भूपतेः दूताः ( स्मः ) इति ऊचुः ।

हिन्दी—वानरोंने शङ्का दूर करनेवाली बात बोलनेवाले पक्षीसे 'हमलोग शत्रुओंको छेद देनेवाले बाणवाले राजा रामके दूत हैं' यह कहा ।

व्याख्या—वानराः कपयः, शङ्काधवित्र-वचनं सन्देहापनोदकवाक्यं, खगं पक्षिणं प्रति 'वयं सर्वे भवत्पुरोगाः, शत्रुलवित्रेषोः वैरि-विनाशकबाणस्य, रामस्य राघवस्य, भूपतेः राज्ञः, दूताः चराः ( स्म )' इति ऊचुः जगदुः । पूर्वार्द्धे उत्तरार्द्धं हेतुरिति काव्यलिङ्गम् ।

समासः—शङ्कायाः धवित्रं वचनं यस्येति तं खगविशेषणम् । त्रिपदो बहुव्रीहिः । शत्रूणां लवित्रा इषवो यस्येति सः, तस्य ।



कोशः—'धवित्रं व्यजनं तद् यद् रचितं मृगचर्मणा' ।

'दात्रं लवित्रमाबन्धो योत्रं योक्त्रमथ फलम्'—इत्यादि रूढिशब्दकोशः। अत्र यौगिकौ धवित्र-लवित्रशब्दौ।

कृदन्तः—धुनोत्यपनयत्यनेनेति विग्रहे 'अर्तिलूधू० ३।२।१८४' इति करणे ।

वाच्यपरिवर्तनम्—वानरैः इति ऊचे ॥ ८७ ॥

सम्पातेर्बन्धुत्वभावनया तथ्यमुद्गिरन्ति कपयः पद्यैस्त्रिभिः—

केनाऽपि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम्।
हृतां माहाकुलीनस्य तस्य लिप्सामहे वयम् ॥ ८८ ॥

अन्वयः—वयम् माहाकुलीनस्य कुल्यां माहाकुलीं प्रियाम् केनापि दौष्कुलेयेन हृताम् लिप्सामहे।

हिन्दी—हमलोग उन कुलीनकी महाकुलीन प्रियाको, जिसे किसी दुष्कुलीन-ने हर लिया है, पाना चाहते हैं।

व्याख्या—वयं वानराः, महाकुलीनस्य महाकुलापत्यस्य, तस्य प्रसिद्धस्य, राघवस्य, कुल्यां कुले साध्वीं, माहाकुलीं महाकुलप्रसूतां, प्रियां वल्लभां, अज्ञातेन, (केनचित्) दौष्कुलेयेन दुष्कुलोत्पन्नेन, हृतां मुषितां, लिप्सामहे लब्धुमिच्छामः। महाकुलयोः साम्यमिति दुष्कुलस्य हरणमपि तद् योग्यमेवेति अलङ्कारः।

तद्धितः—'दुष्कुलाड् ढक् ४।१।१४२' इति ढकि आदिवृद्धिः दौष्कुलेयः। कुले साध्वीति 'तत्र साधुः ४।४।९८' इति यत्। 'महाकुलादञ्खञौ ४।१।१४१' इति अञ्खञ्भ्याम् माहाकुलीं माहाकुलीनस्येति।

तिङन्तः—डुलभष् प्राप्तौ इति भौवादिकस्य सनि, द्वित्वादौ, 'सनि मीमाघु० ७।४।५४' इति इत्वेऽभ्यासलोपे चर्त्वे लिप्सामहे।

वाच्यपरिवर्तनम्—अस्माभिः प्रिया तस्य हृता लिप्स्यते ॥ ८८ ॥

अन्यच्च—

त्रिंशत्तममहर् यातं मत्वा प्रत्यागमाऽवधिम्।
अकृताऽर्था विषीदन्तः परलोकमुपास्महे ॥ ८९ ॥

अन्वयः—प्रत्यागमावधिं त्रिंशत्तमम् अहः यातं मत्वा अकृतार्थाः विषीदन्तः (वयम्) परलोकम् उपास्महे।



हिन्दी—लौटनेकी अवधि तीसवें दिनको बीती हुई जानकर कार्यमें असफल होनेसे विषण्ण होकर आमरण अनशनकर परलोक जाना चाहते हैं।

व्याख्या—प्रत्यागमावधिं निवर्तनकालं, त्रिंशत्तमम् मासावधि, अहः दिनम्, यातं व्यतीतं, मत्वा परिज्ञाय, अकृतार्थाः असफलप्रयोजनाः, विषीदन्तः विलपन्तः (वयम्) परलोकम् अन्यभुवनम्, उपास्महे सेवामहे, आमरणमनशनं कृत्वा म्रिया महे इत्यर्थः। कारणमाला–काव्यलिङ्गयोः सन्देहसङ्करः।

कोशः—'अवधिस्त्ववधाने स्यात् सीम्नि काले बिले पुमान्'—इति मेदिनी।

तद्धितः—'विंशत्यादिभ्यस्तमडन्यतरस्याम् ५।२।५६' इति पाक्षिके तमटि त्रिंशत्तमम्। पक्षे त्रिंशम् डटि स्यात्।

वाच्यपरिवर्तनम्—अकृतार्थैः विषीदद्भिः परलोक उपास्यते ॥ ८९ ॥

अन्ते उपसंहरन्ति—

> म्रियामहे, न गच्छामः कौशल्यायनि-वल्लभाम्।
> उपलम्भ्याम-पश्यन्तः कौमारीं पततां वर ! ॥ ९० ॥

अन्वयः—हे पततां वर ! कौमारीं कौशल्यायनि-वल्लभाम् उपलम्भ्याम् अपश्यन्तः (वयम्) न गच्छामः, म्रियामहे (इति निश्चयोऽस्माकम्)।

हिन्दी—हे पक्षिश्रेष्ठ ! प्रथमपरिणीता अर्थात् पहले किसी दूसरी स्त्रीसे विवाह न कर एकमात्र इसी कुमारीसे रामने विवाह किया है और यह उनकी प्रियतमा है, उसको प्राप्त करना ही हमारा श्रेष्ठ काम है। अतः विना उसे देखे हमलोग जायेंगे ही नहीं। मर ही जायेंगे।

व्याख्या—हे पततां पक्षिणां वर श्रेष्ठ ! कौमारीम् अकृत-पूर्वदारं पतिं प्राप्तां कौशल्यायनिवल्लभां रामप्रियाम्, उपलम्भ्याम् प्रशंसनीयप्राप्तिम्, अपश्यन्तः अनुपलभमानाः, (वयम्), न नैव, गच्छामः यामः, म्रियामहे प्राणान् जहिम एवेति निश्चयः। मरणे हेतुर्लक्ष्यासिद्धिरिति काव्यलिङ्गम्।

तद्धितः—'कौमारापूर्ववचने ४।२।१३' इति अणि कौमारीम्। कौशल्याया अपत्यमित्यर्थे 'कौशल्य-कार्मार्याभ्यां च ४।१।१५५' इति फिञोऽपि ! आयनादेशे कौशल्यायनिः, तस्य वल्लभाम्।

कृदन्तः—'पोरदुपधात् ३।१।९८' इति यति 'उपात् प्रशंसायाम् ६।१।६६' इति नुमि च उपलम्भ्याम्।

तिङन्तः—मृङ् प्राणत्यागे इति तौदादिकस्य रिङादेशे इयङि च म्रियामहे।



वाच्यपरिवर्तनम्—अपश्यद्भिः न गम्यते। म्रियते ॥ ९० ॥

प्रकीर्णं समाप्य पाणिनीयाष्ट-प्रथमाध्यायस्य द्वितीय-पादगं क्ङिदधिकारमा-रभ्यान्तं चालयति—

जगाद वानरान् पक्षी 'नाध्यगीढ्वं ध्रुवं स्मृतिम् ।
यूयं संकुटितुं यस्मात् काले ऽस्मिन्नध्यवस्यथ' ॥ ९१ ॥

अन्वयः—पक्षी 'यूयम् ध्रुवम् स्मृतिं नाध्यगीढ्वम्, यस्मात् अस्मिन् काले संकुटितुम् अध्यवस्यथ 'इति वानरान् जगाद ।

हिन्दी—पक्षीने वानरोंसे कहा—'तुम लोगोंने अवश्य स्मृति नहीं पढ़ी है, जिससे इस समय मरनेका निश्चय कर रहे हो' ।

व्याख्या—पक्षी पतगः, यूयम् वानराः, "ध्रुवम् निश्चयेन, स्मृतिम् धर्मशास्त्रम् नहि, अध्यगीढ्वम् अपाठिष्ट। यस्मात् हेतोः, अस्मिन् उद्योगप्रधाने, काले वेलायाम्, संकुटितुम् अवसातुम्, अध्यवस्यथ निश्चिनुथ" इति वानरान् कपीन्, जगाद उवाच । अनुमानालङ्कारः ।

कोशः—'स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः'—इत्यमरः ।

तिङन्तः—अधिपूर्वादिङो लुङि गाङादेशे 'गाङ्कुटादिभ्योऽञ्णिन्ङित् १।२।१' इति सिचो ङित्वात् 'घुमास्था० ६।४।६६' इतीत्वम्, 'घि च ८।२।२५' इति सलोपे 'इणः षीध्वम् ८।३।७८' इति ढत्वम् । अध्यवपूर्वस्य स्यतेः 'ओतः श्यनि ७।३।७१' इति ओकारलोपे अध्यवस्यथ ।

वाच्य०—पक्षिणा जगदे । युष्माभिः स्मृतिः नाध्यगायि । अध्यवसीयते ॥९१॥

सम्प्रति कर्तव्यमुपदिशति सम्पातिर्दशभिः पद्यैः—

नाऽयमुद्विजितुं कालः स्वामि-कार्याद् भवादृशाम् ।
हृत-भार्ये च्युते राज्याद् रामे पर्युत्सुके भृशम् ॥ ९२ ॥

अन्वयः—राज्यात् च्युते हृतभार्ये भृशं पर्युत्सुके रामे ( सति ) भवादृशाम् स्वामि-कार्यात् उद्विजितुम् नायं कालः ( अस्तीति शेषः ) ।

हिन्दी—जो राज्यसे च्युत हो चुके हैं, जिनकी स्त्री हर ली गयी है और जो अत्यन्त उत्सुक हैं, ऐसे रामके होने पर आप लोगों जैसे जिम्मेदार पुरुषोंके लिए स्वामीके कार्यसे उद्विग्न होनेका यह समय नहीं है ।

व्याख्या—राज्याद् राष्ट्रात्, च्युते भ्रष्टे, हृतभार्य्ये मुषित-स्त्रीके, भृशम् अत्यन्तम्, पर्युत्सुके उत्कण्ठिते, रामे राघवे ( सति ), भवादृशाम् युष्मद्विधानाम् उत्तरदायित्व-वेदिनाम्, स्वामिकार्यात् प्रभुकृत्यात्, उद्विजितुम् उच्चलितुम् विमुखी-

भवितुमिति यावत्, न नैव, अयम् एषः, कालः समयः इति । अनुद्वेगहेतोरुक्तौ काव्यलिङ्गम् ।

कृदन्तः—'विज इट् १।२।२' इति ङित्वात् गुणाभावे उद्विजितुम् ।

वाच्यपरिवर्तनम्—अनेन कालेन भूयते ॥ ९२ ॥

सम्पातिर्मार्गं दर्शयति—

यत्नं प्रोर्णवितुं तूर्णं दिशं कुरुत दक्षिणाम् ।
प्रोर्णुवित्रीं दिवस् तत्र पुरीं द्रक्ष्यथ काञ्चनीम् ॥ ९३ ॥

अन्वयः—दक्षिणां दिशम् प्रोर्णवितुम् तूर्णं यत्नं कुरुत । तत्र दिवः प्रोर्णुवित्रीं काञ्चनीं पुरीम् द्रक्ष्यथ ( यूयमिति शेषः ) ।

व्याख्या—दक्षिणाम् अवाचीं, दिशम् काष्ठाम्, प्रोर्णवितुम् आच्छादयितुम्, तूर्णं शीघ्रं, यत्नम् उपायं, कुरुत विधत्त । तत्र तस्यां दिशि, दिवः आकाशस्य, प्रोर्णुवित्रीम् अभिव्यापिकां, काञ्चनीं सौवर्णी, पुरीम् नगरीम्, द्रक्ष्यथ विलोकयिष्यथ ( यूयमिति शेषः ) । यद्युद्यमः स्यात्तदा फलावाप्तिर्निश्चितेत्यतिशयोक्तिः ।

कृदन्तः—'विभाषोर्णोः १।२।३' विभाषया इटो ङित्वात् प्रोर्णवितुम् प्रोर्णुवित्रीम् इति गुणोवङौ ।

तिङन्तः—कृञो लोटि, तनादित्वादार्धधातुके उकारे, धातोर्गुणः, 'सार्वधातुकमपित् १।२।४' इति तिङो ङित्त्वे, विकरणस्य गुणाभावः कुरुत । द्रक्ष्यथ इति लृटि 'सृजिदृशोर्झल्यमकिति ६।१।५८' इत्यम् ।

वाच्य०—यत्नः क्रियताम् । प्रोर्णुवित्री काञ्चनी पुरी दर्शिष्यते द्रक्ष्यते वा ।

तत्र चतुर्भिर्लङ्कां विशिनष्टि कलापकैः—

लङ्कां नाम्ना गिरेर् मूर्ध्नि राक्षसेन्द्रेण पालिताम् ।
निर्जित्य शक्रमानीता ददृशुर् यां सुरस्त्रियः ॥ ९४ ॥

अन्वयः—गिरेः मूर्ध्नि राक्षसेन्द्रेण पालिताम् नाम्ना लङ्काम् यां शक्रं निर्जित्य आनीताः सुरस्त्रियः ददृशुः ।

हिन्दी—सुवेल पर्वतके शिखरपर राक्षसराज ( रावण ) द्वारा पालित नामकी नगरी लङ्का है, जिसे (नगरी) इन्द्रको जीतकर रावणद्वारा लाई गयी देवाङ्गनाओंने इस प्रकार देखा है ।

व्याख्या—गिरेः सुवेलनाम्नोऽचलस्य, मूर्ध्नि शिखरे, राक्षसेन्द्रेण क्षपाटराजेन, पालितां गुप्ताम्, नाम्ना संज्ञया, लङ्काम् प्रसिद्धां, यां पुरीं, शक्रम् इन्द्रं निर्जित्य जित्वा, ( रावणेन ) आनीताः आहृताः, सुरस्त्रियः देवललनाः ( अप्सरसः

इत्यर्थः ) ददृशुः ईक्षाञ्चक्रिरे । लङ्कायाः कर्मत्वं, तां यात इति क्रियान्वयात् । उदात्तालङ्कारः ।

तिङन्तः—दृशिर् प्रेक्षणे इति दृश् धातोर्लिटि 'असंयोगाल्लिट्कित् १।२।५' इति कित्वाद् गुणाभावे ददृशुः ।

वाच्यपरिवर्तनम्—राक्षसेन्द्रेण आनीताभिः सुरस्त्रीभिः या ददृशे ॥ ९४ ॥

लङ्काया वैशिष्टयमाह—

बभूव या ऽधिशैलेन्द्रं मृदित्वेवेन्द्र-गोचरम् ।
कुषित्वा जगतां सारं सैका शङ्के कृता भुवि ॥ ९५ ॥

अन्वयः—या ( लङ्का ) अधिशैलम् इन्द्रगोचरम् (अमरावतीमिति यावत्) मृदित्वा इव बभूव । जगताम् सारम् कुषित्वा सा एका भुवि कृता इति शङ्के ।

हिन्दी—जो लङ्का नगरी सुमेरु पर्वतपर स्थित इन्द्रगोचर (अमरावती) को तिरस्कार करती बनी हुई है । वह सारे जगत्के सारको निकालकर पृथ्वीपर तैयार की गई है, यह मेरा तर्क है ।

व्याख्या—या लङ्का, अधिशैलम् सुमेरुपर्वते, इन्द्रगोचरम् शक्रविषयम् (अमरावतीम् सुप्रसिद्धां नगरीं), मृदित्वा तिरस्कृत्य, बभूव जाता । जगतां भुवनानां, सारं श्रेष्ठद्रव्यं, कुषित्वा निष्कृष्य, सा लङ्का, एका अद्वितीया, भुवि पृथिव्यां, कृता निर्मिता, इति एवं, शङ्के मन्ये, अहमिति शेषः । उत्प्रेक्षया सहोदात्तालङ्कारः ।

समासः—शैले इति अधिशैलम्, 'अव्ययं विभक्ति० २।१।६' इति समासे, समासकार्ये च कृते अधिशैलम् । इन्द्रस्य गोचरः इति तत्पुरुषः ।

कृदन्तः—मृदित्वा कुषित्वेत्युभयमपि 'न क्त्वा सेट् १।२।१८' इत्यस्य प्रतिप्रसवस्य 'मृडमृद० १।२।७' इत्यस्योदाहरणम् । अष्टाध्यायी-पुस्तकमुद्घाट्य प्रथमाध्याय-द्वितीयपादोदाहरणानि क्रमाद् दृश्यानि । तत्र 'इन्धिभवतिभ्याञ्च १।२।६' इति भाष्यानादृतेऽपि वुकः कित्वाद् वृद्धिगुणाभावौ गम्यौ बभूवेत्यत्र । वाच्यपरिवर्तनम्—मया बभूवे । ताम् एकाम् अकार्षीत् । ब्रह्मेति शेषः ।

तामेव पुनर्विशिनष्टि—

अ-मृडित्वा सहस्राऽक्षं क्लिशित्वा कौशलैर् निजैः ।
उदित्वा ऽलं चिरं यत्नाद् सैका धात्रा विनिर्मिता ॥ ९६ ॥

अन्वयः—सहस्राक्षम् अमृडित्वा, निजैः कौशलैः चिरं क्लिशित्वा, उदित्वा अलम् । धात्रा यत्नात् सा एका निर्मिता ( इति जानीत यूयम् ) ।

हिन्दी—इन्द्रको दुःखी बनाकर ( इन्द्रपुरीसे बढ़कर होनेके कारण ) एवं अपनी चातुरी को बहुत देरतक कष्ट देकर ब्रह्माजी ने बड़े प्रयत्नसे वह एक अद्वितीय नगरी बनायी है, जिसके सम्बन्ध में कहना व्यर्थ है।

व्याख्या—सहस्राक्षम् इन्द्रम्, अमृडित्वा असुखिनं कृत्वा, निजैः स्वीयैः, कौशलैः नैपुण्यैः, चिरं चिराय, विलशित्वा स्वयम् उपतप्य, उदित्वा अभिधाय, अलम् मे कथनं व्यर्थम्। धात्रा ब्रह्मणा, यत्नात् आयासात्, सा प्रसिद्धा लङ्का, एका अद्वितीया सर्वप्रधाना, निर्मिता रचिता। उदात्तालङ्कारः।

कोशः—'एकोऽन्यार्थे प्रधाने च'।

'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः'।

'अलं भूषण-पर्याप्ति-शक्ति-वारण-वाचकम्'। इत्यमरः।

कृदन्तः—अमृडित्वा क्लिशित्वा—'उदित्वेति १।२।७' इति पूर्व-सूत्रस्थोदाहरणम्।

कारकः—कौशलैरिति हेतोः तृतीया। यत्नादिति हेतोः पञ्चमी।

वाच्यपरिवर्तनम्—तामेकां धाता निरमात्॥ ९६॥

पुनस्तामेव प्रशंसति—

मुषित्वा धनदं पापो यां गृहीत्वाऽवसद् द्विषन्।
तां रुदित्वेव शक्रेण यात लङ्कामुपेक्षिताम्॥ ९७॥

अन्वयः—पापो द्विषन् धनदं मुषित्वा यां गृहीत्वा अवसत्, शक्रेण रुदित्वा इव उपेक्षितां तां यात ( यूयमिति शेषः )।

हिन्दी—कुबेरसे छीनकर ली हुई नगरीमें अब पापी शत्रु (रावण) रहता है। इन्द्र से मानो रोकर उपेक्षा की गयी उस लङ्काकी ओर जाओ ( तुमलोग )।

व्याख्या—पापी दुराचारः, द्विषन् रिपुः रावणः, धनदं राजराजं, मुषित्वा लुण्ठित्वा, यां लङ्कां, गृहीत्वा आदाय, अवसत् उषितः। शक्रेण सुरेन्द्रेण, रुदित्वा अश्रुविमोकं कृत्वा, इव उत्प्रेक्षे, उपेक्षिताम् अपधीरितां, तां प्रसिद्धां लङ्कां नगरीं, यात गच्छत ( यूयमिति शेषः )। उत्प्रेक्षालङ्कारः।

कोशः—'रिपौ वैरि-सपत्नारि-द्विषद्-द्वेषण-दुर्हृदः'।

'मनुष्यधर्मा धनदो राजराजो धनाधिपः'—इत्यमरः।

कृदन्तः—मुषित्वा, गृहीत्वा, रुदित्वेत्यादिषु 'रुदविद-मुषग्रहि० १।२।८' इति इत्‌ किरवम्। ततो गुणाभावः।



वाच्यपरिवर्तनम्—पापेन द्विषता या औष्यत। उपेक्षिता सा यायताम्।

पुनस्तान् उत्साहयति—

विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः ।
उक्तम् पिपृच्छिषूणां वो मा स्म भूत सुषुप्सवः ॥ ९८ ॥

अन्वयः—पिपृच्छिषूणां वः ( मया ) उक्तम् । आत्मीयां शक्तिं विदित्वा रावणं विजिघृक्षवः ( यूयम् ) सुषुप्सवः मा स्म भूत ।

हिन्दी—पूछनेकी इच्छा रखने वाले तुम लोगोंसे मैंने कह दिया । अपनी शक्ति जानकर रावणसे युद्धकी इच्छा करने वाले तुम लोग सोए न रहो ।

व्याख्या—पिपृच्छिषूणाम् अनुयुयुक्षूणाम्, वः युष्माकम्, ( मया ) उक्तम् कथितम् । आत्मीयाम् स्वीयाम्, शक्तिं सामर्थ्यम्, विदित्वा ज्ञात्वा, रावणं लङ्कापतिं ( महाशक्तियुतम् ), विजिघृक्षवः युयुत्सवः, ( यूयम् ) सुषुप्सवः शयनेच्छवः, प्रमत्ता इति यावत्, मा स्म भूत नैवास्थात ।

कृदन्तः—विदित्वेति पूर्वसूत्रेण कित्वम् । तथैव जिघृक्षव इति 'सनि ग्रहगुहोश्च ७।२।१२' इतीण्निषेधः । 'सनाशंस० ३।२।१६८' इत्युः । पिपृच्छिषूणामित्यत्र 'किरश्च पञ्चभ्यः ७।२।७५' इतीट् । सुषुप्सवः सनः कित्वात् सम्प्रसारणम् ।

वाच्य०—अहम् अवोचम्, विजिघृक्षुभिः सुषुप्सुभिः मा भावि ॥ ९८ ॥

तथा च—

नाऽविविदिषुमभ्येति सम्पद् रुरुदिषुम् नरम् ।
किं मुमुषिषु-वद् यात द्विषो नाऽपचिकीर्षया ॥ ९९ ॥

अन्वयः—सम्पद् अविविदिषुम् रुरुदिषुं नरम् न अभ्येति । द्विषः अपचिकीर्षया मुमुषिषुवत् न यात किम् ?

हिन्दी—ज्ञानवृद्धिकी इच्छा न करने वाले रोदनेच्छुके पास सम्पत्ति नहीं जाती है । शत्रुके अपकार करनेकी इच्छासे क्या तुमलोग चोरों की तरह छिपकर वहाँ नहीं जाओगे ?

व्याख्या—सम्पत् सम्पत्तिः, अविविदिषुम् ज्ञानानभिलाषिणम्, रुरुदिषुम् अनुत्साहिनं, नरम् जनम्, न नैव, अभ्येति समागच्छति । द्विषः शत्रोः, अपचिकीर्षया अपकारेच्छया, मुमुषिषुवत् मोषितुकामा इव चौरवदित्यर्थः, किं (प्रश्ने) कथमित्यर्थः, न नहि, यात गच्छत ( यूयमिति शेषः ) । सम्पदनागमनहेतूक्तौ काव्यलिङ्गेनोपमासङ्करः ।

कोशः—'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः'—इत्यमरः ।



कृदन्तः—अपपूर्वात् कृञः सनि 'इको झल् १।२।९' इति सनः कित्वे, 'अज्झनगमां सनि ६।४।१६' इति दीर्घे, 'ऋत इद्धातोः ७।१।१००' रपरे इत्वे, 'हलि च

८।२।७७' दीर्घे चिकीर्षधातोः 'अ प्रत्ययात् ३।३।१०२' इति अप्रत्यये, टापि, अपचिकीर्षया। एवं हि रुदादीनां सर्वेषां सनः कित्वाद् गुणाभावः।

**वाच्यपरिवर्तनम्**—सम्पदा न अविविदिषुः रुरुदिषुः नरः अभीयते। यायताम् न किम् युष्माभिः ॥ ९९ ॥

पुनः सम्पातिस्तान् प्रोत्साहयति—

> बुभुत्सवो द्रुतं सीतां भुत्सीध्वं प्रब्रवीमि वः।
> मा च भुद्ध्वं मृषोक्तम् नः, कृषीढ्वं स्वामिने हितम् ॥ १०० ॥

**अन्वयः**—( अहम् ) वः प्रब्रवीमि सीतां बुभुत्सवः द्रुतम् भुत्सीध्वम् (यूयम्)। नः उक्तम् मृषा मा भुद्ध्वम्। स्वामिने हितम् कृषीढ्वम्।

**हिन्दी**—सीताको खोजनेकी इच्छा रखनेवाले आप लोगोंसे मैं यह कहता हूँ कि आप लोग उसे शीघ्र पा जावेंगे। हमारा कथन झूठ न मानें। स्वामीके लिए हित कर डालें।

**व्याख्या**—अहम् हितैषी, वः युष्मान् रामभक्तान्, प्रब्रवीमि व्याहरामि, सीतां जानकीं, बुभुत्सवः जिज्ञासवः, द्रुतं शीघ्रं, भुत्सीध्वम् ज्ञेयास्त ( ताम् )। ( यूयम् ) नः अस्माकम्, उक्तम् अभिहितं, मृषा मिथ्या, मा भुद्ध्वं नैव आज्ञासीध्वम्। स्वामिने प्रभवे रामायेत्यर्थः, हितं भद्रं, कृषीढ्वम् विधेयास्त। प्रतिपदं ध्वनिः। यद्युक्त्यातिशयोक्तिः।

**कृदन्तः**—बुधेः सन्नन्तात् 'हलन्ताच्च १।२।१०' इति कित्त्वम्, 'एकाचो बशो० ८।२।३७' इति भष्भावः, तत उः बुभुत्सवः। भुत्सीध्वं—'लिङ् सिचो० १।२।११' इति कित्वम्, भष्भावः। माङो योगेऽडभावः। पूर्ववत् कित्त्वम्, भष्भावः— भुद्ध्वम्। कृषीढ्वम्—अत्र 'उश्च १।२।१२' इति कित्वम्, 'इणःषीध्वम्० ८।३।७८' इति ढत्वम्।

**वाच्य०**—यूयम् प्रोच्यध्वे। बुभुत्सुभिः सीता भुत्सीष्ट। मा बोधि। हितं कारिषीष्ट युष्माभिः ॥ १०० ॥

सम्पातिरुपसंहरति उपदेशम्—

> समगध्वं पुरः शत्रोर् मोदयध्वं रघूत्तमम्।
> मोपायध्वं भयं, सीता नोपायंस्त दशाननः ॥ १०१ ॥

**अन्वयः**—( अहमाशंसे ) शत्रोः पुरः समगध्वम्, रघूत्तमम् मोदयध्वम्, भयम् मा उपायध्वम्। दशाननः सीतां न उपायंस्त।

**हिन्दी**—मैं आशा करता हूँ कि आपलोग शत्रुका सामना करेंगे। रामचन्द्र को खुश करेंगे। भय न करें। रावण सीताको अपना नहीं बना पाया है।

व्याख्या—( अहमाशंसे यद् यूयम् ) शत्रोः रिपोः रावणस्येत्यर्थः, पुरोऽग्रे, समगध्वम् संगस्यध्वे, सङ्गताः, स्थास्यध्वे इत्यर्थः। रघूत्तमम् रघुवंशश्रेष्ठम् रामामित्यर्थः, मोदयध्वम् हर्षयत तत्कार्यसम्पादनादिति भावः। भयं भियम्, मा उपायध्वम् न गन्धयत सूचयतेत्यर्थः। दशाननः रावणः, सीतां जानकीं, न उपायं-स्त नैव स्वायत्तीचकार। काव्यलिङ्गदीपकयोः सङ्करः।

तिङन्तः—संपूर्वाद् गमेः 'आशंसायां भूतवच्च ३।३।१३२' इति लुङ्, 'समो गम्यृच्छिभ्याम् १।३।१३' इति तङ्, 'वा गमः १।२।१३' इति सिचः कित्त्वे अनुदात्तोपदेश० ६।४।३७' इति मलोपे 'ह्रस्वादङ्गात् ८।२।२७' इति सलोपः; अडागमे समगध्वम्। उपायध्वम्—'आङो यमहनः १।३।२८' इति तङि 'यमो गन्धने १।२।१५ इति सिचः कित्त्वान्मलोपः। अडागमाभावेऽपि आङा सह दीर्घः। उपायंस्त इत्यत्र आशंसायां भूतवच्चेत्यनेनैवाऽनिष्टाशंसायां लुङ्, 'उपाद्यमः स्वकरणे १।३।५६' इति तङि, 'विभाषोपयमने १।२।१६' इति अकित्त्वपक्षे रूपम्। हनः सिच् १।२।१४' प्रकीर्णे गतम्।

वाच्यपरिवर्तनम्—( युष्माभिः ) समगामि। रघूत्तमः मोद्यताम्। भयम् मा उपायामि। दशाननेन सीता नोपायामि ॥ १०१ ॥

सम्पातिनोत्साहिता वानराः कार्यव्यापृता भवन्ति—

ततः प्रास्थिषताऽद्रीन्द्रं महेन्द्रं वानरा द्रुतम्।
सर्वे किलकिलायन्तो, धैर्यं चाऽऽधिषताऽधिकम् ॥ १०२ ॥

अन्वयः—ततः किल-किलायन्तः सर्वे वानराः द्रुतम् महेन्द्रम् अद्रीन्द्रम् आस्थिषत, धैर्यं च अधिकम् आधिषत।

हिन्दी—तब ( खुशीसे ) किलकारी मारते हुए सभी वानर फौरन महेन्द्र पर्वतपर चल पड़े और अधिक धैर्यशाली हो गये।

व्याख्या—ततः सम्पात्युत्साहनानन्तरम्, ( आनन्दातिरेकात् ) किलकिलायन्तः हर्षध्वनिं कुर्वन्तः, सर्वे निखिलाः, वानराः कपयः, महेन्द्रं तन्नामानम्, अद्रीन्द्रम् पर्वतराजम्, प्रास्थिषत उच्चलिताः, च पुनः, अधिकम् अतिरिक्तम्, धैर्यं धीरत्वम्, आधिषत आहितवन्तः ( आत्मनीति शेषः )। कर्तृकारकस्यानेकक्रियायोगाद्दीपकालङ्कारः।

तिङन्तः— तिष्ठतेर्दधातेश्च कित्त्वमित्वं 'स्थाघ्वोरिच्च १।२।१७' इति समानम्। तिष्ठतेस्तु 'समवप्रविभ्यः स्थः १।३।२२' इति तङ् विशेषः। किलकिलायन्त

इति 'अव्यक्तानुकरण० ६।१।९८' इति डाचि तदन्तात् 'लोहितादिडाज्भ्यः क्यष् ३।१।१३' इति क्यषि, 'वा क्यषः १।३।९०' इति परस्मैपदित्वाच्छतरि रूपम्।

वाच्यपरिवर्तनम्—वानरैः अद्रीन्द्रः प्रास्थायि। धैर्यम् अधायि।

शिक्षा—प्रकरणस्याऽखिलस्यापि ६१ पद्ये प्रत्तेवास्ति ॥ १०२ ॥

सम्प्रति कुलकेन वानर-व्यापारं विवृणोति—

> निकुञ्जे तस्य वर्तित्वा रम्ये प्रक्ष्वेदिताः परम्।
> मणिरत्नाऽधिशयितं प्रत्युदैक्षन्त तोयधिम् ॥ १०३ ॥

अन्वयः—तस्य रम्ये निकुञ्जे वर्तित्वा परं प्रक्ष्वेदिताः (ते) मणिरत्नाधिशयितम् तोयधिम् प्रत्युदैक्षन्त।

हिन्दी—महेन्द्र पर्वतके रमणीय लतागृहोंमें रहकर आनन्द मनानेवाले उन्होंने मणिरत्नादिके आकर समुद्रको देखा।

व्याख्या—तस्य पूर्वोक्त-महेन्द्रस्य, निकुञ्जे लतादिपिहितोदरे, वर्तित्वा व्यवहृत्य, परम् अत्यर्थं, प्रक्ष्वेदिता उच्चैः किलकिलायन्तः (ते), मणि-रत्नाधिशयितम् पद्मरागादिहीरकादिविविधरत्नावस्थानम्, तोयधिम् अब्धिम्, प्रति अभि, उदैक्षन्त अपश्यन्। उदात्तेन काव्यलिङ्गसङ्करः। वर्तनप्रक्ष्वेदननिरीक्षणानेकक्रिया एककर्तृगेति दीप० सङ्करो वेति सन्देहसङ्करः।

कोशः—'निकुञ्ज-कुञ्जौ वा क्लीबे लतादिपिहितोदरे'—इत्यमरः।

समासः—मणयश्च रत्नानि च येषामधिशयितः तमिति समुद्रविशेषणम्, अधिकरणे क्तविधेः। इतरेतर-द्वन्द्वगर्भस्तत्पुरुषः।

कृदन्तः—वर्तित्वेति 'न क्त्वा सेट् १।२।१८' इति कित्व-निषेधाद् गुणः। प्रक्ष्वेदिता अधिशयितम् इत्युभयत्रापि 'निष्ठा शीङ्० १।२।१९' इति कित्वप्रतिषेधाद् गुणः। अधिशयितम् इत्यत्र 'क्तोऽधिकरणे च ३।४।७६' इत्यधिकरणे क्तो विशेषः।

वाच्य०—प्रक्ष्वेदितैः (तैः) मणिरत्नाधिशयितः तोयधिः उदैक्ष्यत ॥१०४॥

समुद्रमेव चतुर्भिः विशिनष्टि—

> अ-मर्षितमिव घ्नन्तं तटाऽद्रीन् सलिलोर्मिभिः।
> श्रिया समग्रं द्युतितं मदेनेव प्रलोठितम् ॥
> पूतं शीतैर् नभस्वद्भिर् ग्रन्थित्वेव स्थितं रुचः।
> गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्वतो मुहुः ॥

वञ्चित्वा ऽप्यम्बरं दूरं स्वस्मिन्स् तिष्ठतमात्मनि ।
तृषित्वेवाऽनिशं स्वादु पिबन्तं सरितां पयः ॥
द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्धितम् ।
मेरोर् जेतुमिवा ऽऽभोगमुच्चैर् दिद्योतिषुं मुहुः ॥ १०४–१०७ ॥

अन्वयः—अमर्षितम् इव सलिलोर्मिभिः तटाद्रीन् घ्नन्तम्, श्रिया समग्रं द्युतितम् मदेन प्रलोठितम् इव स्थितम्, शीतैः नभस्वद्भिः पूतम्, रुचः ग्रन्थित्वा इव (मन्ये) स्थितम्, तरङ्गान् गुम्फित्वा इव मुहुः सर्वतो निरस्यन्तम्, अम्बरम् वञ्चित्वा इव दूरं स्वस्मिन् आत्मनि तिष्ठन्तम्, तृषित्वा इव सरितां स्वादु पयः अनिशम् पिबन्तम्, शशिना नक्तं द्युतित्वा रश्मिभिः परिवर्द्धितम्, मेरोः आभोगम् जेतुम् इव मुहुः उच्चैः दिद्योतिषुम् ( तोयधिम् उदैक्षन्त इति पूर्वेण अन्वयः ) ।

हिन्दी—क्रुद्ध व्यक्तिके समान जलकी लहरोंसे तटवर्ती पर्वतोंको थपेड़ते हुए, शोभासे सर्वथा प्रकाशित, नशेसे मूर्छितके समान स्थित, ठण्डे वायुसे पवित्र, कान्तियोंको पिरोकर मानों बैठे हुए, तरङ्गोंको मानों बाँधकर बारम्बार चारों ओर फेंकते हुए, आकाशको मानों धोखा देकर दूर तक अपनेमें ही ठहरे हुए, प्यासा होकर मानों नदियोंके ठण्डे जलको बराबर पीते हुए, चन्द्रमा द्वारा रात्रिमें चमककर किरणोंसे बढ़ा दिये गये, मेरुकी पूर्णताको मानों जीतनेके लिये बारम्बार ऊँचे उछलनेकी इच्छा रखने वाले समुद्रको देखा ।

व्याख्या—अमर्षितम् क्रुद्धम्, इव यथा, सलिलोर्मिभिः जलतरङ्गैः, तटाद्रीन् वेलागिरीन्, घ्नन्तम् ताडयन्तम् । श्रिया शोभया, समग्रं सम्पूर्णं, द्युतितम् प्रकाशितम्, मदेन मादक-द्रव्यप्रभावेण, प्रलोठितम् घूर्णितुमारब्धम्, इव यथा, स्थितम् विद्यमानम् । शीतैः आर्द्रैः, नभस्वद्भिः वातैः, पूतं पवित्रम्, रुचः दीप्तीः, ग्रन्थित्वा गुम्फित्वा, इव मन्ये, स्थितम् विद्यमानम् । तरङ्गान् ऊर्मीः, गुम्फित्वा सन्दर्भ्य, इव यथा, मुहुः भूयोभूयः, सर्वतः समन्तात्, निरस्यन्तम् क्षिपन्तम् । अम्बरम् आकाशम्, वञ्चित्वा प्रतार्य, इव यथा, दूरम् विप्रकृष्टम्, स्वस्मिन् निजे, आत्मनि स्वरूपे, तिष्ठन्तम् विद्यमानम् । तृषित्वा पिपासित्वा, इव शङ्के, सरितां नदीनां, स्वादु मधुरं, पयः जलम्, अनिशम् निरन्तरम्, पिबन्तम् धयन्तम् । शशिना चन्द्रेण, नक्तं रात्रौ, द्युतित्वा प्रकाश्य, रश्मिभिः किरणैः, परिवर्द्धितम् वृद्धिं नीतम्, मेरोः देवगिरेः, आभोगम् परिपूर्णताम्, जेतुम् अभिभवितुम्, इव यथा, मुहुः बहुधा, उच्चैः उन्नतं यथा स्यात्, दिद्योतिषुम् प्रचिकासिषुम् विवर्द्धिषुमिति यावत् ( तोयधिम् उदैक्षन्त इति पूर्वेणान्वयः ) । सर्वत्रोत्प्रेक्षालङ्कारः ।

कोशः—'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु'।
'किरणोऽस्र-मयूखांशु-गभस्ति-घृणि-रश्मयः'।
'आभोगः परिपूर्णता'—इत्यमरः।

कृदन्तः—'मृषस्तितिक्षायाम् १।२।२०' इति कित्त्वप्रतिषेधः। द्युतितमिति कर्तरि क्तः। भावेऽपि क्ते सति, अर्श आदित्वादचि समुद्रविशेषणम्। अस्मिन् पक्षे 'उदुपधाद० १।२।२१' इति पाक्षिक-कित्त्वप्रतिषेधादिह कित्त्वमेव। प्रलोठितमिति 'आदिकर्मणि० ३।४।७१' निष्ठायामकित्त्वोदाहरणम्। पूतम्—'पूङश्च ७।२।५१' इति विकल्पेनेट्, कित्त्वाद् गुणाभावः। ग्रन्थित्वा गुम्फित्वेत्युभयमपि 'नोपधात्थफान्ताद्वा १।२।२३' इति पाक्षिकः कित्त्वप्रतिषेधः। वञ्चित्वेति 'वञ्चिलुञ्चि० १।२।२४' इत्यनेन, तृषित्वेति 'तृषिमृषि० १।२।२५' इति कित्त्वप्रतिषेधः। द्युतित्वा, दिद्योतिषुम् इत्यत्र 'रलोव्युपधात् १।२।२६' इति कित्त्वाकित्त्वे ( १।२।२२ ) प्रकीर्णे गतम् ३–१८ पद्ये )।

वाच्यपरिवर्तनम्—सर्वमपि अन्यत्रासंबद्धं विशेषणं द्वितीयान्तम् प्रथमान्तं कृत्वा विशेषणत्वात् उदैक्ष्यतेति क्रियया योज्यम् ॥ १०४–१०७ ॥

अवसाने मारुति-प्रस्थानमाह पृथ्वीछन्दसा—

विलोक्य सलिलोच्चयानधि-समुद्रमभ्रंलिहान्,
भ्रमन्-मकर-भीषणं समधिगम्य चाऽधः पयः।
गमाऽगम-सहं द्रुतं कपि-वृषाः परिप्रैषयन्
गजेन्द्र-गुरु-विक्रमं तरु-मृगोत्तमं मारुतिम् ॥ १०८ ॥

अन्वयः—कपिवृषा अधिसमुद्रम् अभ्रंलिहान् सलिलोच्चयान् विलोक्य अधश्च भ्रमन्मकरभीषणं पयः समधिगम्य गमागमसहं गजेन्द्र-गुरु-विक्रमं तरुमृगोत्तमं मारुतिं द्रुतं परिप्रैषयन्।

हिन्दी—श्रेष्ठ वानरोंने ( अङ्गद जाम्बवान् आदिने ); समुद्रमें ऊपर आकाश छूने वाले तरङ्गोंको देखकर; नीचे घूमने वाले मगरोंसे भयानक जलको जानकर, आने-जानेमें समर्थ श्रेष्ठ बन्दर हनुमान्जीको; सीताकी खोजमें भेज दिया।

व्याख्या—कपिवृषाः वानरमुख्याः ( अङ्गद-जाम्बवत्प्रभृतयः ), अधिसमुद्रम् अब्धेरुपरि, अभ्रंलिहान् मेघस्पृशः, सलिलोच्चयान् जलतरङ्गान्, विलोक्य वीक्ष्य, अधश्च निम्नप्रदेशे च, भ्रमन्मकरभीषणम् घूर्णन्नक्रभयानकम्, पयः सलिलम्, समधिगम्य ज्ञात्वा, गमागम-सहं यातायातक्षमम्, गजेन्द्र-गुरु-विक्रमम् करिवरमहा-

...म्, तरुमृगोत्तमम् कपिश्रेष्ठम्, मारुतं हनुमन्तम्, परिप्रैषयन् व्यसर्जयन् ...तामन्वेष्टुमित्यर्थः )। 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति पृथ्वी- ...। सप्तदशाक्षरम् १७ । उपमालङ्कारश्चानेकैरुदात्तकाव्यलिङ्गसमैः संसृष्टः ।

कोशः—'शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे वृषः' ( इति नानार्थो वृषः ) ।

समासः—कपिषु वृषाः । भ्रमन्तश्च ते मकराः, तैः भीषणम् । करिषु वरः ...तत्पुरुषोत्तरम् महान् पराक्रमो यस्येत्यनेकपदो बहुव्रीहिः । तथैव गजेषु ... गजानां वा इन्द्र इति तत्पुरुषोत्तरम् तस्येव गुरुः विक्रमो यस्येति बहुपदो ...हिः । तरुप्रचारिणो मृगाः तरुमृगाः इति शाकपार्थिवादित्वात् मध्यम-पद- ...समासे, तरुमृगेषु उत्तम इति सप्तमी-तत्पुरुषः । समुद्रे इति विभक्त्यर्थे- ...भावात् अधिसमुद्रम् ।

कृदन्तः—ऊर्ध्वं चीयत इति 'एरच् ३।३।५६' उच्चयात् । अभ्रं लिहन्तीति ...भ्रे लिहः ३।२।३२' खश् । 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुमागमश्च ।

वाच्य०—कपिवृषैः गजेन्द्रगुरुविक्रमः तरुमृगोत्तमः मारुतिः परिप्रैष्यत ।

इति श्रीभट्टिमहाकाव्ये रावणवधाभिधे लक्षणात्मकेऽधिकार-
काण्डे लक्ष्यात्मके च सीतान्वेषणाख्ये सम्पात्युपदेशान्ते
मारुतिप्रेषणो नाम सप्तमः सर्गः समाप्तः ।

## अथ अष्टमः सर्गः

( सर्गेऽस्मिन् अष्टाध्यायी-प्रथमाध्यायस्य तृतीयपादीयात् 'अनुदात्तङित आत्मनेपदम् १।३।१२' इति सूत्रत आरभ्य 'लुटि च क्लृपः १।३।९३' इति सूत्रान्तम् सर्वसूत्राणां क्रमशः उदाहरणम् ऊनसप्ततितमपद्यान्तम् अकल्प्स्यत् इति यावत् ज्ञेयम् । नात्र टीकायां सूत्राणां प्रतिपद्यमध्यायपादोल्लेखः स्यात् । सूत्र संख्ययैव अष्टाध्यायीपुस्तकमुद्घाट्य तत एव सूत्रार्थं कुर्वद्भिः तिङन्तप्रयोगसिद्धि कार्या । अत्र तद्धितकृदन्तयोरेव यथा–प्राप्तमुदाहरणं साधितं स्यादिति संक्षेपः )

तत्र प्रथमं हनुमतोऽब्धिलङ्घनं प्रस्तौति—

अगाधत ततो व्योम हनूमानुरु-विग्रहः ।
अत्यशेरत तद्-वेगं न सुपर्णाऽर्क-मारुताः ॥ १ ॥

अन्वयः—तत उरुविग्रहो हनूमान् व्योम अगाधत । सुपर्णार्कमारुताः तद्वेगम् न अत्यशेरत ।

हिन्दी—अपने साथियोंसे विदाई लेकर विशालकाय हनूमान्जी आकाशमें आरूढ हुए । गरुड़, सूर्य तथा वासुदेव भी उनके वेगको नहीं लाँघ सके ।

व्याख्या—ततः प्रेषणानन्तरम्, उरुविग्रहः विशालकायः, हनूमान् मारुतिः व्योम गगनम्; अगाधत प्रातिष्ठत । सुपर्णार्कमारुताः गरुडोष्णगुवायवः, तद्वेगम् हनूमज्जवम्, न नैव, अत्यशेरत अत्यक्रामन् । 'गाधृ-प्रतिष्ठालिप्सयोरिति' भ्वादिको धातुः । लङि अगाधत । ( १।३।१२ सूत्रम् ) । गगनगाहने ऊरुविग्रहः हेतोरभिधानात् काव्यलिङ्गम् । वेगातिक्रमणाभावस्य कारणानभिधानाद्विभावनेति सङ्करालङ्कारः ।

कोशः—'गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः' ।
'नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः' । इत्यमरः ।

तद्धितः—निन्दितो हनुर्यस्येति विगृह्य 'तदस्यास्त्यस्मिन्० ५।२।९४' इति निन्दाऽर्थे मतुप् । 'मतौ बह्वचोऽनजि० ६।३।११९' इति हनोर्दीर्घः ।

वाच्य०—उरुविग्रहेण हनुमता व्योम अगाध्यत । सुपर्णार्कमारुतैः तद्वेगः न अत्यशय्यत ।



शिक्षा—'किं दूरं व्यवसायिनाम्'—इति ॥ १ ॥

भाहते: सामर्थ्यमाह—

अभायत यथाऽर्केण सुप्रातेन शरन्-मुखे ।
गम्यमानं न तेनाऽऽसीदगतं क्रामता पुरः ॥ २ ॥

अन्वयः—शरन्मुखे सुप्रातेन अर्केण यथा तेन अभायत । (एवम्) पुरः गम्यमानम् (वर्त्म) क्रामता अर्केण यथा तेन अगतम् (अगम्यम्) न आसीत् ।

हिन्दी—शरद् ऋतुके प्रारम्भमें प्रातःकालको सुन्दर बनाने वाले सूर्यके समान वह (हनुमान्) सुशोभित हो रहे थे । एवम् आगे जाने योग्य मार्गको आक्रमण करने वाले सूर्यके समान उन्होंने (सभी मार्गको आक्रमण कर लिया) छोड़ नहीं दिया ।

व्याख्या—शरन्मुखे शरदागमे, सुप्रातेन शोभनप्रभातेन, अर्केण रविणा, यथा तेन हनूमता, अभायत अद्युत्यत । (एवम्) पुरोऽग्रे, गम्यमानम् अवष्टभ्यमानं, मार्गं, क्रामता उल्लङ्घमानेन, अर्केण सूर्येण, यथा इव, तेन हनूमता, अगतम् अगम्यम्, (किमपि) न नैव, आसीत् अभूत् । सर्वमेवाक्रान्तमित्यर्थः । 'भा—दीप्तौ' इत्यादिर्धातुः । भावे प्रयोगोऽभायत । (१३ सूत्रम्) । उपमातिशयोक्तिसङ्करः ।

तद्धितः—सु प्रातः येनेति विगृह्य 'सुप्रातसुश्व० ५।४।१२०' इति निपातनात् सुप्रातेनेति ।

वाच्य०—सुप्रातः अर्कः यथा सः अभात् । क्रामन् सः अगमत् ॥ २ ॥

हनुमत्समुद्रयोः परस्परं स्पर्द्धां विवृणोति—

वियति व्यत्यतन्वातां मूर्ती हरिपयोनिधी ।
व्यत्यैतां चोत्तमं मार्गमर्केन्द्रेन्दु-निषेवितम् ॥ ३ ॥

अन्वयः—हरिपयोनिधी वियति मूर्ती व्यत्यतन्वाताम् । अर्केन्द्रेन्दुनिषेवितम् उत्तमम् मार्गं च व्यत्यैताम् ।

हिन्दी—हनुमान् और समुद्र दोनों आकाशमें अपनी देहको एकके फैलानेके स्थानमें दूसरे फैलाते रहे, और वे दोनों—सूर्य, इन्द्र और चन्द्रसे सेवित उत्तम मार्गमें एकके चलनेके स्थान पर दूसरे चलते रहे ।

व्याख्या—हरिपयोनिधी हनुमत्समुद्रौ, वियति गगने, मूर्ती आत्मदेहौ, व्यत्यतन्वाताम् व्यतिविस्तारितवन्तौ (अर्थात् यत्र वियति हरेः स्वमूर्तिविस्तारावसरस्तत्र पयोनिधिः स्वमूर्तिं विस्तारितवान् । यत्र वियति पयोनिधेः स्वमूर्तिविस्तारावसरस्तत्र हरिः स्वमूर्तिं विस्तारितवान् इति कर्मव्यतिहारो ज्ञेयः । ... कर्मव्यतिहारः क्रियायाः करणात् । यथा देवदत्तसाध्यां क्रियां कुर्वन् यज्ञदत्तः तत्क्रिया-

कारीत्युच्यत एव ), अर्केन्द्रेन्दुनिषेवितम् सूर्यशक्रचन्द्राभ्यस्तम्, उत्तमं उत्कृष्टं, मार्गं पन्थानं च व्यत्यैताम् व्यतिगतवन्तौ । पूर्वत्रात्मनेपदोदाहरणम्, उत्तरत्र गत्यर्थत्वात्तन्निषेधोदाहरणं ज्ञेयम् । 'तनु विस्तारे' तनादिः । 'इण् गतौ' अदादिः। पूर्वत्र १४, परत्र १५ इति सूत्रद्वयम् । परिवृत्तिरलङ्कारः ।

कृदन्तः—परिनिपूर्वस्य सेवृ धातोः क्ते 'परिनिविभ्यः सेव० ८।३।७०' इति षत्वम् ।

कोशः—'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु'—इति नानार्थोऽमरः ।

वाच्यपरिवर्तनम्—हरिपयोनिधिभ्याम् मूर्ती व्यत्यतन्येताम् । अर्केन्द्रेन्दुनिषेवितः उत्तमः मार्गः व्यत्यैयत ॥ ३ ॥

हनूमतो पराक्रममाह—

व्यतिजिग्ये समुद्रोऽपि न धैर्यं तस्य गच्छतः ।
व्यत्यगच्छत् न च गतं प्रचण्डोऽपि प्रभञ्जनः ॥ ४ ॥

अन्वयः—समुद्रः अपि गच्छतः तस्य धैर्यं न व्यतिजिग्ये । ( एवम् ) प्रचण्डः अपि प्रभञ्जनः तस्य गतं न व्यत्यगच्छत् ।

हिन्दी—( अदला-बदलीमें ) समुद्र भी जानेवाले हनुमान्के धैर्यको नहीं जीत सके, ( पर ) हनुमान्ने जीत लिया । ( योंही ) प्रचण्ड वायु भी उनकी गतिको न पा सके ( पर हनुमान्ने पा लिया ) ।

व्याख्या—समुद्रो वार्धिः,अपि निश्चयेन, गच्छतः यातः, तस्य मारुतेः, धैर्यम् धृतिम्, न नैव, व्यतिजिग्ये जिगाय । परन्तु हनुमान् व्यतिजिग्ये इति कर्मव्यतिहारतयात्मनेपदम् । ( एवम् ) प्रचण्डः प्रबलोऽपि निश्चयेन, प्रभञ्जनः वातः तस्य मारुतेर्गतं गमनं, न नैव, व्यत्यगच्छत् व्यत्यैत् । हनूमाँस्तु तस्य गतं व्यत्यैदिति कर्मव्यतिहारेऽपि गत्यर्थत्वादात्मनेपदनिषेधः । ( इहापि सूत्राष्टके द्रष्टव्ये १४।१५ सूत्रे ) । 'जि-जये, गम्लृ-गतौ' इति भ्वादी धातू । लिट्-लङोः रूपे सैवालङ्कृतिः ।

कोशः—'नभस्वद्वातपवनपवमानप्रभञ्जनाः' ।

वाच्यपरिवर्तनम्—समुद्रेण न व्यतिजिग्ये धैर्यम् । प्रचण्डेन प्रभञ्जनेन गतं न व्यत्यगम्यत ॥ ४ ॥

पथि प्राप्तां राक्षसीं घातप्रतिघातकर्मव्यतिहारेण व्यत्यहन्नित्याह—

[illegible]
जघानाऽऽविश्य वदनं निर्यान् भित्त्वोदरं द्रुतम् ॥ ५ ॥

अन्वयः—व्यतिघ्नतीं सिंहिकाख्यां राक्षसीं व्यतिघ्नन् द्रुतम् वदनम् आविश्य [illegible]रम् भित्त्वा निर्यान् स पवनात्मजः जघान।

हिन्दी—मार डालना चाहती हुई राक्षसीको मार डालना चाहने वाले [illegible]ों मारामारीमें ) उन हनुमान् जीने शीघ्र मुखमें पैठकर पेट फाड़कर निकलते [illegible] उसे मार डाला।

व्याख्या—एनां हनिष्यामीति तस्य यो वधकरणावसरस्तत्र व्यतिघ्नतीम्, [illegible] सिंहिकां, राक्षसीं क्षपाटाम्, एनं हनिष्यामीति तस्या यो वधकरणावसरस्तत्र [illegible]तिघ्नन्, (इत्थं कर्मव्यतिहारे) द्रुतं शीघ्रम्, वदनम् मुखम्, आविश्य प्रविश्य, [illegible]रं जठरं, भित्त्वा विदार्य, निर्यान् निर्गच्छन्, स पवनात्मजो हनुमान्, जघान [illegible]हिंस। हन-हिंसागत्योरिति अदादिः। उभयत्र हिंसार्थतया आत्मनेपदनिषेधः [illegible] सूत्रे द्रष्टव्यः )। परिवृत्तेः कर्तुरेकक्रियान्वयाद् दीपकेन सङ्करः।

वाच्य०—व्यतिघ्नती सा राक्षसी व्यतिघ्नता निर्याता पवनात्मजेन जघ्ने।

राक्षस्युदन्वतोरन्योन्यशब्दमिश्रणामाह—

> अन्योन्यं स्म व्यतियुतः शब्दाञ्छब्दैस् तु भीषणान्।
> उदन्वांश् चानिलोद्धूतो म्रियमाणा च राक्षसी ॥ ६ ॥

अन्वयः—अनिलोद्धूतः उदन्वान् म्रियमाणा राक्षसी च अन्योन्यं भीषणान् [illegible]न्दान् शब्दैः व्यतियुतः।

हिन्दी—वायुसे झकझोरे गये समुद्रने और मरती हुई राक्षसी इन दोनोंने [illegible]स्पर एक दूसरेके भीषण शब्दोंको शब्दोंसे मिला दिया।

व्याख्या—अनिलोद्धूतः वायुप्रकम्पितः, उदन्वान् समुद्रः, म्रियमाणा प्राणान् [illegible]हती, राक्षसी क्षपाटा च, अन्योऽन्यं परस्परम्, भीषणान् भयङ्करान्, शब्दान् [illegible]नीन्, शब्दैः ध्वनिभिः, व्यतियुतः व्यतिमिश्रयतः स्म। अत्रोदन्वतः शब्द-[illegible]रणाद् यो भीषणशब्दमिश्रणावसरो भावी तत्र राक्षसी म्रियमाणा भीषणशब्दान् [illegible]दन्वच्छब्दैर्युयाव। राक्षस्याः शब्दकरणाद् यो भीषणशब्दमिश्रणावसरो भावी [illegible]त्रोदन्वाननिलोद्धूतः भीषणशब्दान् राक्षसीशब्दैर्युयावेति कर्मव्यतिहारः। तत्र [illegible]प्राप्तमात्मनेपदम् अन्योऽन्योपपदत्वात् प्रतिषिध्यते। यु-मिश्रणामिश्रणयोरिति [illegible]धातोरदादौ लटि व्यतियुत इति द्रष्टव्यम्। ( १६ सूत्रम् )। 'नेर्विशः १।३।१७' [illegible]त्यादिसूत्राणां [illegible]



समासः—अन्यश्च अन्यश्चेति विगृह्य द्वन्द्वे 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये

समासवच्च वहुलम्' इति समासकार्ये 'समासवद्भावे पूर्वपदस्य सुपः सुर्वाच्यः' इति सौ रुत्वादिना सन्धौ अन्योऽन्यम् परस्परमित्यादि।

वाच्यपरिवर्तनम्—अनिलोद्धतेनोदन्वता क्रियमाणया राक्षस्या च भीषणाः शब्दा व्यतियूयन्ते स्म ॥ ६ ॥

क्रमप्राप्तं सिंहिकाशवोपयोगमाह—

> न्यविक्षत महा-ग्राह-संकुलं मकराऽऽलयम्।
> सैका बहूनां कुर्वाणा नक्राणां स्वाशितम्भवम् ॥ ७ ॥

अन्वयः—बहूनां नक्राणाम् स्वाशितम्भवं कुर्वाणा एका सा महाग्राहसङ्कुलम् मकरालयम् न्यविक्षत।

हिन्दी—बहुतसे जलजन्तुओंको पूर्ण तृप्त करती हुई अकेली वह राक्षसी बड़े बड़े मगरमच्छोंसे भरे समुद्रमें ( सर्वदाके लिये ) समा गयी।

व्याख्या—बहूनाम् अनेकेषाम्, नक्राणाम् कुम्भीराणां, स्वाशितम्भवम् प्रचुरतृप्तिं, कुर्वाणा विदधाना, एका एकाकिनी, सा प्रसिद्धा राक्षसी, महाग्राहसङ्कुलम् विशालावहारव्याप्तम्, मकरालयं समुद्रं, न्यविक्षत प्रविष्टवती। 'विश-प्रवेशने' तुदादेर्लुङि निपूर्वस्य न्यविक्षत। ( १७ सूत्रम् )। एकस्या अनेकक्रियान्वयाद् दीपकेन सह तृप्तिकारणानुक्तौ विभावनायाः सङ्करः।

समासः—आशितस्य भव इति विगृह्य 'आशिते भुवः ३।२।४५' इति भावे खचा मुमागमेन सिद्धे, सुना सह 'कुगतिप्रादयः २।२।१८' इति समासः। महान्तश्च ते ग्राहाः, तैः सङ्कुलम् इति कर्मधारय-गर्भस्तत्पुरुषः।

वाच्यपरिवर्तनम्—कुर्वाणयैकया तया महाग्राहसङ्कुलः मकरालयः न्यवेशि।

प्रत्युपचिकीर्षुमैनाकसङ्गममाख्याति—

> कृतेनोपकृतं वायोः परिक्रीणानमुत्थितम्।
> पित्रा संरक्षितं शक्रात् स मैनाकाऽद्रिमैक्षत ॥ ८ ॥

अन्वयः—सः पित्रा शक्रात् संरक्षितम् वायोः उपकृतम् कृतेन परिक्रीणानम् उत्थितम् मैनाकाद्रिम् ऐक्षत।

हिन्दी—उन्होंने पिता द्वारा इन्द्रसे सुरक्षित, वायुके ( उस ) उपकारको प्रत्युपकार द्वारा चुकाने वाले (समुद्रमें) उठकर खड़े हुए मैनाक पर्वतको देखा।

व्याख्या—सः हनुमान्, पित्रा जनकेन, शक्रात् इन्द्रात्, संरक्षितम् सुपालितम्, वायोः मरुतः, उपकृतम् उपकारं, कृतेन प्रत्युपकृतेन, परिक्रीणानं परिक्रयं विचिन्वानम्, उत्थितम् (समुद्रे) उर्ध्वमागतम्, मैनाकाद्रिम् मैनाकनामानं गिरिम्,

ऐक्षत अपश्यत् । ( परि-क्रिय आत्मनेपदित्वाच्छानच् (१८ सूत्रम्) । डुक्रीञ्— द्रव्यविनिमये क्र्यादिर्धातुरस्ति । उपमाऽलङ्कारः ।

वाच्य०—तेन संरक्षितः परिक्रीणान उत्थितः मैनाकाद्रिः ऐक्ष्यत ॥ ८ ॥

मैनाकवाक्यमनुवदति कविः—

खं पराजयमानोऽसावुन्नत्या पवनात्मजम् ।
जगादाऽद्रिर् 'जेविषीष्ठा मयि विश्रम्य वैरिणम्' ॥ ९ ॥

अन्वयः—उन्नत्या खं पराजयमानः असौ अद्रिः 'मयि विश्रम्य वैरिणं विजेषीष्ठाः' इति पवनात्मजं जगाद ।

हिन्दी—अपनी ऊँचाईसे आकाशको परास्त करते हुए उस पर्वतने 'मेरे ऊपर विश्राम करके शत्रुको जीत लो' ऐसा हनुमान्‌जीसे कहा ।

व्याख्या—उन्नत्या उन्नमनेन, खं व्योम, पराजयमानः अभिभवन्, असौ पूर्वोक्तः अद्रिः गिरिः मैनाकः, 'मयि मैनाके, विश्रम्य स्थित्वा, वैरिं शत्रुं, विजेषीष्ठाः अभिभूयाः' इति पवनात्मजं मारुतिं जगाद उवाच । जि—जये भ्वादेर्विपूर्वस्याशीर्लिङि विजेषीष्ठाः । ( सूत्रम् १९ ) । व्यतिरेकोऽद्रेः खेन । शानजन्तपराजिगदेतिक्रियाद्वययोगेन दीपकोऽपि ।

वाच्यपरिवर्तनम्—खं पराजयमानेन अमुना अद्रिणा 'वैरी विजायिषीष्ट' इति पवनात्मजो जगदे ।

शिक्षा—'अचिरादुपकर्तुराचरेदथवात्मौपयिकीमुपक्रियाम्'—इति ॥ ९ ॥

इतः १७ सप्तदशपद्यावधि मारुतिमनुनयत्यद्रिः—

फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु ।
साध्वनुक्रीडमानानि पश्य वृन्दानि पक्षिणाम् ॥ १० ॥

अन्वयः—चित्राणि फलानि आदत्स्व, सानुषु परिक्रीडस्व, साधु अनुक्रीडमानानि पक्षिणां वृन्दानि पश्य ।

हिन्दी—विविध फलोंको लो, शिखर पर विहार करो और स्वच्छन्द चहकते पक्षिसमूहोंको देखो ।

व्याख्या—चित्राणि विविधानि, फलानि पनसादीनि, आदत्स्व स्वीकुरु । सानुषु प्रस्थेषु, परिक्रीडस्व विहरस्व, साधु स्वच्छन्दं, अनुक्रीडमानानि विहरन्ति, पक्षिणां पतत्रिणां, वृन्दानि कदम्बकानि, पश्य निरीक्षस्व । डुदाञ्-दाने जुहोत्यादिः । क्रीड-क्रीडने भ्वादिः । उभयोर्लोटि । (२०।२१ सूत्रे) । क्रियात्रयेण सम्पर्कात् दीपकः ।

कोशः— 'स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्' ।

वाच्यपरिवर्तनम्—चित्राणि फलान्यादीयन्ताम् । परिक्रीडयताम् । वृन्दानि दृश्यन्ताम् ॥ १० ॥

अग्रे कथयति च—

क्षणं भद्राऽवतिष्ठस्व ततः प्रस्थास्यसे पुनः ।
न तत् संस्थास्यते कार्यं दक्षेणोरीकृतं त्वया ॥ ११ ॥

अन्वयः—हे भद्र ! क्षणम् अवतिष्ठस्व ततः पुनः प्रस्थास्यसे । दक्षेण त्वया ऊरीकृतम् तत् कार्यं न संस्थास्यते ।

हिन्दी—हे कल्याणकारिन् ! कुछ काल ठहरो, तब पुनः जाना । चतुर तुम्हारे द्वारा स्वीकृत वह कार्य रुकेगा नहीं ।

व्याख्या—हे भद्र हे कल्याण ! क्षणम् मुहूर्तम्, अवतिष्ठस्व विलम्बस्व । ततः पश्चात्, पुनः भूयः, प्रस्थास्यसे यास्यसि । दक्षेण पटुना, त्वया भवता मारुतिना, ऊरीकृतम् अङ्गीकृतम्, तत् सीतान्वेषणाख्यं, कार्यं कर्तव्यं, न नैव, संस्थास्यते विपत्स्यते । अवश्यं सेत्स्यति । (२२ सूत्रम्) । ष्ठा गतिनिवृत्तौ इति भ्वादेर्लोटि लृटि सोपसर्गरूपाणि । पूर्वार्द्धे दीपकेनानुमानस्य सङ्करः ।

वाच्यपरिवर्तनम्—अवस्थीयताम् । प्रस्थायिष्यते । तेनोरीकृतेन कार्येण न संस्थायिष्यते ॥ ११ ॥

'समव० १।३।२२' इतोऽग्रेतनसूत्रद्वयस्योदाहरणं ददाति—

त्वयि नस् तिष्ठते प्रीतिस् तुभ्यं तिष्ठामहे वयम् ।
उत्तिष्ठमानं मित्रार्थे कस् त्वां न बहु मन्यते ॥ १२ ॥

अन्वयः—त्वयि नः प्रीतिः तिष्ठते । वयं तुभ्यं तिष्ठामहे । कः मित्रार्थे उत्तिष्ठमानं त्वां बहु न मन्यते ।

हिन्दी—तुममें हमारी प्रीति है । अर्थात् संशयमे हम तुम्हारे ऊपर निर्भर करते हैं । हमलोग आपके लिये अपना अभिप्राय प्रकाशित करते हैं, (क्योंकि) मित्रके लिये प्रयत्न करने वाले आपको कौन बहुत सम्मान न देगा ?

व्याख्या—त्वयि भवति, नः अस्माकं, प्रीतिः प्रेम, तिष्ठते अस्ति ( अतः संशये निर्णयार्थं त्वमेव स्थेयः) । वयं मैनाकादयः, तुभ्यं भवते, तिष्ठामहे स्वाभिप्रायं प्रकाशयामः । ( यतो हि ) कोऽज्ञातो जनः, मित्रार्थे सुहृदर्थे, उत्तिष्ठमानं प्रयतमानं, त्वाम् भवन्तम्, बहु अधिकं, न नैव, मन्यते सत्करोति (सर्वोऽपि सत्कुरुत इत्यर्थः) । (२३।२४ सूत्रे) । स्था इत्यस्यैव प्रकाशनाद्यर्थे लटि रूपाणि । बहुमाने हेतूक्तौ काव्यलिङ्गम्, अर्थापत्तिर्वेति सन्देहसङ्करः ।

कारकः—तुभ्यमिति 'श्लाघह्नुङ्स्थाशपां० १।४।३४' इति सम्प्रदानतया चतुर्थी ।

वाच्यपरिवर्तनम्—प्रीत्या स्थीयते । अस्माभिः स्थीयते । केन उत्तिष्ठमानस्त्वं न बहु मन्यसे ॥ १२ ॥

उपान्मन्त्रकरणे २५ इत्यस्योदाहरणमाह—

> ये सूर्यमुपतिष्ठन्ते मन्त्रैः सन्ध्या-त्रयं द्विजाः ।
> रक्षोभिस् तापितास् तेऽपि सिद्धिं ध्यायन्ति तेऽधुना ॥ १३ ॥

अन्वयः—ये द्विजाः मन्त्रैः सन्ध्यात्रयं सूर्यम् उपतिष्ठन्ते, रक्षोभिस्तापितास्तेऽपि अधुना ते ( तव ) सिद्धिम् ध्यायन्ति ।

हिन्दी—जो द्विज ब्राह्मणादित्रय मन्त्रों द्वारा तीनों साँझ सूर्यका उपस्थान करते हैं, राक्षसोंसे सताये गये वे भी इस समय तुम्हारी सिद्धिका ध्यान करते हैं ।

व्याख्या—ये द्विजाः, ब्राह्मणाद्यास्त्रयो वर्णाः, मन्त्रैः मनुभिः गायत्र्यादिभिः, सन्ध्यात्रयं प्रातर्मध्याह्नसायम्, सूर्यं भास्करम्, उपतिष्ठन्ते स्तुवन्ति । रक्षोभिः क्षपाटैः, तापिता उपद्रुताः, ते निष्कामाः, अपि निश्चयतः, अधुना साम्प्रतम्, ते तव, सिद्धिं साफल्यं, ध्यायन्ति चिन्तयन्ति । रक्षस्तापःसिद्धिध्याने हेतुरिति काव्यलिङ्गम् ।

वाच्य०—यैर्द्विजैः सूर्य उपस्थीयते, तैरपि सिद्धिर्ध्यायते ॥ १३ ॥

२६—अकर्मकाच्चेत्यस्याह उपपूर्वस्योदाहरणम्—

> अव्यग्रमुपतिष्ठस्व वीर ! वायोरहं सुहृत् ।
> रविर् वितपतेऽत्यर्थमाश्वस्य मयि गम्यताम् ॥ १४ ॥

अन्वयः—हे वीर ! अहम् वायोः सुहृत्, अव्यग्रम् उपतिष्ठस्व । रविः अत्यर्थं वितपते । मयि आश्वस्य गम्यताम् ।

हिन्दी—हे वीर ! मैं वायुका मित्र हूँ तुम निश्चित मेरे पास रहो । सूर्य अत्यन्त तप रहा है । मेरे यहाँ विश्राम करके जाओ ।

व्याख्या—हे वीर=शूर ! अहं तव पुरोगो मैनाकः, वायोः नभस्वतः, सुहृत् सखा । अव्यग्रम् निराकुलम्, उपतिष्ठस्व सन्निहितो भव ( ममेति शेषः ) । रविः उष्णगुः, अत्यर्थं भृशम्, वितपते दीप्यते । मयि मैनाकपर्वते, आश्वस्य विश्रम्य, गम्यताम् प्रस्थीयताम् । तिष्ठतेरुदाहरणं समाप्य तपतेः प्रारम्भो भवति । 'तप सन्तापे' भौवादेः विपूर्वस्य लटि वितपते । २७ उद्विभ्यां तप इत्यस्याग्रेऽपि । पूर्वोक्त एवालङ्कारः ।

वाच्यपरिवर्तनम्—उपस्थीयताम् । मया सुहृदा भूयते । रविणा वितप्यते । विश्रम्य गच्छ ॥ १४ ॥

तत्रस्थमातपं वर्णयति—

तीव्रमुत्तपमानो ऽयम-शक्यः सोढुमातपः ।
आघ्नान इव संदीप्तैरलातैः सर्वतो मुहुः ॥ १५ ॥

अन्वयः—सन्दीप्तैः अलातैः सर्वतो मुहुः आघ्नान इव तीव्रम् उत्तपमानः अयम् आतपः सोढुम् अशक्यः ।

हिन्दी—जले हुए आलातों ( लुकारियों ) से सर्वत्र बारबार मानो आघात करते हुए तीव्ररूपसे तपता हुआ यह आतप ( घाम ) सहनेके लिये अशक्य है ।

व्याख्या—सन्दीप्तैः ज्वलितैः, अलातैः उल्मुकैः, सर्वतः समन्तात्, मुहुः भूयः, आघ्नानः ताडयन्, इव यथा, तीव्रम् उत्कटम्, उत्तपमानः देदीप्यमानः, अयम् अनुभूयमानः, आतपः घर्मः, सोढुम् मर्षितुम्, अशक्यः असह्यः ( अस्तीति अवश्यं विश्रम्यताम् ) । उत्पूर्वस्य तपः शानचि, २७ सूत्रस्य । २८ सूत्रम् हनोऽत्र आघ्नान इति शानचि । यमस्तु ७·१०१ पद्ये गतम् । काव्यलिङ्गेनोत्प्रेक्षासङ्करः ।

वाच्य०—आघ्नानेन इव उत्तपमानेन अनेन आतपेन अशक्येन भूयते ॥१५॥

तत्र पद्याभ्याम् २९ सूत्रम्—

संश्रृणुष्व कपे ! मत्कैः संगच्छस्व वनैः शुभैः ।
समारन्त ममा ऽभीष्टाः संकल्पास् त्वय्युपागते ॥ १६ ॥

अन्वयः—हे कपे ! संश्रृणुष्व । मत्कैः शुभैः वनैः सङ्गच्छस्व । त्वयि उपागते मम अभीष्टाः सङ्कल्पाः समारन्त ।

हिन्दी—हे कपे ! सुनो, सुन्दर वनोंसे मेल करो, तुम्हारे आने पर मेरे अभीष्ट संकल्प आरम्भ हो गये कि 'मेरा कोई मित्र आता तो मेरा सदुपयोग होता ।'

व्याख्या—हे कपे हनुमन् ! संश्रृणुष्व सावधानतया आकर्णय । मत्कैः मदीयैः, शुभैः मनोहरैः, वनैः विपिनैः, संगच्छस्व रमस्व । त्वयि भवति, उपागते उपस्थिते, मम मैनाकस्य, अभीष्टाः अभिलषिताः संकल्पाः अभिप्रायाः, समारन्त समारभन्त । २९ सूत्रम् । ऋ—गतौ जुहोत्यादेः लुङि, गमेः भ्वादेः श्रु श्रवणे च लोटि क्रमात् । दीपकस्य काव्यलिङ्गेन सङ्करः ।

कोशः—'धीर्धारणावती मेधा । 'संकल्पः कर्म मानसम्' ।

वाच्य०—संश्रूयताम् सङ्गम्यताम् । अभीष्टैः संकल्पैः समारि ॥ १३ ॥

अथ मैनाकः सख्यमिच्छन्नाह—

के न संविद्रते, वायोर् मैनाकाऽद्रिर् यथा सखा ।

यत्नादुपाह्वये प्रीतः, संह्वयस्व विवक्षितम् ॥ १७ ॥

अन्वयः—'मैनकाद्रिः वायोः यथा सखा' इति के न संविद्रते ? प्रीतः यत्नात् उपाह्वये, विवक्षितं संह्वयस्व ।

हिन्दी—मैनाक पर्वत वायुका जैसा प्राण-सम मित्र है यह कौन नहीं जानता ? मैं प्रसन्न हो बड़े प्रेमसे आपको पुकारता हूँ । अतः अपना मनोऽभिप्राय कहिये ।

व्याख्या—मैनाकाद्रिः मैनाकनामा पर्वतः ( अहम् ), वायोः पवनस्य, यथा येन प्रकारेण अभिन्न इत्यर्थः, सखा प्राणसमः सुहृत्, इति के एवम् अविज्ञाताः जनाः, न नैव, संविद्रते जानन्ति ? ( सर्वेऽपि जानन्तीत्यर्थः ) । ( अतः ) प्रीतः प्रसन्नः, यत्नात् प्रयासात्, उपाह्वये ( भवन्तम् ) आह्वयामि । विवक्षितम् स्त्रीयं मनोगतम् अभिप्रेतम्, संह्वयस्व कथय । न गोपायेत्यर्थः । 'समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः १।३।२९' इति भट्टिकविसम्मतः सूत्रपाठः[1] । ( ३० सूत्रमप्यत्र ) । ह्वेञ्-स्पर्धायां शब्दे च भ्वादेर्लोटि उपसंपूर्वस्य रूपम् । उपमा ।

कोशः—'वयस्यः स्निग्धः सवयाः' 'अथ मित्रं सखा सुहृत्' ।

वाच्यपरिवर्तनम्—कैः न संविद्यते । मैनाकाद्रिणा यथा सख्या भूयते, प्रीतेनोपाहूयते भवान् । विवक्षितम् संहूयताम् ।। १७ ।।

सम्प्रति कपेः प्रत्युत्तरं प्रक्रमते कविः—

द्यामिवाह्वयमानं तमवोचद् भूधरं कपिः ।
उपकुर्वन्तमत्यर्थं प्रकुर्वाणोऽनुजीवि-वत् ॥ १८ ॥

अन्वयः—प्रकुर्वाणः कपिः अत्यर्थम् उपकुर्वन्तं द्याम् आह्वयमानम् इव स्थितं भूधरम् अनुजीविवत् अवोचत् ।

हिन्दी—सेवा-शुश्रूषा करते हुए हनुमान् जी, अत्यन्त उपकार करते हुए, आकाशको ललकारते हुएके समान स्थित, उस पर्वतसे बोले ।

व्याख्या—प्रकुर्वाणः सेवमानः, कपिः हनुमान्, अत्यर्थम् अधिकम्, उपकुर्वन्तम् आतिथ्येन उपकारं विदधतम्, द्याम् आकाशम्, आह्वयमानं स्पर्द्धमानम्, इव उत्प्रेक्षे, स्थितम् विद्यमानं, तं पूर्वोक्तं, भूधरम् अचलम्, अनुजीविवत् सेवकवत्, अवोचत् उवाच । ३१।३२ सूत्रे । ह्वेञः शानचि डुकृञश्च सेवनेऽर्थे । उत्प्रेक्षोपमासङ्करः ।

कोशः—'षण्डो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः'—इत्यमरः ।

वाच्य०—प्रकुर्वाणेन कपिना आह्वयमान उपकुर्वन् स भूधरोऽवाचि ।।१८।।



( १ ) भट्टिमते उदाहरणन्तु प्रकीर्णेऽवशिष्टानाम् ।

कपिः स्वयं प्रत्युत्तरयति तम्—

> कुल-भार्यां प्रकुर्वाणमहं द्रष्टुं दशाननम् ।
> यामि त्वरा-वान् शैलेन्द्र ! मा कस्यचिदुपस्कृथाः ॥ १९ ॥

अन्वयः—हे शैलेन्द्र ! अहम् कुलभार्यां प्रकुर्वाणं दशाननं द्रष्टुं त्वरावान् यामि । ( अतः ) कस्यचित् मा उपस्कृथाः ।

हिन्दी—हे शैलराज ! मैं कुलीन स्त्रीपर साहस करने वाले रावणको देखनेके लिये जल्दी में जा रहा हूँ । ( अतः ) आप किसीका ( भोजन पान आदिका ) प्रयत्न न करें ।

व्याख्या—हे शैलेन्द्र अचलेश ! अहं मारुतिः, कुलभार्यां सद्वंशस्त्रियं, प्रकुर्वाणम् सहसा तस्यां प्रवर्तमानम्, दशाननं रावणं, द्रष्टुं वीक्षितुम्, त्वरावान् द्रुतगः, यामि एमि । अतस्त्वं कस्यचित् अशन-पानादिकस्य, मा उपस्कृथाः प्रयत्नं मा कार्षीः । ३२ सूत्रम् । साहसिक्ये प्रपूर्वः, प्रतियत्ने उपपूर्वो लुङि कृञ् । प्रयत्नाकरणहेतूक्तौ काव्यलिङ्गम् ।

कारकः—कस्यचिदिति 'कृञः प्रतियत्ने २।३।५३' इति षष्ठी ।

कृदन्तः—द्रष्टुमिति 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३।३।१९' इति तुमुनि, 'सृजिदृशोर्झल्यमकिति ६।१।५८' इत्यमि, षत्वष्टुत्वे ।

वाच्यपरिवर्तनम्—मया दशाननो यायते । मा उपस्कारि ॥ १९ ॥

पद्यत्रयावधि स्वकृत्यमेव निर्दिशति—

> योऽपचक्रे वनात् सीतामधिचक्रे न यं हरिः ।
> विकुर्वाणः स्वरानद्य बलं तस्य निहन्म्यहम् ॥ २० ॥

अन्वयः—यः वनात् सीताम् अपचक्रे । हरिः यं न अधिचक्रे । अद्य स्वरान् विकुर्वाणः अहम् तस्य बलं निहन्मि ।

हिन्दी—जिसने वनमें जाकर सीताको अपमानित किया, इन्द्र भी जिस पर अधिकार न कर सके, आज विविध स्वरोंको करता हुआ मैं उसके बलका विनाश करता हूँ ।

व्याख्या—यः रावणः, वनात् वनम् उपेत्य, सीतां जानकीम्, अपचक्रे अभ्यवीभवत् । हरिः इन्द्रः, यं रावणं, न नैव, अधिचक्रे प्रसेहे । अद्य अधुना, स्वरान् विविधान् शब्दान्, विकुर्वाणः व्याहरन्, अहम् हनुमान्, तस्य रावणस्य, बलं सामर्थ्यं, निहन्मि विनाशयामि । अधिकृञः प्रसहने, विपूर्वस्य शब्दकर्मणे तङ् । ( ३३।३४ सूत्रे ) । पूर्वार्धे विशेषोक्तिः । उत्तरार्द्धे कार्यत्वरातिशयोक्तिः ।

कारकः—वनादिति 'ल्यब्लोपे कर्मण्यधिकरणे च २।२।२८' वा० इति पञ्चमी।
कोशः—अस्यैव सर्गस्य तृतीय-पद्ये हरिशब्दकोशो दत्तः।
वाच्यपरिवर्तनम्—येन सीताऽपचक्रे। हरिणा यो नाधिचक्रे। विकुर्वाणेन
या निहन्यते ॥ २० ॥

हनूमान् प्रतिज्ञां करोति—

विकुर्वे नगरे तस्य पापस्याऽद्य रघु-द्विषः।
विनेष्ये वा प्रियान् प्राणानुदानेष्येऽथवा यशः ॥ २१ ॥

अन्वयः—अद्य रघुद्विषः तस्य पापस्य नगरे विकुर्वे। वा प्रियान् प्राणान्
विनेष्ये। अथवा यशः उदानेष्ये।

हिन्दी—आज रामचन्द्रके द्वेषी उस पापीके नगरमें विविध प्रकारसे चेष्टा
करूँगा, (यों) या तो अपने प्रिय प्राणोंको गवाऊँगा या यशको ही प्राप्त करूँगा।

व्याख्या—अद्य अधुना, रघुद्विषः रामशत्रोः, तस्य प्रसिद्धस्य, पापस्य दुष्क-
र्मणो रावणस्य, नगरे पुर्याम्, विकुर्वे विविधं चेष्टिष्ये, वा वैपरीत्ये, प्रियान् अभी-
ष्टान्, प्राणान् असून्, विनेष्ये अपनेष्ये हारयिष्यामीत्यर्थः। अथवा आहोस्विद्,
यशः कीर्तिम्, उदानेष्ये उद्धरिष्ये। पूर्वत्र व्ययेऽत्रोत्सञ्जने तङ्। (३५।३६ सूत्रे)।
क्रमोऽकर्मकाल्लट्। विणीञः व्यये, उदा णीञः उत्सञ्जने लटि रूपे। अनेक-
क्रियायोगाद्दीपकेन कार्यत्वरातिशयोक्तिसङ्करः।

वाच्यपरिवर्तनम्—विक्रियते। प्रियाः प्राणा विनायिष्यन्ते। यशः उदाना-
यिष्यते मया ॥ २१ ॥

हनूमत उत्साहं वर्णयति—

विनेष्ये क्रोधमथवा क्रममाणोऽरि-संसदि।
इत्युक्त्वा खे पराक्रंस्त तूर्णं सूनुर् नभस्वतः ॥ २२ ॥

अन्वयः—अथवा अरिसंसदि क्रममाणः क्रोधं विनेष्ये इति उक्त्वा नभस्वतः
सूनुः तूर्णं खे पराक्रंस्त।

हिन्दी—या तो शत्रुकी सभामें अप्रतिबन्धरूपमें रहता हुआ अपना क्रोध
निकालूँगा। ऐसा कहकर हनुमान्‌जी फौरन आकाशमें उत्साह दिखाने लगे।

व्याख्या—अथवा पक्षान्तरे, अरिसंसदि शत्रुसभायाम्, क्रममाणः (वृत्तावत्र
तङ्) अप्रतिबन्धं स्वच्छन्दतया वर्तयन्, क्रोधं कोपं, विनेष्ये अपनेष्ये (कर्तृस्थम-
शरीरस्थं कर्म), इति इत्थम्, उक्त्वा अभिधाय, नभस्वतः वायोः, सूनुः पुत्रः
हनुमान्, तूर्णं शीघ्रम्, खे व्योम्नि, पराक्रंस्त उत्सेहे (सर्ग उत्साहे तङ्)।

( ३७।३८।३९ सूत्राणि ) विणीञो लट् । वृत्तौ क्रमेः शानच् । सर्गार्थे परायोगे च लुङ् । सूत्रद्वयस्योदाहरणम् । दीपकेन स्वभावोक्तेः सङ्करो ज्ञायतामिह ।

वाच्य०—क्रममाणेन क्रोधो विनायिष्यते । सूनुना पराक्रामि ॥ २२ ॥

ततो राक्षसीसमागममाह—

परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमम् ।
दिवमाक्रममाणेव केतु-तारा भय-प्रदा ॥ २३ ॥

अन्वय —दिवम् आक्रममाणा भयप्रदा केतुतारा इव ( स्थिता ) राक्षसी ( सुरसा नामा ) तस्य विक्रमं परीक्षितुम् उपाक्रंस्त ।

हिन्दी—आकाशमें निकलती हुई भय देनेवाली, केतुताराके समान स्थित सुरसा नामकी राक्षसीने उनके विक्रमकी परीक्षा करनेके लिये उत्साह किया ।

व्याख्या—दिवम् द्याम्, आक्रममाणा उद्गता, भयप्रदा भीतिकृत्, केतुतारा पुच्छतारिका, इव यथा (स्थिता), राक्षसी सुरसा नाम (वाल्मीकीये इयं पूर्वमेव वर्णिता ), तस्य हनूमतः, विक्रमं सामर्थ्यं, परीक्षितुं ज्ञातुं ( न तु हन्तुम्), उपाक्रंस्त उदसहिष्ट। (३९।४० सूत्रे) । उपक्रमेर्लुङ् । आक्रमेः शानच् । उपमालङ्कारः।

कोशः—'ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः'—इत्यमरः ।

वाच्यपरिवर्तनम्—राक्षस्यः तस्य विक्रमं परीक्षितुं उपाक्रामि ॥ २३ ॥

हनूमतः कौशलमाह—

जले विक्रममाणाया हनूमान् शत-योजनम् ।
आस्यं प्रविश्य निरयादणुभूयाऽप्रचेतितः ॥ २४ ॥

अन्वयः—अप्रचेतितः अणुभूय हनूमान् जले विक्रममाणायाः ( तस्याः ) शतयोजनम् आस्यं प्रविश्य निरयात् ।

हिन्दी—सुरसाको न जानते हुए बहुत छोटे होकर हनूमान्जी जलमें पद-विहार करनेवाली उस राक्षसीके सौ योजनमें फैले मुँहमें पैठकर पुनः निकल पड़े ।

व्याख्या—( सुरसया ) अप्रचेतितः अज्ञातः, अणुभूय सूक्ष्मो भूत्वा, हनूमान् मारुतिः, जले सलिले, विक्रममाणायाः पादविहरणं कुर्वन्त्याः, तस्याः सुरसायाः, शतयोजनं (विस्तीर्णम्), आस्यम् मुखम्, प्रविश्य प्रवेशमुपलभ्य, निरयात् निर्गतः। ( [illegible] इति टीकाकृतां निर्देशः प्रमादग्रस्तः, अणुभवमात्रेणान् )। पाद विहरणे विक्रमेः शानच् । (४१ सूत्रम्) । समालङ्कारकाव्यलिङ्गयोः सङ्करः ।

तद्धितः—शतं योजनानि यस्य प्रमाणत इति प्रमाणे जातस्य मात्रचः 'प्रमाणे लोर्द्विगो नित्यम्' इति लुक् ।

वाच्यपरिवर्तनम्—अप्रचेतितेन हनूमता निरयायि ॥ २४ ॥

मारुतेः सम्प्रति तटभ्रमणमाख्याति—

द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस् तटम् ।
उपाक्रंस्ताऽऽकुलं घोरैः क्रममाणैर् निशाचरैः ॥ २५ ॥

अन्वयः—सीतां द्रष्टुं प्रक्रममाणः असौ क्रममाणैः घोरैः निशाचरैः आकुलं तटम् उपाक्रंस्त ।

हिन्दी—सीता को देखनेके लिये आरम्भ करनेवाले उन्होंने (हनूमानूजीने) इधर-उधर घूमनेवाले राक्षसोंसे भरे तटपर चलना आरम्भ किया ।

व्याख्या—सीतां मैथिलीं, द्रष्टुं वीक्षितुं, प्रक्रममाणः आरभमाणः, असौ हनूमान्, क्रममाणैः इतस्ततो गच्छद्भिः ( अनुपसर्गोदाहरणम् ), घोरैः भयानकैः, निशाचरैः क्षपाटैः, आकुलं व्याप्तं, तटम् तीरम्, उपाक्रंस्त आरब्ध । (प्रोपयोरादिकर्मणि प्रारम्भार्थे समानार्थत्वात् तङ् ) । एकत्र शानच् । अन्यत्र लुङ् । अनुपसर्गाच्च शानच् । (४२।४३ सूत्रे) समुद्राक्रमणे सीतान्वेषणहेतोरुक्तौ काव्यलिङ्गम् ।

वाच्यपरिवर्तनम्—प्रक्रममाणेन अमुना तट उपाक्रामि ॥ २५ ॥

तस्याग्रिमं कर्तव्यम् ( पुरोगमम् ) आख्याति—

आत्मानमपजानानः शश-मात्रो ऽनयद् दिनम् ।
ज्ञास्ये रात्राविति प्राज्ञः प्रत्यज्ञास्त क्रिया-पटुः ॥ २६ ॥

अन्वयः—प्राज्ञः क्रियापटुः आत्मानम् अपजानानः (अत एव) शशमात्रः सः दिनम् अनयत् । 'रात्रौ ज्ञास्ये' इति प्रत्यज्ञास्त ।

हिन्दी—बुद्धिमान् कार्य करनेमें चतुर अपनेको छिपाना चाहते हुए, इसी लिये खरहेके बराबर बने हुए, उन्होंने दिन बिताया । 'रात्रिमें टोह लूंगा' ऐसी प्रतिज्ञा की ।

व्याख्या—प्राज्ञः बुद्धिमान्, क्रियापटुः कार्यकुशलः, आत्मानं स्वम्, अपजानानः अपह्नुवानः, ( अत एव ) शशमात्रः सूमरमात्र-शरीर-परिमाणः, ( सः ) दिनम् अहः, अनयत् अगमयत् । रात्रौ रजन्यां, ज्ञास्ये अवगमिष्यामि, इति एवम्, प्रत्यज्ञास्त प्रतिज्ञातवान् । अत्रैव प्रतिपूर्वस्य ज्ञ उदाहरणम् । ४६ सूत्रस्थस्य संपूर्वकालानाबोध्ये । सर्वं हेतुगर्भं विशेषणमिति काव्यलिङ्गमलङ्कारः । 'ज्ञास्ये' इत्यकर्मकत्वात्तङ् । अन्यत्स्पष्टम् ( ४४।४५।४६ सूत्राणि ) ।

कोशः—षष्ठे सर्गे १३४ पद्येऽस्ति शशस्य पर्यायः ।

वाच्यपरिवर्तनम्—प्राज्ञेन क्रियापटुनाऽपजानानेन शशमात्रेण दिनमनीयत । रात्रौ ज्ञायिष्ये इति प्रत्यज्ञायि ॥ २६ ॥

हनूमतो लङ्काप्रवेशमाह—

संजानानान् परिहरन् रावणाऽनुचरान् बहून् ।
लङ्कां समाविशद् रात्रौ वदमानोऽरि-दुर्गमाम् ॥ २७ ॥

अन्वयः—संजानानान् बहून् रावणानुचरान् परिहरन् वदमानः सः अरि-दुर्गमां लङ्कां रात्रौ समाविशत् ।

हिन्दी—बहुतसे रावणके जानकार कर्मचारियोंको बचाते हुए दीप्तिमान् ( वह हनूमान् ) शत्रुओंके लिये कठिन लङ्कामें रात्रिके समय प्रविष्ट हुए ।

व्याख्या—संजानानान् चेतयतः, बहून् भूयसः, रावणानुचरान् दशास्यकर्म-चारिणः, परिहरन् वर्जयन्, वदमानः भासमानः दीप्तः इत्यर्थः ( वदनमत्र दीप्तिः भासनम्, तत्रात्मनेपदे शानच् ), सः मारुतिः, अरिदुर्गमां शत्रुदुर्ल्लङ्घ्यां, लङ्कां काञ्चनीं पुरीम्, रात्रौ रजन्यां, समाविशत् प्रविष्टवान् । ( ४६।४७ सूत्रे ) । कपेः क्रियात्रयसम्बन्धाद्दीपकालङ्कारः ।

कृदन्तः—अनुचरन्तीत्यनुचरास्तान् । 'चरेष्टः ३।२।१६' इति टः ।

वाच्यपरिवर्तनम्—परिहरता वदमानेन अरिदुर्गमा लङ्का समावेशि ॥२७॥

मारुतेः कार्यपद्धतिं वर्णयति—

कश्चिन् नोपावदिष्टा ऽसौ, केनचिद् व्यवदिष्ट न ।
शृण्वन् संप्रवदमानाद् रावणस्य गुणान् जनात् ॥ २८ ॥

अन्वयः—सम्प्रवदमानात् जनात् रावणस्य गुणान् शृण्वन् असौ कश्चिन्न उपावदिष्ट, केनचिद् न व्यवदिष्ट ( च ) ।

हिन्दी—आपसमें बहस करते हुए जनोंसे रावणके गुणोंको सुनते हुए उन्होंने ( हनुमान्जीने ) न किसीको सान्त्वना दी और न किसीसे बात की ।

व्याख्या—सम्प्रवदमानात् सम्भूय भाषमाणात्, जनात् ( व्यक्तवाचि तङ् ) लोकात्, रावणस्य दशास्यस्य, गुणान् शौर्यादीन्, शृण्वन् आकर्णयन्, असौ प्रसिद्धः हनूमान्, कश्चिन् अज्ञातं जनं, न नैव, उपावदिष्ट उपसान्त्वितवान्, केनचित् अज्ञा-तेन जनेन, न नैव, व्यवदिष्ट भाषितवान् । पूर्वत्रोपसंभाषायाम् (उपसान्त्वनायाम्), परत्र विमतौ (नानामतौ) तङ् । (४७।४८ सूत्रे) । तद्वदिहापि दीपकालङ्कारः ।



वाच्यपरिवर्तनम्—शृण्वता अमुना नोपावादि, न व्यवादि ॥ २८ ॥

लङ्कां वर्णयति—

जल्पितोत्क्रुष्ट-संगीत-प्रनृत्त-स्मित-वल्गितैः ।
घोषस्याऽन्ववदिष्टेव लङ्का पूत-क्रतोः पुरः ॥ २९ ॥

अन्वयः—लङ्का जल्पितोत्क्रुष्ट-सङ्गीत-प्रनृत्तस्मित-वल्गितैः पूतक्रतोः पुरः घोषस्य अन्ववदिष्ट इव ।

हिन्दी—लङ्का नगरी–भाषित, चिल्लाहट, सङ्गीत, ताण्डव, मुस्कुराहट, कूद आदि द्वारा–मानों इन्द्रपुरीके कोलाहलकी नकल कर रही थी ।

व्याख्या—लङ्का काञ्चनी पुरी, जल्पितोत्क्रुष्टसंगीत-प्रनृत्त-स्मित-वल्गितैः जल्पितोच्चाह्वानतौर्यत्रिकताण्डवेषद्धास-रेचितैः, पूतक्रतोः शक्रस्य, पुरः नगर्याः, घोषस्य कोलाहलस्य, अन्ववदिष्ट अनूदितवती, इव मन्ये । अनुपूर्वो वदिरकर्मको-ऽपि तङ् । ४९ सूत्रम् । उत्प्रेक्षालङ्कारः ।

समासः—जल्पितं चेत्यादि नपुंसकानामितरेतरयोगो द्वन्द्वः ।

कोशः—'उक्तं भाषित-मुदितं जल्पितमाख्यातमभिहितं लपितम्' ।
'आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्'—इत्यमरः ।

वाच्यपरिवर्तनम्—लङ्कयाऽन्ववादि इव ।। २९ ।।

क्रमशो हनूमतो लङ्काप्रवेशं वर्णयति—

ऐद् विप्रवदमानैस् तां संयुक्तां ब्रह्म-राक्षसैः ।
तथाऽवगिरमाणैश् च पिशाचैर् मांस-शोणितम् ॥ ३० ॥

अन्वयः—(सः) विप्रवदमानैः ब्रह्मराक्षसैः तथा मांसशोणितम् अवगिरमाणैः पिशाचैश्च संयुक्तां ताम् ऐत् ।

हिन्दी—वह हनुमान्जी विप्रलाप अर्थात् परस्पर विरुद्ध शास्त्रार्थ करते हुए ब्रह्मराक्षसोंसे तथा मांस और रक्त खाते हुए पिशाचोंसे भरी लङ्कामें पहुँच गये ।

व्याख्या—( स हनूमान् ) विप्रवदमानैः विप्रलपद्भिः शास्त्रार्थिभिः, ब्रह्म-राक्षसैः दुष्टविप्रैः, तथा तद्वत, मांसशोणितम् क्रव्यरक्तम्, अवगिरमाणैः भक्षयद्भिः, पिशाचैः पिशिताशैर्भूतविशेषैः, संयुक्तां सम्भृतां, तां लङ्काम्, ऐत् अगच्छत् । विपूर्वो वदिर्विवादे । ततः शानच् । 'गॄ-निगरणे' तुदादेः अवपूर्वात् शानच् । (१०।५१ सूत्रे ) । सहोक्तिरेवालङ्कारोऽनेकरक्षःसंयोगवर्णनात् ।

तिङन्तः—इण् गतौ इत्यादादिकस्य लङि, शपो लुकि, गुणे, आडागमे 'आ-टश्च' ६।१।९० इति वृद्धौ ऐदिति ।



वाच्यपरिवर्तनम्—तेन संयुक्ता सा लङ्का अगायि ।। ३० ।।

इतो राक्षसकृत्यं दर्शयति—

यथा-स्वं संगिरन्ते स्म गोष्ठीषु स्वामिनो गुणान् ।
पान-शौण्डाः पथः क्षीवा वृन्दैरुदचरन्त च ॥ ३१ ॥

अन्वयः—( केचित् ) गोष्ठीषु यथास्वं स्वामिनो गुणान् संगिरन्ते स्म । अन्ये पानशौण्डाः ( अत एव ) क्षीवाः वृन्दैः पथः उदचरन्त च ।

हिन्दी—कोई तो सभाओंमें अपनी बुद्धिके अनुसार अपने स्वामीके गुणोंकी प्रतिज्ञापूर्वक चर्चा करते थे और कोई मद्यपीनेके अभ्यस्त होनेसे मतवाले झुण्डके झुण्ड रास्ता छोड़कर चलते थे ।

व्याख्या—( केचिद् राक्षसाः ) गोष्ठीषु स्वमण्डलीषु, यथास्वं यथाबुद्धि-विभवम्, स्वामिनः प्रभोः, गुणान् दयादाक्षिण्यादीन्, संगिरन्ते प्रतिज्ञापूर्वकं वर्णयन्तिस्म । ( अपरे ) पानशौण्डाः सुरापान-विख्याताः, (अत एव) क्षीवाः मत्ताः, वृन्दैः संघैः, पथः मार्गान्, उदचरन्त उल्लङ्घ्य अगच्छन् । उदश्चरिः सकर्मकः । सम्पूर्वाद् गिरतेर्लट् । उच्चरतेर्लङ् । ( ५२।५३ सूत्रे ) । काव्यलिङ्गालङ्कारः ।

समासः—स्वम् अनतिक्रम्येति यथास्वम् इति यथार्थेऽव्ययीभावः । पानेषु शौण्डा इति तत्पुरुषः ।

कोशः—'मत्ते शौण्डोत्कटक्षीबाः कामुके कमितानुकः' इत्यमरः ।

वाच्य०—गुणाः संगीर्यन्ते स्म । पानशौण्डैः क्षीबैः पन्थानः उदचर्यन्त ।

तेषां स्वभावं वर्णयति—

यानैः समचरन्ता ऽन्ये कुञ्जराऽश्व-रथादिभिः ।
संप्रायच्छन्त वन्दीभिरन्ये पुष्प-फलं शुभम् ॥ ३२ ॥

अन्वयः—अन्ये कुञ्जराश्वरथादिभिः यानैः समचरन्त । अन्ये वन्दीभिः ( महिलाभिः ) शुभं पुष्पफलं सम्प्रायच्छन्त ।

हिन्दी—कुछ हाथी-रथ इत्यादि सवारियोंसे चल रहे थे । कुछ हरकर लाई गयी स्त्रियों के लिये सुन्दर फल-फूल दे रहे थे ।

व्याख्या—अन्ये कियन्तः, कुञ्जराश्वरथादिभिः गजहयस्यन्दनप्रभृतिभिः, यानैः वाहनैः, समचरन्त अयुः । अन्ये इतरे, वन्दीभिः वन्दीकृताभिः महिलाभिः, ( अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया ), शुभं मनोहरं, पुष्पफलं कुसुम-फलम्, सम्प्रायच्छन्त अददुः । ( पूर्वं तृतीयायोगे परः, उत्तरत्र दाणोऽपि तथैव तङ् ) ( ५४।५५ सूत्रे ) । रक्षसां स्वभाववर्णनात् स्वभावोक्तिः ।

कारकः— पूर्वत्र करणे, परत्र तु 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया वा० २।३।२३' इति तृतीया ।

कोशः—'सर्वं स्याद् वाहनं यानं युग्यं पत्रं च धोरणम्'—इत्यमरः ।

वाच्य०—अन्यैः समचर्यत । अन्यैः शुभम् पुष्पफलम् समदीयत ॥ ३२ ॥

रक्षसामाचरणम् आख्याति—

कोपात् काश्चित् प्रियैः प्रत्तमुपायंसत याऽऽसवम् ।
प्रेम जिज्ञासमानाभ्यस् ताभ्योऽशप्सत कामिनः ॥ ३३ ॥

अन्वयः—काश्चित् प्रियैः प्रत्तम् आसवम् कोपात् न उपायंसत । कामिनः जिज्ञासमानाभ्यः ताभ्यः अशप्सत ।

हिन्दी—कुछ स्त्रियोंने प्रियोंसे दिये गये मद्यको क्रोधके कारण स्वीकार नहीं किया । कामियोंने प्रेमकी जानकारी चाहनेवाली उन स्त्रियोके सम्मुख शपथ ली कि तुम्हारे सिवाय मेरी दूसरी प्रिया नहीं है ।

व्याख्या—काश्चित् कियत्यः वल्लभाः, प्रियैः वल्लभैः, प्रत्तम् दत्तम्, आसवम् मद्यम्, कोपात् क्रोधात्, न नैव, उपायंसत ( स्वीकरणे उपयमिः ) स्वीकृतवत्यः । कामिनः कामुकाः, प्रेम प्रणयं, जिज्ञासमानाभ्यः अनुयुयुक्षुभ्यः, ताभ्यः ताभ्यः, अशप्सत शपथम् अकार्षुः ( तव पादस्पर्शं शपेऽहम् नान्यां कामये ) । सन्नन्तो ज्ञा धातुरात्मनेपदी । ( ५६।५७ सूत्रे ) ।

कारकः—'श्लाघह्नुङ्० १।४।३४' इति सम्प्रदानात् चतुर्थी । कित्वस्य विकल्पत्वान्नानुनासिकलोप उपायंसत । ।

कोशः—'मैरेयमासवः शीधुर्मेदको जगलः समौ' इत्यमरः ।

वाच्य०—काभिश्चित् आसवो नोपायामि । कामिभिरशापीति ॥ ३३ ॥

तत्र कपिकृत्यमाख्याति—

प्रादिदृक्षत नो नृत्यं नाऽशुश्रूषत गायनान् ।
रामं सुस्मूर्षमाणोऽसौ कपिर् विरह-दुःखितम् ॥ ३४ ॥

अन्वयः—विरह-दुःखितं रामं सुस्मूर्षमाणः असौ कपिः नृत्यं नो प्रादिदृक्षत । गायनान् न अशुश्रूषत ।

हिन्दी—विरहसे दुःखी रामकी यादको इच्छा रखनेवाले हनुमान्ने न नृत्य देखना चाहा और न गानेवालोंको ही सुनना चाहा ।

व्याख्या—विरहदुःखितम् सीतावियोगव्यथितं, रामं राघवं, सुस्मूर्षमाणः स्मर्तुमिच्छुः, असौ प्रसिद्धः, कपिः हनूमान्, नृत्यं नर्तनं, नो नहि, प्रादिदृक्षत द्रष्टु-

मैच्छन् । नापि नैव, गायनान् गायकान्, अशुश्रूषत श्रोतुमैच्छत् ( सन्नन्ताः श्रुस्मृदृशः आत्मनेपदिनः । सूत्रं क्रमशोऽष्टाध्याय्यां द्रष्टुं मे दृढोऽनुरोधः ) । (५७ सूत्रम्) इहापि । नृत्यादीनामदर्शने विरहदुःखिप्रदर्शनाहेतुरिति काव्यालङ्कम् । एकस्य कपेः क्रियाद्वयेनान्वयाद्दीपको वेति सन्देहसङ्करः ।

कोशः—'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने'—इत्यमरः ।

वाच्यपरिवर्तनम्—सुस्मूर्षमाणेनामुना कपिना नृत्यं न प्रादिदृक्ष्यत । गायना न अशुश्रूष्यन्त ॥ ३४ ॥

कपेः सौविध्याय अकस्मादिन्दूदयं वर्णयति—

अनुजिज्ञासतेवाऽथ लङ्का-दर्शनमिन्दुना ।
तमोऽपहविमुक्तांऽशु पूर्वस्यां दिश्युदैयत ॥ ३५ ॥

अन्वयः—अथ (कपेः) लङ्कादर्शनम् अनुजिज्ञासता इव मन्ये इन्दुना पूर्वस्यां दिशि तमोऽपहविमुक्तांशु उदैयत ।

हिन्दी—अनन्तर कपिके लङ्का-दर्शनकी अनुज्ञा देनेको मानो इच्छा रखता हुआ चन्द्रमा पूर्व दिशामें अन्धकार दूर करनेवाली किरणें छिटकाता हुआ उदित हुआ ।

व्याख्या—अथ अनन्तरम्, ( कपेः ) लङ्का-दर्शनम् लङ्का-निरीक्षणम्, अनुजिज्ञासता अनुमोदनं कर्तुमिच्छता, इव मन्ये, इन्दुना चन्द्रेण, पूर्वस्याम् ऐन्द्र्यां, दिशि ककुभि, तमोऽपहविमुक्तांशु ध्वान्तध्वंसकवितीर्णरश्मि, यथा स्यात्तथा, उदैयत उदितम् । अनुजिज्ञासतेत्यत्रात्मनेपदाभावे शतृप्रत्ययः । ( 'नानोर्ज्ञः १।३। ५०' ) इति सूत्रम् । उत्प्रेक्षातिशयोक्तिरपि नायकनायिकानिगरणात् ।

समासः—तमसः अपहाः विमुक्ता अंशवः यस्मिन् कर्मणि तत्, यथा तथेति क्रियाविशेषणमनेकपद-बहुव्रीहिणा ।

कोशः—'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः'—इत्यमरः ।

वाच्यपरिवर्तनम्—अनुजिज्ञासन् इन्दुः उदैत् ॥ ३५ ॥

पुनः कपिकृत्यं विवृणोति—

आशुश्रूवन् स मैथिल्या वार्तां हर्म्येषु रक्षसाम् ।
शोयमानाऽन्धकारेषु समचारीद-शङ्कितः ॥ ३६ ॥

अन्वयः—अशङ्कितः स मैथिल्याः वार्ताम् आशुश्रूषन् शीयमानान्धकारेषु रक्षसां हर्म्येषु समचारीत् ।

हिन्दी—निडर होकर वह मैथिलीकी वार्ताको सुननेकी इच्छा करते हुए अन्धकारविहीन राक्षसोंके कोठों पर घूमने लगे।

व्याख्या—अशङ्कितः निर्भीकः, स हनूमान्, मैथिल्या जानक्याः, वार्ताम् वृत्तान्तम्, आशुश्रूषन् आकर्णयितुमिच्छन्, शीयमानान्धकारेषु विनश्यत्तमःसु, रक्षसां यातुधानानां, हर्म्येषु प्रासादेषु, समचारीत् संक्रान्तवान्। ( सूत्रद्वयस्योदाहरणे ५९।६० इत्यनयोः)। सन्नन्ताच्छ्रुव आङ्योगान्नात्मनेपदम्। 'शद्लृ शातने' इति तुदादेः शितः शानच् शीयमान इति। अशङ्किताचारेऽन्धकारापगमो हेतुरिति काव्यलिङ्गम्।

कोशः—'हर्म्यस्तु धनिनां वासः प्रासादो देशभूभुजाम्'—इत्यमरः।

समासः—शीयमानोऽन्धकारो येभ्यस्ते, तेषु, इति बहुव्रीहिः।

वाच्यपरिवर्तनम्—अशङ्कितेन तेन आशुश्रूषता समचारि ॥ ३६ ॥

तत्र हनूमान् किं ददर्शेत्याह—

शत-साहस्रमारक्षं मध्यगं रक्षसां कपिः।
ददर्श यं कृतान्तोऽपि म्रियेताऽऽसाद्य भीषणम् ॥ ३७ ॥

अन्वयः—कपिः मध्यगं शतसाहस्रं रक्षसाम् आरक्षम् ददर्श। कृतान्तोऽपि भीषणं यम् आसाद्य म्रियेत, किमुतान्ये इति।

हिन्दी—कपिने मध्यप्रकोष्ठमें एक लाख राक्षसोंके रक्षकोंको देखा। यमराज भी उन भयानकोंको देखकर मर जायँ, औरोंकी क्या बात है?

व्याख्या—कपिः हनुमान्, मध्यगं मध्यप्रकोष्ठस्थितं, शत-साहस्रं लक्षसंख्यापरिमाणम्, रक्षसां यातूनाम्, आरक्षं गोपकं, ददर्श आलुलोके। कृतान्तः यमः, अपि सम्भावनायां, भीषणं घोरम्, यम् गोपकम्, आसाद्य प्राप्य, म्रियेत प्राणान् जह्यात्। किमुतान्ये। (६१ सूत्रम्।) 'मृङ् प्राणत्यागे' इति तुदादेर्लिङ् म्रियेत।

कोशः—'कृतान्तो यमुनाभ्राता शमनो यमराड् यमः' इत्यमरः।

तद्धितः—शतसहस्रं परिमाणमस्येति विगृह्य 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि,' इति वचनात् 'शतमान० ५।१।२७' इत्यणि, 'संख्यायाः संवत्सर० ७।३।१५' इत्युत्तरपदवृद्धिः।

वाच्य०—कपिना मध्यगम् आरक्षं ददृशे। कृतान्तेन म्रियेत ॥ ३७ ॥

दूरतो लङ्कां वर्णयति—



अभ्यासिसिधमाणेऽथ तिमिरमध्ये [illegible]
काशाञ्चक्रे पुरी सौधैरतीवोद्भासिभिः सितैः ॥ ३८ ॥

अन्वयः—अथ वियन्मध्यम् अध्यासिसिषमाणे निशाकरे अतीव उद्भासिभिः सितैः सौधैः पुरी कासाञ्चक्रे ।

हिन्दी—इसके बाद आकाशके मध्यमें चन्द्रमाके आरूढ़ होनेकी इच्छा करने पर अत्यन्त चमकने वाले कोठोंके द्वारा लङ्कापुरी देदीप्यमान हो उठी ।

व्याख्या—अथ अनन्तरम्, वियन्मध्यम् व्योममध्यभागम्, अध्यासिसिषमाणे उपवेष्टुमिच्छति, निशाकरे रजनीकान्ते, अतीव अत्यधिकम्, उद्भासिभिः देदीप्यमानैः, सितैः शुक्लवर्णैः, सौधैः राजसदनैः, पुरी लङ्का, कासाञ्चक्रे प्रदिदीपे । नायकनायिकानिगीर्णाऽतिशयोक्तिरलङ्कारः ।

( अत्रास उपवेशने इत्यस्यानुदात्तेत्त्वात् सन्नन्तादपि तथेति क्रमेण सूत्रमष्टाध्याय्यां द्रष्टव्यम् । इह निर्देशो न क्रियते साम्प्रतिकाध्ययन-प्रथापरिसंजिहीर्षया । सम्प्रति भट्टिकाव्यं केवलं काव्यधियैव च्छात्राः पाठ्यन्ते तन्न वरम् । यतो हि व्याकरणाध्ययनार्थम् तत्प्रणयनं कवेरभिमतं तद्धि पुनः प्रदीप्तं स्यादिति मेऽभिप्रायः । ( ६२।६३ सूत्रे ) । सन्नन्तादासः शानच् अध्यासिसिषमाणे । आमन्तात् कृञोऽनुप्रयोग आत्मनेपदम् कासाञ्चक्रे ) ॥ ३८ ॥

तत्रत्य-जनानाम् आचरणमभिचष्टे—

> इन्दुं चषक-संक्रान्तमुपायुङ्क्त यथाऽमृतम् ।
> प्रयुञ्जानः प्रिया वाचः समाजाऽनुरतो जनः ॥ ३९ ॥

अन्वयः—प्रिया वाचः प्रयुञ्जानः समाजाऽनुरतः जनः चषक-संक्रान्तम् इन्दुम् अमृतं यथा इव उपायुङ्क्त ।

हिन्दी—प्रिय वाणी बोलने वाले पान-गोष्ठीमें लिप्त जनोंने मद्यके प्याले में प्रतिबिम्बित चन्द्रमाका अमृतके समान उपयोग किया या अमृतकी तरह प्रिय वाणीका उपयोग किया ।

व्याख्या—प्रियाः प्रणयोपेताः स्नेहभृतः, वाचः वचांसि, प्रयुञ्जानः अभिदधत्, समाजानुरतः पानगोष्ठीरतः, जनः लोकः, चषकसंक्रान्तं मद्यभाजनप्रतिबिम्बितम्, इन्दुं शशिनम्, अमृतम् पीयूषम्, यथा इव, उपायुङ्क्त उपयुक्तवान् । अमृतमिव प्रिया वाच इति वाचामुपमानममृतम् । (६४ सूत्रम्) । प्रोपयुक्ताद् युजेः शानच् लङ् च, प्रयुञ्जानः उपायुङ्क्त । उत्प्रेक्षालङ्कार उपमा वेति सन्देहालङ्कारः । अमृतमिति प्रियवाचो उपमानम् ।



कोशः—'चषकोऽस्त्री पानपात्रम् सरकोऽप्यनुतर्पणम्' ।

वाच्यपरिवर्तनम्—प्रयुञ्जानेन समाजानुरतेन जनेन चषकसङ्क्रान्त इन्दुः अमृतं यथा उपायोजि ॥ ३९ ॥

पुनः द्रढयति—

संक्षुणुवान इवोत्कण्ठामुपाभुङ्क्त सुरामलम् ।
ज्योत्स्नायां विगलन्-मानस् तरुणो रक्षसां गणः ॥ ४० ॥

अन्वयः—विगलन्मानः रक्षसां तरुणः गणः उत्कण्ठां संक्षुणुवान इव (मन्ये) ज्योत्स्नायाम् सुराम् अलम् उपाभुङ्क्त ।

हिन्दी—अभिमान छोड़कर राक्षसोंके नवयुवक-वृन्दने उत्कण्ठाको मानो समुत्तेजित करते हुए चाँदनीमें मद्यको खूब पिया ।

व्याख्या—विगलन्मानः शून्याभिमानः, रक्षसां पुण्यजनानां, तरुणः युवकः, गणः समुदायः (सम्बन्धिनि लक्षणया तरुणस्य गणशब्देनाभेदः),उत्कण्ठाम् उत्कलिकाम् प्रियास्मृतिम् इत्यर्थः, संक्षुणुवानः समुत्तेजयन्, इव मन्ये, ज्योत्स्नायाम् चन्द्रिकायां, सुराम् मदिराम्, अलम् प्रचुरं, यथा स्यात्तथा उपाभुङ्क्त अभ्याहृत। (क्रमेणोदाहरणे) संक्षुणुवः शानच् । उपभुजः रुधादेः तङ् । (६५।६६ सूत्रद्वयम्)। उत्प्रेक्षालङ्कारः ।

कोशः—'चन्द्रिका कौमुदी ज्योत्स्ना' । 'प्रसादस्तु प्रसन्नता'—इत्यमरः ।

वाच्य०—विगलन्मानेन तरुणेन गणेन संक्षुणुवानेन सुरा उपाभोजि ॥ ४० ॥

तदेव व्यनक्ति—

मध्वपाययत स्वच्छं सोत्पलं दयितान्तिके ।
आत्मानं सुरताऽऽभोग-विश्रम्भोत्पादनं मुहुः ॥ ४१ ॥

अन्वयः—स्वच्छं सोत्पलं मधु दयितान्तिके सुरताऽऽभोगविश्रम्भोत्पादनम् आत्मानम् मुहु: अपाययत ।

हिन्दी—स्वच्छ तथा कमलमिश्रित मदिराने प्रियों और प्रियाओंके पास सुरत की परिपूर्णताके विश्वासको उत्पन्न करनेवाली अपने आपको बार-बार पिलाया ।

व्याख्या—स्वच्छं निर्मलं, सोत्पलं सपद्मं पद्मगन्धीत्यर्थः, मधु मैरेयम् (अणौ कर्म णौ कर्तृ), दयितान्तिके वल्लभाभ्यर्णे, सुरताभोगविश्रम्भोत्पादनम् निधुवनपरिपूर्णता-विश्वासजनकम्, आत्मानं स्वं, मुहुः पौनःपुन्येन, [1]अपाययत

---

१. रक्षोगणो मधु पिबति । तमन्यः प्रेरयति । किमन्यः प्रेरयति ? स्वयमेव मधु आत्मानं पाययति इति विग्रहः । विग्रहो वृत्त्यर्थविबोधकं वाक्यम् । कृत्तद्धित-समासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः ।

पायितवत् । ( पातृपायित्रोरैक्यम् । अणौ कर्मणो णौ कर्तृत्वात् तङ् च । ६७ सूत्रम्) । पा-पाने भ्वादेर्णिच् । आत्मकर्मकाण्णिजन्ताल्लङ् अपाययत । कार्ये हेतूक्तौ काव्यलिङ्गम् ।

समासः—दयितश्च दयिता च तौ, तयोरन्तिके 'पुमान् स्त्रिया १।२।६७' इत्येकशेषे तत्पुरुषः । सुरतस्य आभोगः, तत्र विश्रम्भः, तस्य उत्पादनम् । सर्वत्र तत्पुरुषः । उत्पादयतीति विग्रहे 'कृत्यल्युटो बहुलम् ३।३।११३' इति कर्तरि ल्युट् । आत्मनो विशेषणत्वात् पुंस्त्वमपि सम्भवति । मधुविशेषणतया क्लीबत्वम् ।

कोशः—'आभोगः परिपूर्णता' ।

'समौ विश्रम्भविश्वासौ भ्रेषो भ्रंशो यथोचितम्'—इत्यमरः ।

वाच्य०—मधुना स्वच्छेन सोत्पलेन दयितान्तिके आत्मा अपाय्यत ॥ ४१ ॥

हनुमतः कार्यं वर्णयति—

अभीषयन्त ये शक्रं राक्षसा रण-पण्डिताः ।
अविस्मापयमानस् तान् कपिराटीद् गृहाद् गृहम् ॥ ४२ ॥

अन्वयः—ये रणपण्डिता राक्षसाः शक्रम् अभीषयन्त, तान् अविस्मापयमानः कपिः गृहाद् गृहम् आटीत् ।

हिन्दी—जो रणचतुर राक्षस इन्द्रको डरा देते थे, उनको विस्मित न करते हुए हनुमान् एक घरसे दूसरे घरमें घूम रहे थे ।

व्याख्या—ये अज्ञाताः, रणपण्डिताः रणकुशलाः, राक्षसाः क्रव्यादाः, शक्रम् इन्द्रम्, अभीषयन्त भीषितवन्तः । तान् पूर्वोक्तान्, अविस्मापयमानः विस्मयम् अकारयन्, कपिः कीशः (हनूमान्), गृहाद् सद्मनः, गृहम् सद्मान्तरम्, आटीत् अगमत् । ( ण्यन्तयोर्भी-स्मिङोस्तङ् । ६८ सूत्रम् ) अभीषयन्त—'भियो हेतुभये षुक् ७।३।४०' इति षुक् । 'नित्यं स्मयतेः ६।१।५७' इति आत्वे पुक् । शानच् ।

तद्धितः—पण्डा सदसद्विवेकिनी बुद्धिर्यस्यास्ति स पण्डितः 'तदस्य सञ्जातं तारकादिभ्य इतच् ५।२।३६' इति इतच् ।

वाच्यपरिवर्तनम्—यैः रणपण्डितैः राक्षसैः शक्रोऽभीष्यत । अविस्मापयमानेन कपिना आटि ॥ ४२ ॥

हनूमतो वैशिष्ट्यं दर्शयति कविः—

सीतां दिदृक्षुः प्रच्छन्नः सो ऽगर्धयत राक्षसान् ।
अवञ्चयत मायाश्च स्व-मायाभिर्नकश्चिगान् ॥ ४३ ॥

अन्वयः—सीतां दिदृक्षुः प्रच्छन्नः स राक्षसान् अगर्धयत । स्वमायाभिः नर-
ां मायाः च अवञ्चयत ।

हिन्दी—सीताजीको देखना चाहते हुए छिपे हनुमानजीने राक्षसोंको मोहित
ा और अपनी मायाओंसे राक्षसोंकी मायाओं की वञ्चना की ।

व्याख्या—सीतां जानकीं, दिदृक्षुः लुलोकिषुः, प्रच्छन्नः गुप्तः, सः हनुमान्,
सान् यातूनि, अगर्धयत व्यामोहयत । स्वमायाभिः निजवञ्चनाभिः, नरद्विषां
चराणां, मायाः शाम्बरीः, अवञ्चयत प्रातारयत । ( प्रलम्भने गृधिवञ्ची
ौ, तङ्भाजी । ६९ सूत्रम् ) । 'गृधु अभिकाङ्क्षायाम् इति दिवादेः', 'वञ्चु-
भने' इति चुरादेः ण्यन्ताल्लङ्. अगर्द्धयत अवञ्चयत । परिवृत्तिरलङ्कारः ।

कोशः—'स्यान्माया शाम्बरीति ते' ( ना० लि० अ० ) ।

वाच्यपरिवर्तनम्—दिदृक्षुणा प्रच्छन्नेन तेन रक्षसा अगर्ध्यन्त । मायाश्च
ञ्च्यन्त ॥ ४३ ॥

राजनीतिज्ञो हनुमान् रावणचारव्यवस्थां निन्दति—

अपलापयमानस्य शत्रूंस् तस्याऽभवन् मतिः ।
मिथ्या कारयते चारैर् घोषणां राक्षसाऽधिपः ॥ ४४ ॥

अन्वयः—शत्रून् अपलापयमानस्य तस्य मतिः अभवत् 'राक्षसाधिपः चारैः
ां मिथ्या कारयते' इति ।

हिन्दी—शत्रुओंको नीचा दिखाने वाले उनकी बुद्धि ऐसी हुई कि राक्षस-
'रावण' प्रहरियों द्वारा 'जागते रहो' की घोषणा झूठी करा रहा है ।

व्याख्या—शत्रुन् अरीन्, अपलापयमानस्य न्यक्कुर्वतः, तस्य हनुमतः, मतिः
, अभवत् सञ्जाता, यद् राक्षसाधिपः क्षणदाचरेशः, चारैः प्रहरिभिः,
ां 'जागृत' इति निनादं, मिथ्या मुधा, कारयते कारयति । (लीङ्-श्लेषणेऽपि
नीकरणेऽत्र तङ्, कुत्रोऽभ्यासे । क्रमेणाष्टाऽध्याय्यां सूत्रे द्वये ७०।७१) ।
ापा लीयतेः ६।१।५१' इति अपपूर्वस्य आत्वे पुकि शानच् । ण्यन्तात् कुत्रो
सूक्ष्मालङ्कारः । चरघोषणायां सत्यायां न मे प्रवेश इति सूक्ष्मार्थता ।

कोशः—'चारश्च गूढपुरुषश्चाप्तप्रत्ययितौ समौ' ।
'आक्रोशितं त्रिविश्वस्तं च्चैर्घुष्टं तु घोषणा'—इत्यमरः ।



वाच्य०—मत्या अभूयत । राक्षसाधिपेन घोषणा मिथ्या कार्य्यते ॥ ४४ ॥

इतः पञ्चभिः कुलकेन रावणगृहं वर्णयति—७२-७८ सूत्रोदाहरणैः—

गूहमानः स्व-माहात्म्यमटित्वा मन्त्रि-संसदः ।
नृभ्योऽपवदमानस्य रावणस्य गृहं ययौ ॥
दिशो द्योतयमानाभिर् दिव्य-नारीभिराकुलम् ।
श्रियमायच्छमानाभिरुत्तमाभिरनुत्तमाम् ॥
नित्यमुद्यच्छमानाभिः स्मरसंभोगकर्मसु ।
जानानाभिरलं लीला-किलकिञ्चित-विभ्रमान् ॥
स्वं कर्म कारयन्नास्ते निश्चिन्तो या झष-ध्वजः ।
स्वाऽर्थं कारयमाणाभिर् यूनो मद-विमोहितान् ॥
कान्तिं स्वां वहमानाभिर् यजन्तीभिः स्व-विग्रहान् ।
नेत्रैरिव पिबन्तीभिः पश्यतां चित्त-संहतीः ॥ ४५-४९ ॥

अन्वयः—स्वं माहात्म्यं गूहमानः, मन्त्रिसंसदः अटित्वा, (सः) दिशं द्योतयमानाभिः, अनुत्तमां श्रियम् आयच्छमानाभिः, स्मरसंभोगकर्मसु नित्यम् उद्यच्छमानाभिः,लीला-किलकिञ्चितविभ्रमान् जानानाभिः, याः स्वकर्म कारयन् झषध्वजः निश्चिन्त आस्ते ताभिः, मदविमोहितान् यूनः स्वार्थं कारयमाणाभिः, स्वां कान्तिं वहमानाभिः, स्वविग्रहान् यजन्तीभिः, पश्यतां चित्तसंहतीः नेत्रैः पिबन्तीभिः इव दिव्यनारीभिः आकुलम्, नृभ्यः अपवदमानस्य रावणस्य गृहं ययौ इति समुदितोऽन्वयो ज्ञेयः ।

हिन्दी—अपने माहात्म्यको छिपाये हुए हनुमान्‌जी शुकसारण-प्रभृति मन्त्रियोंकी सभाओंमें घूमकर दिशाओंको प्रकाशित करनेवाली, सर्वोत्तम शोभाको धारण करनेवाली तथा स्वयं उत्तम एवम् कामदेवकी संभोगक्रियामें प्रतिदिन उत्साह रखनेवाली, लीला-किलकिञ्चित-विभ्रमादि कामचेष्टाओंकी जानकारी रखनेवाली, कामदेव के कार्य को निश्चिन्त सिद्ध करनेवाली तथा मद्यके नशेमें चूर नवयुवकोंसे अपना मतलब साधनेवाली, अपनी शोभाको बनाये रखनेवाली, अपने अङ्गोंको (कामियोंको) दे डालनेवाली, देखनेवालोंके मनसमूहको नेत्रोंसे मानो पी लेनेवाली दिव्य नारियोंसे परिपूर्ण, मनुष्योंसे घृणा करनेवाले रावणके भवनको गये ।

व्याख्या—स्वमाहात्यं निजमहिमानं, गूहमानः (स्वरितेतो धातुः) संवृण्वन् (सः हनुमान् ) मन्त्रिसंसदः शुकसारणादिसचिवसंस्थानानि, अटित्वा परिक्रम्य दिशः आशाः, द्योतयमानाभिः प्रकाशयन्तीभिः, अनुत्तमां सर्वश्रेष्ठां, श्रियं शोभाम्

आयच्छमानाभिः स्वीकुर्वाणाभिः, (स्वयम्) उत्तमाभिः श्रेष्ठाभिः, स्मरसम्भोगकर्मसु रमोपभोगक्रियासु, नित्यम् अनिशम्, उद्यच्छमानाभिः उत्सहमानाभिः, (एवं हि) लीलाकिलकिञ्चितविभ्रमान् स्त्रीभावचेष्टाविशेषान्, अलं प्रचुरं (क्रियाविशेषणं) जानानाभिः विदतीभिः, (अनुपसर्गस्य ज्ञः तङ्। लीलादिलक्षणं साहित्यदर्पणाद् दशरूपकाद्वा ज्ञेयम्), याः पूर्वोक्ताभ्योऽन्याः अपि, स्वं निजं, कर्म क्रियाम् (पुरुषायितकारादिना); कारयन् विधापयमानः, मकरध्वजः कामः, निश्चिन्तः सुस्थिरः, आस्ते तिष्ठति, ताभिरित्यर्थः। तथा मदविमोहितान् सुरापानपरिणामपरवशान्; जनः तरुणान्, स्वार्थम् निजप्रयोजनं (निधुवनादि), कारयमाणाभिः सम्पादयन्तीभिः, (वैभाषिकस्तङ् ण्यन्तात्) स्वां निजां, कान्ति शोभाम्, वहमानाभिः धारयतीभिः, स्वविग्रहान् निजगात्राणि, यजन्तीभिः ददतीभिः (कामिभ्यः), (वैभाषिकस्तङ् 'वदयजोः केवलयोः १।३।७७' सूत्रेण। इत्यात्मनेपदाधिकारसमाप्तिः। तदनन्तरः परस्मैपदाधिकार प्रारब्धः) पश्यताम् निरीक्षमाणानाम्, चित्तसंहतीः जनमनःसन्दोहान्, नेत्रैः लोचनैः, पिबन्तीभिः धयन्तीभिः, इव मन्ये, आकुलम् व्याप्तम्, अन्येभ्यः मनुष्येभ्यः, अपवदमानस्य असूयतः (अपवदिस्तङ्शाली), रावणस्य दशास्यस्य, गृहं भवनम्,ययौ जगाम। (द्वासप्ततितः ७२ आरभ्य शेषात्कर्तरीत्यन्तम् ७८ क्रमशो ज्ञेयम्)। 'गूहमानः' (७२) 'अपवदमानस्य' (७३) 'द्योतयमानाभिः' (७४) 'आयच्छमानाभिः', 'उद्यच्छमानाभिः' (७५) 'जानानाभिः (७६) 'कारयन्' 'कारयमाणाभिः' (७६), 'पिबन्तीभिः' 'पश्यताम् (७८) इति सूत्रक्रमो ज्ञेयः)। स्त्रीणामनेकक्रियासम्बन्धाद्दीपकेन उत्प्रेक्षालङ्कारालङ्कारः।

समासः—स्मरस्य सम्भोगः, तस्य कर्माणि, तेषु। लीलाश्च किलकिञ्चितानि च विभ्रमाश्चेतीतरेतरयोगः।

'विलासलीलाकिलकिञ्चितानि विब्वोकमोट्टायितविभ्रमाणि।
विच्छित्तिमाकुट्टिमितेक्षितानि योज्यानि तज्ज्ञैः सुकुमारनृत्ते'—इत्यप्युक्तम्।

कोशः—'मन्त्री धीसचिवोऽमात्यो ऽन्ये कर्मसचिवास्ततः'।
'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः'—इत्यमरः।

वाच्यपरिवर्तनम्—गूहमानेन आकुलं गृहम् यये। (मध्ये) कारयता निश्चिन्तेन मकरध्वजेन भूयते (इत्यपि)।

(अष्टाध्याय्याम् आत्मनेपदाधिकारमध्ये प्राप्त परस्मैपदाधिकारमपि क्रमशो विलोकयन्तु पाठार्थिनः)॥ ४५–४९॥

हनूमतस्तदुपेक्षां संकेतयति—

ता हनूमान् पराकुर्वन्नगमत् पुष्पकं प्रति ।
विमानं मन्दरस्याद्रेरनुकुर्वदिव श्रियम् ॥ ५० ॥

अन्वयः—ताः पराकुर्वन् हनूमान् मन्दरस्य अद्रेः श्रियम् अनुकुर्वद् इव ( स्थितम् ) पुष्पकं विमानम् प्रति अगमत् ।

हिन्दी—उन स्त्रियोंको ओझल करते हुए हनुमान्जी मन्दराचलकी शोभाकी नकल करते हुएके समान स्थित पुष्पक विमानकी ओर चले गये ।

व्याख्या—ताः दिव्यस्त्रीः, पराकुर्वन् निराद्रियमाणः अपक्षिपन्नित्यर्थः, हनूमान् मारुतिः, गिरेः मन्दरस्य तन्नाम्नः, अद्रेः गिरेः, श्रियं शोभाम्, अनुकुर्वन् अनुहरत्, इव उत्प्रेक्षे (स्थितम्), पुष्पकं तन्नाम कुवेरयानं, विमानं व्योमयानम्, अगमत् अयासीत् ( ७९ सूत्रम् ) । अनुपरापूर्वकस्य कृञः शतरि पराकुर्वन्, अनुकुर्वत् । उत्प्रेक्षालङ्कारः ।

कोशः—'कैलासः स्थानमलका पूर्विमानं तु पुष्पकम्' ।
'श्रीर्वेषरचना शोभा भारती सरलद्रुमे ।'
'लक्ष्म्यां त्रिवर्गसम्पत्तौ वेषोपकरणे मतौ'—विश्वमेदिन्यौ ।

वाच्य०—पराकुर्वता हनुमता अनुकुर्वत् पुष्पकम् प्रति अगामि ॥ ५० ॥

सम्प्रति युग्मेन रावणं विवृणाति—

तस्मिन् कैलास-संकाशं शिरःशृङ्गं भुज-द्रुमम् ।
अभिक्षिपन्तमैक्षिष्ट रावणं पर्वत-श्रियम् ॥
प्रवहन्तं सदामोदं सुप्तं परिजनाऽन्वितम् ।
मघोने परिमृष्यन्तमारमन्तं परं स्मरे ॥ ५१–५२ ॥

अन्वयः—(सः) तस्मिन् विमाने कैलाससंकाशं शिरःशृङ्गं भुजद्रुमम् (अतः) र्वतश्रियम् अभिक्षिपन्तं, सदामोदं प्रवहन्तं, परिजनान्वितम्, मघोने परिमृष्यन्तं, मरे परम् आरमन्तं, सुप्तं रावणम् ऐक्षिष्ट ।

हिन्दी—उन्होंने उस विमानमें, कैलासके सदृश शिर जिसका शिखरके तुल्य भुजाएँ जिसकी पेड़के समान हैं, ऐसे पर्वतकी शोभाको परास्त करते हुए सदा च्छी सुगन्ध धारण किये हुए, परिजनोंके सहित इन्द्रसे डाह करनेवाले, काम-ीडामें अत्यन्त आसक्त सोये हुए रावणको देखा ।

व्याख्या—( सः हनूमान् ) तस्मिन् विमाने, कैलाससंकाशं कैलासाद्रिनिभम्, ारःशृङ्गम् मस्तकशिखरम्, भुजद्रुमम् बाहुवृक्षम्, ( अत एव ) पर्वतश्रियम् द्रिशोभाम्, अभिक्षिपन्तम् तिरस्कुर्वन्तम्, सदामोदम् कस्तूरिकादिपरिमलं,

प्रवहन्तम् धारयन्तम्, परिजनान्वितम् पारिपार्श्विकाधिष्ठितम्, मघोने शक्राय, परिमृष्यन्तम् असूयन्तम्, स्मरे कामे, परम् अत्यर्थम्, आरमन्तम् समासक्तिं कुर्वाणं, सुप्तं शयितं, रावणम् दशास्यम्, ऐक्षिष्ट अद्राक्षीत् । (८०-८३ सूत्राणि) । अभिक्षिपेः भ्वादेः शतरि अभिक्षिपन्तम् । प्रवहेः भ्वादेस्तथैव । परिमृष्यन्तमित्यपि शत्रन्तस्य दिवादेः 'मृष-तितिक्षायाम्' इति । उपमारूपकसङ्करालङ्कारः ।

समासः—कैलासेन सङ्काशः ( तत्पुरुषः ) । शिरांसि शृङ्गाणीव यस्य स तम्, बहुव्रीहिः । एवम् भुजा द्रुमा इव यस्य सः, तम् । परिजनैः अन्वितः, तम् ( तत्पुरुषः ) । अथवा शिरांसि एव शृङ्गाणि यस्य तथा । भुजा एव द्रुमा यस्येति बहुव्रीहिः ।

कोशः—'निभसंकाशनीकाशप्रतीकाशोपमादयः' ।

'आमोदः सोऽतिनिर्हारी वाच्यलिङ्गत्वमागुणात्'—इत्यमरः ।

वाच्यपरिवर्तनम्—( तेन ) कैलाससंकाशः शिरःशृङ्गः इत्यादि प्रथमान्तविशेषणैर्युक्तो रावणः ऐक्षि ॥ ५२ ॥

अग्रेऽपि हनुमत्कृत्यं प्रस्तौति—

व्यरमत् प्रधनाद् यस्मात् परित्रस्तः सहस्र-दृक् ।
क्षणं पर्यरमत् तस्य दर्शनान्-मारुताऽऽत्मजः ॥ ५३ ॥

अन्वयः—यस्मात् परित्रस्तः सहस्रदृक् प्रधनात् व्यरमत्, मारुतात्मजः तस्य दर्शनात् क्षणं पर्यरमत् ।

हिन्दी—जिससे डरकर इन्द्र संग्रामसे हट गये, हनूमान्‌जी उसके दर्शनसे क्षण भर सन्तुष्ट हुए ।

व्याख्या—यस्मात् रावणात्, परित्रस्तः उद्विग्नः, सहस्रदृक् सहस्राक्षः, प्रधनात् युद्धात्, व्यरमत् विरतोऽभवत् । मारुतात्मजः हनूमान्, तस्य रावणस्य, दर्शनात् निरीक्षणात्, क्षणं मुहूर्तपर्यन्तम्, पर्यरमत् परितुष्टोऽभवत् । वि-परि-पूर्वस्य रमु—क्रीडायामिति भ्वादेर्लङि रूपम् । ( ८३ सूत्रम् ) । व्याघातालङ्कारः ।

कारकः—'भीत्रार्थानाम् भयहेतुः १।४।२५' इत्यपादानात् यस्मादित्यत्र पञ्चमी । जुगुप्साविरामप्रमादार्थानामपादाने पञ्चमी प्रधनादिति । दर्शनादित्यत्रापि ।

कोशः—'मृधमास्कन्दनं संख्यं प्रधनं प्रविदारणम्' ।



वाच्य०—यस्मात् सहस्रदृशा व्यरामि, मारुतात्मजेन क्षणं पर्यरामि ॥५३॥

रावणं दृष्ट्वा मारुतेः दशां वर्णयति कविः—

उपारंसीच् च संपश्यन् वानरस् तं चिकीर्षितात् ।
रम्यं मेरुमिवाऽऽधूत-काननं श्वसनोर्मिभिः ॥ ५४ ॥

अन्वयः—वानरः श्वसनोर्मिभिः आधूतकाननम् मेरुम् इव रम्यं तं संपश्यन् चिकीर्षितात् उपारंसीत् च ।

हिन्दी—वायुके झकोरोंसे काँपते हुए जङ्गलसे युक्त मेरु पर्वतके समान एवं श्वाससे मुख—मस्तक हिलाते हुए सुन्दर रावणको देखते हुए वानर ( हनुमान् ) अपने कर्तव्यकी इच्छासे विरत रहे ।

व्याख्या—वानरः हनूमान्, श्वसनोर्मिभिः वायु-तरङ्गैः, आधूतकाननं कम्पितारण्यम्, रम्यं देव-क्रीडास्थलम्, मेरुम् देवगिरिम्, इव यथा, (तथा) श्वसनोर्मिभिः निःश्वास-तरङ्गैः, आधूतकाननम् प्रचलित-शिरोमुखम्, रम्यं रमणीयं, तम् रावणम्, संपश्यन् अवलोकयन्, चिकीर्षितात् कर्तुमिष्टात् तद्विनाशात्, उपारंसीत् निवृत्तोऽभवत् । ( ८४ सूत्रम् ) । श्लेषगर्भितोपमालङ्कारः ।

समासः—मेरुपक्षे आधूतं काननं यस्य सः, तम् । रावणपक्षे कानि (शिरांसि) च आननानि चेति द्वन्द्वे 'द्वन्द्वश्च प्राणितूर्य-सेनाङ्गानाम् २।४।२' इत्येकवद्भावे काननम् । अधूतम् काननम् यस्य सः, तमिति उभयत्र बहुव्रीहिः । श्वसनस्य वायोः ऊर्मिरिति मेरुपक्षे । श्वसनानाम् निःश्वासानाम् ऊर्मिरिति रावणपक्षे । उभयत्रापि तत्पुरुषः ।

कोशः—'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' ।

वाच्यपरिवर्तनम्—संपश्यता उपारामि ॥ ५४ ॥

हनूमान् विचारयति—

दृष्ट्वा दयितया साकं रहीभूतं दशाननम् ।
नाऽत्र सीतेत्युपारंस्त दुर्मना वायु-संभवः ॥ ५५ ॥

अन्वयः—दयितया साकं रहीभूतं दशाननं दृष्ट्वा दुर्मना वायु सम्भवः 'अत्र सीता न ( स्यात् )' इति उपारंस्त ।

हिन्दी—प्रियाके साथ एकान्तमें सोये रावणको देखकर विमनस्क हनुमान् जी 'यहाँ सीता नहीं रह सकतीं' यह सोचकर वहाँसे हट गये ।

व्याख्या—दयितया प्रियया, साकं सार्धम्, रहीभूतम् विजनस्थं, दशाननं रावणं, दृष्ट्वा विलोक्य, दुर्मनाः विमनाः, वायुसम्भवो मारुतिः, 'अत्र अस्मिन्

स्थाने सीता जानकी, न नहि ( स्यात् ), इति उपारंस्त न्यवृतत् ततः। (८५ सूत्रम् ) अकर्मकस्य रमेः पाक्षिके तङि लिङ्। अनुमानालङ्कारः।

कृदन्तः—अरहः रहः यथा सम्पद्यते यथा भूतः इत्यर्थे भूधातोः क्ते 'अरुर्मन॰ प्रभुः॰ ५।४।५१' इति च्वौ सलोपे, 'अस्य च्वौ ७।४।३२' इति ईत्वे रहीभूत-स्तम्। दयितयेति 'सहयुक्तेऽप्रधाने २।२।१९' इति तृतीया।

कोशः—'दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः'—इत्यमरः।

वाच्यपरिवर्तनम्—सीतया भूयेत न, दुर्मनसा वायुसम्भवेन उपारामि ॥५५॥

मारुतेः बुद्धिमत्त्वं वर्णयति कविः—

ततः प्राकारमारोहत् क्षपाटानविबोधयन्।
नाऽयोधयत् समर्थोऽपि सीता-दर्शन-लालसः ॥ ५६ ॥

अन्वयः—ततः (सः) क्षपाटान् अविबोधयन् प्राकारम् आरोहत्। समर्थोऽपि सीतादर्शनलालसः (तान् ) न अयोधयत्।

हिन्दी—वाद (वह हनुमान्) राक्षसोंको न जगाते हुए कोठे पर चढ़ गये। समर्थ होते हुए भी सीता-दर्शन की इच्छा से राक्षसों को युद्ध-रत नहीं किया।

व्याख्या—ततः तदनन्तरं, (सः हनुमान्) क्षपाटान् राक्षसान्, अविबोधयन् अचेतयन्, प्राकारम् वरणम्, आरोहत् आरूढवान्। समर्थः शक्तः अपि, सीता-दर्शनलालसः मैथिलीविलोकनोत्सुकः, ( तान् ) न नैव, अयोधयत् असंग्रामयत्। बुधेः सकर्मकस्य हनुमद्रूपचित्तवत्कर्तृत्वे ङीप्। युधेरकर्मकस्य क्षपाटरूपचित्तवत्-कर्तृत्वादुभयत्र 'बुधयुध॰ ८६' इति परस्मैपदम्।

कोशः—'प्राकारो वरणः सालः'।

वाच्यपरिवर्तनम्—अविबोधयता प्राकारः समर्थेन सीतादर्शन-लालसेन न अयोध्यत। आरोह्यत ॥ ५६ ॥

कपेश्चिन्तामाह—

अध्यासीद् 'राघवस्याऽहं नाशयेयं कथं शुचम्।
वैदेह्या जनयेयं वा कथमानन्दमुत्तमम्' ॥ ५७ ॥

अन्वयः—अहम् राघवस्य शुचं कथं नाशयेयम् ? वैदेह्या उत्तमम् आनन्दं कथं वा जनयेयम् ? ( सः ) अध्यासीत्।

हिन्दी—मैं रामचन्द्रका शोक कैसे दूर करूँ, सीताजीको उत्तम आनन्द कैसे प्रदान कराऊँ, ऐसा वह सोचने लगे।

व्याख्या—अहं हनुमान्, राघवस्य रामस्य, शुचं शोकं, कथं केन प्रकारेण,

नाशयेयम् अपनयेयम् । वैदेह्याः सीतायाः, उत्तमं श्रेष्ठम्, आनन्दम् हर्षम्, कथं वा केन प्रकारेण, जनयेयम् प्रापयेयम् । इति इत्थम्, (सः) अध्यासीत् अचिन्तयत् । तेनैव ( ८६ ) परस्मैपदम् अचित्तवत्कर्तृत्वात् शुगानन्दयोरिति । ण्यन्तयोर्नश-जन्योर्लिङ् । कपेः क्रियाद्वयान्वयाद्दीपकालङ्कारः ।

तिङन्तः—अध्यासीदिति ध्यै चिन्तायाम् इत्यस्य लुङि 'आदेच्र उपदेशेऽशिति ६।१।४५' इत्यात्वे सगिटौ ।

वाच्यपरिवर्तनम्—मया शुचो नाश्येरन् उत्तम आनन्दो जन्येत—इति तेना-ध्यायि ॥ ५७ ॥

कपिर्मनोरथमातनोति—

> दृष्ट्वा राघव-कान्तां तां द्रावयिष्यामि राक्षसान् ।
> तस्या हि दर्शनात् पूर्वं विक्रमः कार्य-नाश कृत् ॥ ५८ ॥

अन्वयः—तां राघवकान्तां दृष्ट्वा राक्षसान् द्रावयिष्यामि, हि तस्या दर्शनात् पूर्वम् विक्रमः कार्यनाशकृत् स्यात् ।

हिन्दी—उस प्रसिद्ध रामप्रिया सीताजीको देखकर राक्षसोंको भगाऊँगा, क्योंकि उसके दर्शनके पहले विक्रम करना कार्य–नाशक होगा ।

व्याख्या—तां प्रसिद्धां, राघवकान्तां रामप्रियां, दृष्ट्वा अवलोक्य, राक्षसान् क्रव्यादान्, द्रावयिष्यामि धावयिष्यामि। हि यतः, तस्याः सीतायाः, दर्शनात् वीक्ष-णात्, पूर्वम् प्राक्, विक्रमः पराक्रमः, कार्यनाशकृत् कृत्यहानिकरः, स्यात् भवेत् । द्रवतेर्ण्यन्तात् तेनैव (८६) परस्मैपदम् । राक्षसानामविवेकात्मकत्वादचित्तवत्त्वम् । ण्यन्तस्य 'द्रु गतौ' इति भ्वादेर्लृट् । कार्यहेतूक्तौ काव्यलिङ्गम् ।

वाच्य०—राक्षसा द्रावयिष्यन्ते । विक्रमेण कार्यनाशकृता भूयेत ॥ ५८ ॥

अदृष्टनुन्नो हनूमान् लक्ष्यस्थानमभ्युपैति—

> चिन्तयन्नित्थमुत्तुङ्गैः प्रावयन्तीं दिवं वनैः ।
> अशोक-वनिकामारादपश्यत् स्तबकाऽऽचिताम् ॥ ५९ ॥

अन्वयः—इत्थं चिन्तयन् उत्तुङ्गैः वनैः दिवं प्रावयन्तीं स्तवकाचिताम् अशोक-वनिकाम् आरात् अपश्यत् ।

हिन्दी—ऐसा विचार करते हुए हनुमान्ने ऊँचे उपवनोंसे आकाशको छूती हुई पुष्पगुच्छोंसे भरी अशोक-वाटिकाको पासमें ही देखा ।



व्याख्या—इत्थं एव प्रकारेण, चिन्तयन् विचारयन्, ( सः ) उत्तुङ्गैः उन्नतैः, वनैः काननैः, दिवम् द्याम्, प्रावयन्तीं व्याप्नुवन्तीम्, स्तवकाचिताम् पुष्पगुच्छ-

न्भृताम्, अशोकवनिकां तन्नामकम् सुमनोहरमुद्यानम्, आरात् समीपे, अपश्यत् निरैक्षत। अत्रापि सूत्रम् ८६, अशोकवनिकाया जडत्वात्। प्रुङ्-गतौ इति यन्तस्य भ्वादेः शत्रन्तस्य ङीपि रूपम्।

कोशः—'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे'।

'स्याद् गुच्छकस्तु स्तबकः कुड्मलो मुकुलोऽस्त्रियाम्'—इत्यमरः।

वाच्यपरिवर्तनम्—चिन्तयता प्रावयन्ती अशोकवनिका अदृश्यत ॥ ५९॥

सम्प्रति तत्र कार्य-प्रवेशमाह कुलकैः पञ्चपद्यैः—

तां प्राविशत् कपि-व्याघ्रस् तरून्-चलयञ् शनैः।
अ-त्रासयन् वन-शयान् सुप्ताञ् शाखासु पक्षिणः॥
अवाद् वायुः शनैर् यस्यां लतां नर्तयमान-वत्।
नाऽऽयासयन्त संत्रस्ता ऋतवोऽन्योन्य-संपदः॥
ज्योत्स्नाऽमृतं शशी यस्यां वापीर् विकसितोत्पलाः।
अपाययत सम्पूर्णः सदा दश-मुखाऽऽज्ञया॥
प्रादमयन्त पुष्पेषुं यस्यां वन्द्यः समाहृताः।
परिमोहयमाणाभी राक्षसीभिः समावृताः॥
यस्यां वासयते सीतां केवलं स्म रिपुः स्मरात्।
न त्वरोचयताऽऽत्मानं चतुरो बुद्धि (वृद्धि) मानपि ॥६०—६४॥

अन्वयः—कपिव्याघ्रः तरून् अचलयन्, वनशयान् शाखासु सुप्तान् पक्षिणः त्रासयन्, शनैः ताम् (अशोकवनिकाम्) प्राविशत्। यस्याम् लताः नर्तयमानवत् वायुः शनैः अवात्, (यत्र) सन्त्रस्ताः ऋतवः अन्योऽन्य-सम्पदः न आयासयन्त, यस्यां दशमुखाज्ञया सम्पूर्णः शशी विकचोत्पलाः वापीः ज्योत्स्नाऽमृतम् अपाययत, यस्यां परिमोहयमाणाभिः राक्षसीभिः समावृताः समाहृताः वन्द्यः पुष्पेषुम् प्रादमयन्त, यस्यां रिपुः स्मरात् सीतां केवलं वासयतेस्म, चतुरः वृद्धि (बुद्धि) मान् अपि न तु आत्मानम् अरोचयत।

हिन्दी—वानर-श्रेष्ठ हनुमान्जी वृक्षोंको न कँपाते हुए, उद्यानमें सोये मालियों को तथा शाखापर सोये पक्षियोंको न डराते हुए, उस अशोकवाटिकामें घुस गये। जहाँ वायु लताओंको नचाता हुआ सा धीरे-धीरे बहता था तथा वसन्त आदि ऋतु (रावणसे) डरे हुए परस्पर सम्पत्तियोंको बाधा नहीं पहुँचाते थे और जहाँ रावणकी आज्ञासे सदा ही (सम्पूर्ण) सोलह कलाओंसे युक्त चन्द्रमा विकसित कमलवाली बावलियोंको चाँदनीरूपी अमृतका पान कराता था और

मोहित करनेवाली राक्षसियोंसे घिरी हुई हरकर लाई गयी वन्दी स्त्रियाँ कामदेवको शान्त करती थीं, तथा जहाँ शत्रु रावणने कामदेवके कारण सीताको केवल रक्खा मात्र था। चतुर वृद्धिशाली या बुद्धिमान् होता हुआ भी वह अपनेको पसन्द न करा सका।

व्याख्या—कपिव्याघ्रः कीशश्रेष्ठः (हनुमान्), तरून् विटपिनः, अचलयन् अकम्पयन्, (तरोर्विवेकाभावादचित्तत्वमिति ८७तम सूत्रेण शतृप्रत्ययः)। वनशयान् उद्यानसुप्तान् (तद्रक्षकान्), शाखासु विटपेषु, सुप्तान् निद्राणान्, पक्षिणः शकुन्तान्, अत्रासयन् अभीषयन्, (त्रसेरकर्मकस्य चित्तवत्कर्तृकत्वात् ८८ तमसूत्रेण शतृप्रत्ययः)। तम् प्रसिद्धाम् अशोकवनिकाम्, शनैः मन्दम्. प्राविशत् प्रविष्टः। तस्याम् अशोकवनिकायां लताः वल्लीः, नर्तयमानवत् अङ्गहारं कारयन्निव, वायुः मरुत्, शनैः मन्दम्, अवात् ववौ। तथा (यस्यां) सन्त्रस्ताः भीताः (रावणादिति शेषः), ऋतवः वसन्तादयः, अन्योऽन्यसम्पदः परस्परसम्पत्तीः, न आयासयन्त नैव बाधयामासुः। (अत्रायास्यतेश्चलनार्थत्वात् नृत्यतेश्चित्तवत्कर्तृकत्वात् प्राप्तस्य परस्मैपदस्य निषेधकस्तङ्)। यस्यां वनिकायां, दशमुखाज्ञया रावणादेशेन, सदा सर्वदा, सम्पूर्णः षोडशकलः, शशी चन्द्रः, विकचोत्पलाः विकसितकुमुदिनीः, वापीः दीर्घिकाः, ज्योत्स्नाऽमृतम् चन्द्रिकासुधाम्, अपाययत पायितवान् (अत्र पाययतेः प्रत्यवसानार्थतया प्राप्तस्य निगरणार्थकपरस्मैपदस्य प्रतिषेधः। 'गतिबुद्धि०' इति अणि कर्तुः णौ कर्मत्वमपि)। (सूत्राणि तु क्रमेणैव द्रष्टव्यानि)। यस्यां पूर्वोक्तायां, परिमोहयमाणाभिः व्यामोहयन्तीभिः, राक्षसीभिः रात्रिचरीभिः, समावृताः परिवेष्टिताः, समाहृताः स्वर्गादानीताः, वन्द्यः बन्दीकृताः स्त्रियः, पुष्पेषुं कामं, प्रादमयन्त प्रकर्षेण दमयामासुः (दमिपरिमुह्योर्ण्यन्तयोरणावकर्मकात् चित्तवत्कर्तृकात् प्राप्तस्य परस्मैपदस्य प्रतिषेधकस्तङ्)। यस्याम् अशोकवनिकायां, रिपुः अरिः (रावणः), स्मरात् कामात् (हेतोः), सीतां जानकीम्, केवलं निष्फलम् वासयतेस्म स्थापयतेस्म। चतुरः निपुणः, (स्त्रीरञ्जने) वृद्धि (वृद्धि) मान् सम्पत्तिबहुलः प्रशस्यबुद्धिकः, अपि निश्चयेन, नतु नैव, आत्मानं स्वम्, अरोचयत तस्यै रुचितं कर्तुं शशाक।' (तस्या दृढव्रतत्वादिति भावः)। (वसिरुच्योः पूर्ववत् परस्मैपदप्राप्तिप्रतिषेधे 'णिचश्च ७४' इति सामान्यसूत्रेण तङ्)। प्रथमपद्ये उपमा, द्वितीये काव्यलिङ्गम्, तृतीये अतिशयोक्तिः, तूर्ये विभावना, पञ्चमे विरोधोक्तिरित्यलङ्कारसमुच्चयः।



समासः—कपिः व्याघ्र इवेति 'उपमितं व्याघ्रादिभिः २।१।५६' इति समासः।

ज्योत्स्नैव अमृतमिति मयूरव्यंसकादित्वात्समासः। विकचानि उत्पलानि यासु ताः। अत्रोत्पलं कुमुदिनी, रात्रौ कमलाविकासात्।

कोशः—'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः'।

'मदनो मन्मथो मारः कामः पञ्चशरः स्मरः' इत्यमरः।

कृदन्तः—वने शेरत इति 'अधिकरणे शेतेः ३।२।१५' इत्यच्। 'शयवासवासि० ६।३।१८' इति पाक्षिकत्वाल्लुक् सप्तम्याः। मुह्यतेर्ण्यन्ताच्छानचि 'णेर्विभाषा ८।४।३०' पाक्षिको णः।

वाच्यपरिवर्तनम्—वायुना अवायि। सन्त्रस्तैः ऋतुभिः अन्योऽन्यसम्पदः आयास्यन्त। सम्पूर्णेन शशिना वाप्योऽपाव्यन्त। बन्दीभिः पुष्पेषुः प्रादम्यत। रिपुणा सीता वास्यतेस्म। चतुरेण आत्मा नारोच्यत ॥ ६०–६४ ॥

पुनर्हनुमत्कृत्यमाख्याति—

मन्दायमान-गमनो हरितायत्-तरूं कपिः।
द्रुमैः शकशकायद्भिर् मारुतेनाऽऽट सर्वतः ॥ ६५ ॥

अन्वयः—मन्दायमानगमनः कपिः हरितायत्तरूं मारुतेन शकशकायद्भिः द्रुमैः (उपलक्षिताम्) सर्वतः आट। तामिति शेषः।

हिन्दी—मन्द गतिको बताए हुए हनुमान्जी हरे पेड़ वाली तथा वायुके द्वारा शकशक शब्द करने वाले वृक्षोंसे युक्त अशोकवाटिकामें सर्वत्र घूमते रहे।

व्याख्या—मन्दायमानगमनः सुप्तजनप्रबोधशङ्कया शिथिलगतिः, कपिः हनुमान्, हरितायत्तरूम् पलाशीभवद्वृक्षां, मारुतेन वायुना, शकशकायद्भिः शकशकीभवद्भिः, द्रुमैः वृक्षैः, (उपलक्षिताम् अशोकवाटिकां) सर्वतः सर्वत्र, आट परिबभ्राम। (९० सूत्रम्)। हरिताय शकशकाय इत्यतः शतृप्रत्ययः। उपमा आर्थी।

कृदन्तः—भृशादिक्यङन्ताल्लटः शानच्। मन्दायमानं गमनं यस्येति समासः। अहरिता हरिता भवन्तीति हरितायन्तस्तरवो यस्याम् सा, ताम्। 'अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्' इत्यूङ् तरुशब्दे। लोहितादित्वात् क्यष्। क्यषन्तात् पाक्षिकं परस्मैपदम्। अशकाः शका भवन्ति इति शकशब्दात् 'अव्यक्तानुकरणात् ५।४।५७' इति डाचि विषयभूते 'डाचि बहुलं द्वे भवतः' 'नित्यमाम्रेडिते डाचि' इति पररूपत्वे डाजन्तात् क्यष्, ततो वा परस्मैपदम्।

कोशः—'पलाशो हरितो हरित्' इत्यमरः।

वाच्यपरिवर्तनम्—कपिना अटे हरितायत्तरूः ॥ ६५ ॥

तामशोकवनिकामेव विशिनष्टि—

अस्यदन्निन्दु-मणयो, व्यरुचन् कुमुदाऽऽकराः।
अलोठिषत वातेन प्रकीर्णाः स्तबकोच्चयाः ॥ ६६ ॥

अन्वयः—( यत्र ) इन्दुमणयः ( इतो द्युतादयः प्रारब्धाः ) अस्यदन्, कुमुदाकराः व्यरुचन्, वातेन प्रकीर्णाः स्तबकोच्चयाः अलोठिषत।

हिन्दी—जहाँ चन्द्रकान्तमणि नामक पत्थर पिघल रहे थे, कोईके झुण्ड खिल रहे थे तथा वायुसे गिरे पुष्पके गुच्छे ढेरके ढेर पृथ्वीपर लोट रहे थे।

व्याख्या—यत्राशोकवाटिकायाम्, इन्दुमणयः चन्द्रकान्तमणयः, अस्यदन् प्रासुस्रुवन्। कुमुदाकराः कैरवसमूहाः, व्यरुचन् विकसिता अभूवन्। वातेन वायुना, विकीर्णाः विक्षिप्ताः, स्तबकोच्चयाः पुष्पगुच्छराशयः, अलोठिषत लुठन्तिस्म। सर्वत्र द्युतादित्वात्पाक्षिकं परस्मैपदम्, लुठेर्न पाक्षिकत्वात् ( ९१ सूत्रम् )। 'रुच दीप्तावभिप्रीतौ च, स्यन्दू-प्रस्रवणे' इति द्युतादी धातू, ततो लुङ्, परस्मैपदम्। विना हेतुं कार्योत्पत्त्या विभावना।

वाच्यपरिवर्तनम्—इन्दुमणिभिरस्यन्दि। कुमुदाकरैः व्यरोचि। प्रकीर्णैः स्तबकोच्चयैर्व्यलोठि ॥ ६६ ॥

सम्प्रति हनूमन्तं विशिनष्टि—

सीताऽन्तिके विवृत्सन्तं वर्त्स्यत्-सिद्धिं प्लवङ्गमम्।
पतत्रिणः शुभा मन्द्रमानुवानास् त्वजिह्लदन् ॥ ६७ ॥

अन्वयः—मन्द्रम् आनुवानाः शुभाः पतत्रिणः सीतान्तिके विवृत्सन्तम् वर्त्स्यत्सिद्धिम् प्लवङ्गमम् अजिह्लदन्।

हिन्दी—गम्भीर ( स्तुति ) शब्दोंको करनेवाले सुन्दर पक्षी, सीताजीके पास उपस्थित होने की इच्छा करनेवाले एवं भविष्यमें सफलता प्राप्तिवाले हनुमान्जी को प्रसन्न कर रहे थे।

व्याख्या—मन्द्रं गम्भीरम्, आनुवानाः 'धन्योऽसि' इति स्तुवानाः, शुभाः मनोहराः, पतत्रिणः पक्षिणः, सीतान्तिके जानक्यभ्यर्णे, विवृत्सन्तं वर्तितुम् इच्छन्तम्, वर्त्स्यत्सिद्धिम् वर्तिष्यमाणसाफल्यम् आसन्नसीतोपलब्धिमित्यर्थः, प्लवङ्गमम् कपिम्, अजिह्लदन् ह्लादयन्ति स्म। 'आङि नुप्रच्छयोः १।३।२१' (वा०) इति तङ् आनुवानाः। 'वृतु-वर्तने द्युतादेः लृट्-सन्-प्रत्ययौ (९२ सूत्रम्)। पतत्रिणां क्रियाद्वयान्वयाद्दीपकालङ्कारः। सीतामासिषच्चत्तास्ववसायालङ्कारेण सङ्करश्च।



कोशः—'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्'—इत्यमरः।

वाच्यपरिवर्तनम्—आनुवानैः शुभैः पतत्रिभिः विवृत्सन् वत्स्यंसिद्धिः ख्रङ्गमोऽह्लादि ॥ ६७ ॥

कविः सीता-शकुनं संकेतयति—

> वर्तिष्यमाणमात्मानं सीता पत्युरिवाऽन्तिके ।
> उदपश्यत् तदा तथ्यैर् निमित्तैरिष्ट-दर्शनैः ॥ ६८ ॥

अन्वयः—तदा सीता तथ्यैः इष्टदर्शनैः निमित्तैः आत्मानं पत्युः अन्तिके वर्तिष्यमाणमिव उदपश्यत् ।

हिन्दी—उस समय सीताने वस्तुतः अभीष्टके दर्शन करानेवाले शकुनोंके द्वारा अपनेको मानो पतिके पास वर्तमान जाना ।

व्याख्या—तदा तस्मिन् काले, सीता जानकी, तथ्यैः सत्यैः (अविसंवादिभिः), इष्टदर्शनैः अभीष्टार्थद्योतकैः, निमित्तैः शकुनैः ( वामनेत्रस्पन्दनादिभिः ), आत्मानं स्वम्, पत्युः भर्तुः रामस्येत्यर्थः, अन्तिके उपकण्ठे, वर्तिष्यमाणम् स्थास्यन्तम्, इव इवे, उदपश्यत् उत्प्रेक्षितवती । ( पाक्षिके तङि वर्तिष्यमाणम् )। गूढोत्प्रेक्षालङ्कारः ।

व्युत्पत्तिः—इष्टानि दर्शयन्तीति 'कृत्यल्युटो बहुलम् ३।३।११३' इति कर्तरि ल्युट् ।

वाच्यपरिवर्तनम्—सीतया वर्तिष्यमाण इव आत्मा उदद्दश्यत ॥ ६८ ॥

हनुमच्चिन्तामाह—

> निरवर्त्स्यन् न चेद् वार्ता सीताया, वितथैव नः ।
> अकल्प्स्यदुद्यतिः सर्वा हनूमानित्यचिन्तयत् ॥ ६९ ॥

अन्वयः—हनुमान् सीताया वार्ता न निरवर्त्स्यत् चेत्, नः सर्वा उद्यतिः वितथा एव अकल्प्स्यत् इति अचिन्तयत् ।

हिन्दी—हनुमान्‌जीने 'यदि सीताजीकी वार्ता मुझसे सम्पन्न नहीं हो जाती तो हमारा सारा उद्योग व्यर्थ ही हो जायगा' ऐसा सोचा ।

व्याख्या—हनूमान् मारुतिः, सीताया जानक्याः, वार्ता वृत्तान्तः, (मद्द्वारा) न निरवर्त्स्यत् निर्वृतिं नासादयिष्यत्, चेत् यदि, ( तदा ) नः अस्माकम्, उद्यतिः उद्योगः, वृथा मुधा, एव निश्चयेन, अकल्प्स्यत् अभविष्यत्, इति इत्थम्, अचिन्तयत् विचारयत् । सर्वथा सीता द्रष्टव्येति निर्णीतवान् । आत्मनेपदाधिकारसमाप्त्या वृदादिसमासिरप्युक्ता । क्रमशोऽष्टाध्यायी-सूत्रोदाहरणानि प्रशीलनीयानीत्यलम् ।

( ९२।९३ सूत्रे )। वृतु धातोरेव लृङ्। क्लृपू सामर्थ्ये इत्यतोऽपि द्युतादित्वात् लृङ्। चेच्छब्दाधारातिशयोक्तिरलङ्कारः।

कोशः—'सत्यं तथ्यानृतं सम्यगमूनि त्रिषु तद्वति'। 'निमित्तं हेतु-लक्ष्मणोः'। 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः'—इत्यमरः।

वाच्यपरिवर्तनम्—वार्तया निरवर्त्स्यत। वितथया उद्यत्या अकल्प्स्यत—इति हनूमता अचिन्त्यत ॥ ६९ ॥

( इतः 'कारके १।४।२३' इत्यारभ्य 'स्वतन्त्रः कर्ता १।४।५४' इत्यन्तं क्रमेण सूत्रोदाहरणानि। सूत्राणि काशिकानुसारिसूत्रसंख्यकाष्टाध्याय्यामेव क्रमशो द्रष्टव्यानि, नेह लिख्यन्तेऽष्टाध्यायीपाठप्रोत्साहनार्थम् )।

तत्र विशेषकैस्त्रिभिः पद्यैरपादानसंज्ञा समाप्यते—

वृक्षात् वृक्षं परिक्रामन् रावणाद् बिभ्यतीं भृशम्।
शत्रोस् त्राणम-पश्यन्तीम-दृश्यो जनकाऽऽत्मजाम् ॥
तां पराजयमानां स प्रीते रक्ष्यां दशाऽऽननात्।
अन्तर्दधानां रक्षोभ्यो मलिनां म्लान-मूर्धजाम् ॥
रामादधीत-संदेशो वायोर् जातश् च्युत-स्मिताम्।
प्रभवन्तीमिवादित्यादपश्यत् कपि-कुञ्जरः ॥ ७०—७२ ॥

अन्वयः—वृक्षात् वृक्षं परिक्रामन् रामात् अधीतसन्देशः वायोर्जातः अदृश्यः कपिकुञ्जरः—रावणात् भृशं बिभ्यतीं, शत्रोः त्राणम् अपश्यन्तीम्, प्रीतेः पराजयमानां, दशाननाद् रक्ष्यां, रक्षोभ्योऽन्तर्दधानां, मलिनां, म्लानमूर्द्धजाम्, च्युतस्मिताम्, आदित्यात् प्रभवन्तीम् इव तां जनकात्मजाम्—अपश्यत्।

हिन्दी—एक पेड़से दूसरे पेड़ पर आक्रमण करते हुए, रामचन्द्रसे सन्देश लानेवाले, वायुसे उत्पन्न, छिपे हुए, कपियोंमें श्रेष्ठ हनुमान्‌जीने, रावणसे अत्यन्त डरती हुई, शत्रुसे रक्षा नहीं देखती हुई, उसके प्रेमसे मुख मोड़नेवाली, रावणसे रक्षणीय, राक्षसोंसे अन्तर्हित रहनेवाली, स्वयं मलिन और मलिन केशवाली, हास्यरहित मुखवाली, सूर्यसे आविर्भूत होनेके समान उस सीताको देखा।

व्याख्या—वृक्षात् द्रुमाद्, वृक्षं द्रुमम्, परिक्रामन् उत्प्लवमानः, रामात् राघवाद् आख्यातुः, अधीत-सन्देशः गृहीत-समाचारः, वायोर्वातात्, जातः उत्पन्नः, अदृश्यः गुप्तः, कपिकुञ्जरः कीशश्रेष्ठः, सः हनूमान्, रावणाद् दशास्याद्, भृशम् अत्यर्थं, बिभ्यतीं त्रस्यन्तीं, शत्रोः अरेः, त्राणम् रक्षणं, [illegible] अपश्यन्तीम् अवीक्षमाणाम्, (तस्य) प्रीतेः अनुरागात्, पराजयमानाम् विमुखीभवन्तीम्,

दशाननात् रावणाद्, रक्ष्यां रक्षणीयां, रक्षोभ्यः क्रव्याद्भ्यः, अन्तर्दधानाम् रक्षांसि मां मा द्राक्षुरिति निलीयमानाम्, मलिनाम् ( रामवियोगादित्यर्थः) असंस्कृताम्, म्लानमूर्द्धजाम् असंस्कृतशिरोरुहाम् एकवेणीधरामित्यर्थः, च्युतस्मिताम् अस्तमित-हासाम्, आदित्यात् सूर्यात्, प्रभवन्तीम् प्रादुर्भवन्तीम्, इव मन्ये, स्थिताम् तेजः-प्रभावादित्यर्थः, तां प्रसिद्धां, जनकात्मजाम् मैथिलराजनन्दिनीम्, अपश्यत् निरैक्षत । (२४ तः ३१ यावत् सूत्राणि ) । तत्र क्रमः वृक्षाद् २४, रावणाद्, शत्रोः २५, प्रीतेः २६, दशाननात् २७, रक्षोभ्यः २८, रामात् २९, वायोः ३०; आदित्यात् ३१ । परिकरोपमोत्प्रेक्षासङ्करः ।

कृदन्तः—अदृश्यः—'ऋदुपधाच्च० ३।१।११०' इति क्यप् । 'सप्तम्यां जनेर्डः ३।२।९०' इति डे मूर्द्धजाः । म्लाना मूर्द्धजाः यस्या इति समासः । कपिः कुञ्जरः इवेति उपमितसमासः ।

वाच्यपरिवर्तनम्—अधीतसन्देशेन कपिकुञ्जरेण बिभ्यती म्लानमूर्धजा जनकात्मजा अदृश्यत ॥ ७२ ॥

इतोऽष्टसप्ततितमं यावत्सम्प्रदानभेदाः क्रमेण । तत्रैव रावणागममाख्याति—

रोचमानः कु-दृष्टिभ्यो रक्षोभ्यः प्रत्तवान् श्रियम् ।
श्लाघमानः पर-स्त्रीभ्यस् तत्राऽऽगाद् राक्षसाऽधिपः ॥ ७३ ॥

अन्वयः—कुदृष्टिभ्यो रोचमानः, रक्षोभ्यः श्रियं प्रत्तवान्, परस्त्रीभ्यः श्लाघमानो राक्षसाधिपस्तत्रागात् ।

हिन्दी—दुष्ट बुद्धिवालोंको अच्छा लगनेवाला, राक्षसोंको सम्पत्ति देनेवाला तथा दूसरेकी स्त्रियोंको चाहने वाला रावण वहाँ आया ।

व्याख्या—कुदृष्टिभ्यो दुरात्मभ्यः, रोचमानो रुचिकरः, रक्षोभ्यः यातुभ्यः, श्रियं सम्पत्तिम्, प्रत्तवान् समर्पितवान्, परस्त्रीभ्योऽन्यभार्याभ्यः,श्लाघमानः कत्थमानः, राक्षसाधिपः क्षणदाचरेश्वरः, आगात् तत्राशोकोद्याने समागमत् । सम्प्रदान-सूत्राणि पाणिनीयाष्टके तत्रैव प्रथमाध्यायस्य चतुर्थपादे सम्प्रदानाधिकारे द्रष्टव्यानि। ( ३२।३३।३४ सूत्राणि ) । क्रमो यथा—रक्षोभ्यः ३२, कुदृष्टिभ्यः ३३, परस्त्रीभ्यः ३४ । रुच्-श्लाघोः शानच् भ्वाद्योः । समालङ्कारेण समुच्चयस्य सङ्करः ।

कृदन्तः—प्रत्तवान्—डुदाञ् दाने इत्यस्य क्तवतौ 'अच उपसर्गात्तः ७।४।४७' इति तादेशः । श्लाघृ-कत्थने परस्त्रीभ्य आत्मानं प्रशंसन् इत्यर्थः ।

वाच्य०—रोचमानेन श्लाघमानेन राक्षसाधिपेन तत्रागामि ॥ ७३ ॥

रावणस्य कामुकत्वमाह—

अशप्त निह्नवानो ऽसौ सीतायै स्मर-मोहितः ।
धारयन्निव चैतस्यै वसूनि प्रत्यपद्यत ॥ ७४ ॥

अन्वयः—स्मरमोहितः सीतायै निह्नुवानोऽसौ अशप्त । एतस्यै च वसूनि धारयन्निव प्रत्यपद्यत ।

हिन्दी—कामदेवसे पीडित अपने स्वभावको सीताके लिये छिपाये हुए उसने शपथ खायी और उसके लिये धनके कर्जदार बने हुए की तरह सर्वस्व समर्पण करनेको कहा ।

व्याख्या—स्मरमोहितः कामपीडितः, सीतायै जानक्यै, निह्नुवानः अपलपन्, असौ रावणः, अशप्त शपथमकार्षीत् । च पुनः, एतस्यै पुरः स्थितायै सीतायै, वसूनि द्रव्याणि, धारयन् गृह्णन्, अधमर्णः इव सदृक् इत्यर्थः, प्रत्यपद्यत स्वीचकार। सर्वस्वं दातुं प्रतिज्ञातवानित्यर्थः । (३४।३५ सूत्रे) । सीतायै ३४, एतस्यै ३५ । उत्प्रेक्षया समुच्चयस्य सङ्करः ।

कोशः—'अपलापस्तु निह्नवः' । 'रिक्थमृक्थं धनं वसु'—इत्यमरः ।

वाच्य०—स्मरमोहितेन निह्नवानेन अशापि । धारयता वसूनि प्रत्यपद्यन्त।।७४।।

तस्यैव चाटुकारितां वर्णयति—

तस्यै स्पृहयमाणो ऽसौ बहु प्रियमभाषत ।
सानुनीतिश् च सीतायै ना ऽक्रुध्यन् नाप्यसूयत ।। ७५ ।।

अन्वयः—तस्यै सीतायै स्पृहयमाणः सानुनीतिश्च असौ बहु प्रियम् अभाषत, न अक्रुध्यत्, नापि असूयत ।

हिन्दी—सीताजीको खूब चाहने वाला, अनुनय करनेवाला वह रावण बहुत प्रिय बोल रहा था । वह न क्रोध करता था और न डाह ही रखता था ।

व्याख्या—तस्यै पूर्वोक्तायै,सीतायै जानक्यै, स्पृहयमाणः तामभीप्सन्, सानुनीतिरनुनययुक्तो ऽसो रावणः, बहु अधिकं, प्रियं हृद्यम्, अभाषत अब्रवीत् । न नहि, अक्रुध्यत् अकुप्यत् । नापि नैव, असूयाञ्चकार । (३६।३७ सूत्रे ) । तस्यै ३६, सीतायै ३७ । एकस्यानेकक्रियान्वयाद्दीपकालङ्कारः ।

वाच्य०—स्पृहयमाणेन सानुनीतिनाऽमुनाऽभाष्यत, नाक्रुध्यत ।। ७५ ।।

तथैव पुनर्वदति रावणः—

संक्रुध्यसि मृषा किं त्वं दिदृक्षुं मां मृगेक्षणे ।
ईक्षितव्य पर-स्त्रीभ्यः स्व-धर्मो रक्षसामयम्॥ ७६ ॥

अन्वयः—हे मृगेक्षणे ! त्वम् दिदृक्षुं मां मृषा किं संक्रुध्यसि, परस्त्रीभ्यः ईक्षि-
तम् रक्षसाम् अयम् धर्मः ।

हिन्दी—हे मृगनयने सीते ! तुम्हें देखने को चाहनेवाले मुझपर व्यर्थ क्यों क्रोध
करती हो ? दूसरेकी स्त्रियोंको देखना तो राक्षसोंका यह धर्म ही है ।

व्याख्या—हे मृगेक्षणे हरिणलोचने ! त्वम् मे पुरोगा, दिदृक्षुम् आलुलोकिषुम्
रावणम्, मृषा व्यर्थं, संक्रुध्यसि संकुप्यसि, परस्त्रीभ्योऽन्यभार्य्याभ्यः, ईक्षितव्यम्
शुभप्रश्ने तद्विलोकन-व्यापारः, रक्षसां क्रव्यादानाम्, अयम् एषः, स्वधर्मः
कर्तव्यम्, जातिधर्म इत्यर्थः । विधेयप्राधान्यात् पुंस्त्वम् । तथाहि वाल्मीकीये-
धर्मो रक्षसां भीरु सर्वथैव न संशयः । गमनं वा परस्त्रीणां हरणं सम्प्रमथ्य
(सुन्दर २०।५) । (३८।३९ सूत्रे) । दिदृक्षुम् ३८, परस्त्रीभ्यः ३९ !
क्रुध्यसि मृगाक्षी किम् प्रद्रुह्यसि कथं च माम्—इति पाठे तूभयोरुदाहरणे
नाम् क्रुधद्रुहोर्धात्वोरिति । उपमा समेन सङ्गता ।

कोशः—'विशेषास्त्वङ्गना भीरु. कामिनी वामलोचना—इत्यमरः ।'

वाच्य०—दिदृक्षुरहम् त्वया संक्रुध्ये । अनेन धर्मेण भूयते ॥ ७६ ॥'

पुनरपि कथयत्येव—

शृण्वद्भ्यः प्रतिशृण्वन्ति मध्यमा भीरु नोत्तमाः ।
गृणद्भ्यो ऽनुगृणन्त्यन्ये ऽकृताऽर्था नैव मद्-विधाः ॥ ७७ ॥

अन्वयः—हे भीरु ! अन्ये अकृतार्था मध्यमाः शृण्वद्भ्यः प्रतिशृण्वन्ति,
द्भ्यः अनुगृणन्ति । (कृतार्थाः) मद्विधा न एव ।

हिन्दी—हे भीरु ! वे दूसरे मध्यम दर्जेके अकृतार्थ राजा हैं जो (अधीनस्थ)
मन्त्रीओंके उपदेशको सुनते हैं और स्तुति करनेवालोंको धनादि देते हैं । किन्तु
मेरे सदृश कृतार्थ उत्तम राजा ऐसा नहीं करते (वे तो यों ही किसीकी सुनते
नहीं और अपनी इच्छासे धन वितरण करते हैं) ।

व्याख्या—हे भीरु त्रस्नो ! (संज्ञापूर्वकविधेरनित्यत्वान्न गुणः, दीर्घस्य ह्रस्वो
अन्ये मद्भिन्नाः, अकृतार्थाः अकृतकृत्याः, मध्यमाः अनुत्तमाः स्वामिनः,
द्भ्यः श्रुतशालिभ्यः, इदं कार्यमिदमकार्यमित्युपदिशद्भ्यः, प्रतिशृण्वन्ति
कुर्वन्ति । तथैव कुर्म इति । (तथा) गृणद्भ्यः स्तावकेभ्योऽनुगृणन्ति
प्रसूचकालापैः प्रोत्साहयन्ति । मद्विधाः मत्सदृशाः (कृतार्थाः), उत्तमाः
स्वास्तु, नैवं कुर्वन्ति । ते तु स्वयं कार्यज्ञाः,तथा स्तुतिं विनैव धनदा इत्यत्रम् ।
(४०, ४१ सूत्रद्वये) । प्रार्थनमेव पूर्वक्रिया गम्या, यस्याः कर्ता शृण्व-

च्छब्दः । स्तुतिकरणमेव पूर्वक्रिया गम्या, तस्याः कर्ता गृणच्छब्दः । शृण्वद्भ्यः ४०, गृणद्भ्यः ४१ । अन्योऽन्यालङ्कारः ।

कोशः—'अङ्गीकाराभ्युपगमप्रतिश्रव-समाधयः' इत्यमरः ।

भीरुकोशः पूर्वस्मिन् पद्ये ।

वाच्य०—अन्यैर्मध्यमैः प्रतिश्रूयते, अवगीर्यते, न मद्विधैः ॥ ७७ ॥

रावणस्य दौर्मनस्यमाख्याति—

> इच्छ स्नेहेन दीव्यन्ती विषयान् भुवनेश्वरम् ।
> संभोगाय परिक्रीतः कर्तास्मि तव ना ऽप्रियम् ॥ ७८ ॥

अन्वयः—विषयान् दीव्यन्ती ( त्वम् ) स्नेहेन भुवनेश्वरम् ( माम् ) इच्छ। संभोगाय परिक्रीतः ( अहम् ) तव अप्रियम् न कर्तास्मि ।

हिन्दी—हे सीते ! मालाचन्दनादि विषय-सुखोंसे क्रीड़ा करती हुई तुम प्रेम द्वारा मुझ भुवनेश्वरको स्वीकारो । सम्भोगार्थं दास-रूपमें खरीद लिया गया मैं कभी भी तुम्हारा अप्रिय नहीं करूँगा ।

व्याख्या—विषयान् इन्द्रियार्थान् स्रक्चन्दनादीन्, दीव्यन्ती क्रीडन्ती (त्वम्), स्नेहेन प्रेम्णा, भुवनेश्वरं लोकाधिपतिम् ( माम् ), इच्छ स्वीकुरु । सम्भोगाय विपयोपभोगेन, परिक्रीतः नियतकालं त्वया सेवार्थं भृत्यत्वेन स्वीकृतः (अहम्), तव भवत्याः (सीतायाः), अप्रियम् अनभीष्टम्, न नैव, कर्तास्मि आचरितास्मि । ( अत्रैव करणोदाहरणम् ४२ तः ४४ यावत् ) । स्नेहेन ४२, विषयान् ४३, संभोगाय ४४ । परिकरान्योन्यालङ्कारसङ्करः ।

वाच्य०—दीव्यन्त्या भुवनेश्वरोऽहम् इष्यै । परिक्रीतेन अप्रियं न कारिता ।७८।

सम्प्रत्यधिकरणोदाहृत्या रावणकृतं सीतानुनयमाह—

> आस्स्व साकं मया सौधे, माऽधिष्ठा निर्-जनं वनम् ।
> माऽधिवात्सीर् भुवं, शय्यामधिशेष्व स्मरोत्सुका ॥ ७९ ॥

अन्वयः—( त्वम् ) मया साकं सौधे आस्स्व, निर्जनं वनं मा धिष्ठाः । भुवम् माऽधिवात्सीः । स्मरोत्सुका ( सती ) शय्याम् अधिशेष्व ।

हिन्दी—हे सीते ! तुम मेरे साथ महलोंमें रहो । निर्जन वनमें मत रहो । जमीन पर मत बैठो । रमणार्थिनी होकर शय्यापर सोओ ।

व्याख्या-(हे सीते, त्वम्) मया रावणेन, साकम् सार्धम्, सौधे प्रासादे, आस्स्व उपविश । निर्जनं विविक्तं, वनम् अरण्यम्, मा नहि, अधिष्ठाः तिष्ठ । भुवम् भूमिम्, मा नहि, अधिवात्सीः अध्यस्थाः । स्मरोत्सुका कामार्थिनी सती सुरता-

[श]क्तेति यावत्, शय्यां पर्य्यङ्कम्, अधिशेष्व अधिशयीथाः। ( अधिकरणापवादकं [क]र्मकारकम् ) ( ४५।४६।४८ सूत्राणि ) रोधे ४५, वनम्, शय्याम् ४६, [भ]वम् ४८। सहोक्तिसमालङ्कारसङ्करः।

कोशः—'कदाचिज्जातु सार्धं तु साकं सत्रा समं सह'—इत्यमरः।

वाच्यपरिवर्तनम्—आस्यताम्। भाधिष्ठायि। भूः माधिवासि। स्मरोत्सुकया [श]य्या अधिशय्यताम् ॥ ७९ ॥

पुनः तस्यैव कथनमाचष्टे—

अभिन्यविक्षथास् त्वं मे यथैवाऽव्याहता मनः।
तवाऽप्यध्यावसन्त मां मा रौत्सीर् हृदयं तथा ॥ ८० ॥

अन्वयः—हे सीते ! यथा अव्याहता एव त्वम् मे मनः अभिन्यविक्षथाः, [त]था तव अपि हृदयम् अध्यावसन्तम् माम् मा रौत्सीः।

हिन्दी—हे सीते ! जैसे बेरोक टोक ही तुम मेरे मन पर अभिनिवेश कर [च]ुकीं, वैसे ही तुम्हारे हृदय पर कब्जा करने हेतु मुझे मत रोको।

व्याख्या—( हे सीते ! ) यथा येन प्रकारेण, अव्याहता अनिवारिता, एव [नि]श्चयेन, त्वम् भवती, मे रावणस्य, मनः चेतः, अभिन्यविक्षथाः अभिनिविष्टा- [सि]। तथा तद्वत्, तव भवत्याः, हृदयं मानसम्, अध्यावसन्तम् अधितिष्ठन्तं, [मा]म् रावणम्, मा रौत्सीः नहि निरोधय। सर्वत्रैवाधिकरणापवादकं कर्मकारकम्। [४७]-४८ सूत्रे। मनः ४७, हृदयम् ४८। उपमयाऽन्योन्यसङ्करः।

तिङन्तः—'नेर्विशः १।३।१७' इति तङ्। 'शल इगुपधाद० ३।१।४५' [इ]ति क्सः।

वाच्य०—त्वया अभिन्यवेशि। अध्यावसन् अहम् मा रुत्सि ॥ ८० ॥

कर्मोदाहरणानि दित्सू रावणानुनयमुपसंहरति—

माऽवमंस्था नमस्यन्तम-कार्य-ज्ञे ! जगत्-पतिम्।
संदृष्टे मयि काकुत्स्थम-धन्यं कामयेत का ॥ ८१ ॥

अन्वयः—अयि अकार्यज्ञे ! नमस्यन्तं जगत्पतिं मा अवमंस्थाः। संदृष्टे [मयि] का अधन्यं काकुत्स्थं कामयेत ?

हिन्दी—अयि कर्तव्यज्ञान-शून्य-सीते ! नमस्कार करते हुए मेरे जैसे [जग]त्पति ( रावण ) का अपमान मत कर। मुझको देख जाने पर कौन-सी स्त्री [क]ा अभागे राम को चाहेगी ?



व्याख्या—अयि अकार्यज्ञे कर्तव्य-ज्ञान-शून्ये, नमस्यन्तं प्रणमन्तम्, जगत्पति

लोकनाथं, मा अवमंस्था नहि अवधीरय। संदृष्टे समीक्षिते, मयि प्रभौ, का अज्ञाता स्त्री, अधन्यं भाग्यहीनं, काकुत्स्थं राघवं, कामयेत वाञ्छेत्? न कापीति काकुः। (४९।५० सूत्रे)। जगत्पतिम् ४९, काकुत्स्थम् ५०। परिकरालङ्कारः।

कृदन्तः—नमः करोतीत्यर्थे 'नमोवरीवश्चित्रङः क्यच् ३।१।१९' इति क्यचि नमस्य धातोः शतरि रूपम्। प्रधानकर्मतया द्वितीया।

तद्धितः—धनगणं लब्धेति विगृह्य 'धनगणं लब्धा ४।४।८४' इति यति धन्यो न भवतीत्यधन्यः, तम्। तथायुक्तत्वाद् अनीप्सितत्वात् कर्मत्वम्। कर्मसूत्राणि तु अष्टाध्याय्यां दृश्यानीति नेह लिख्यन्ते।

वाच्यपरिवर्तनम्—त्वया जगत्पतिः नमस्यन् अहं माऽवमंसि। कयाऽधन्यः काकुत्स्थः काम्येत ॥ ८१ ॥

अकथित-ण्यन्त-कर्मोदाहरणेहया तथैवाख्याति—

यः पयो दोग्धि पाषाणं स रामाद् भूतिमाप्नुयात्।
रावणं गमय प्रीतिं बोधयन्तं हिताऽहितम् ॥ ८२ ॥

अन्वयः—य पाषाणं पयः दोग्धि स रामात् भूतिम् आप्नुयात्। (भवतीम्) हिताहितं बोधयन्त रावणं प्रीतिं गमय।

हिन्दी—जो पत्थरसे दूध दुहता है, वही रामसे सम्पत्ति पावे। देखो, तुम्हारा हित-अहित बतानेवाले मुझे रावणको प्रसन्न कर लो।

व्याख्या—यः अज्ञातो जनः, पाषाणं प्रस्तरं, पयः क्षीरं, दोग्धि निःसारयति स जनः, रामात् राघवात्, भूतिम् ऐश्वर्यं, प्राप्नुयात् लभेत। ( भवतीम् ) हिताहितम् पथ्यापथ्यम्, बोधयन्तं ज्ञापयन्तं, रावणं लोक-प्रसिद्धं, प्रीतिं प्रणयं, गमय प्रापय। 'निगरणचलनार्थेभ्यः १।३।८७' ण्यन्ताद् गमेः परस्मैपदम्। अत्रोत्तरवाक्यार्थे पूर्ववाक्यार्थारोपेणौपम्यावगते वाक्यार्थवृत्तिरसम्बन्धो निदर्शनालङ्कारः इति केचित्। इह 'रावणं' 'भवतीम्' इत्युभयमपि अण्यन्तकर्तृत्वादिह कर्म। ( ५१।५२ सूत्रे )। पाषाणम् ५१, रावणम् ५२। विषमालङ्कारः।

कोशः—'विभूतिर्भूतिरैश्वर्यम्'।

वाच्यपरिवर्तनम्—येन पाषाणो दुह्यते, तेन भूतिः प्राप्येत। बोधयन् रावणः प्रीतिं गम्यताम् ॥ ८२ ॥

प्रलोभयन् रावणः प्राह—

प्रीतो ऽहं भोजयिष्यामि भवतीं भुवनत्रयम्।
किं विलापयसेऽत्यर्थं पार्श्वे शायय रावणम् ॥ ८३ ॥

अन्वयः—प्रीतोऽहम् भवतीम् भुवनत्रयम् भोजयिष्यामि। अत्यर्थं किम् विलापयसे। पार्श्वे रावणं शायय।

हिन्दी—प्रसन्न हुआ मैं आपको तीनों लोकोंके सुख-भोग कराऊँगा। बहुत अपने विषयमें मुझसे क्यों बोलवाती है? पासमें रावणको सुला लो।

व्याख्या—हे सीते, प्रीतः प्रसन्नः, अहम् रावणः, भवतीम् सीताम्, भुवनत्रयं लोकत्रयम् तत्समुत्थं भोग्यम् ( इति लक्षणया बोध्यम् ), भोजयिष्यामि अभ्यवहारयिष्यामि। अत्यर्थम् अधिकं, किम् किमर्थम्, विलापयसे विविधं भाषयसे आत्मानमिति। शेषः 'णिचश्च १।३।७४' इति कर्त्रभिप्राये तङ्। पार्श्वे स्वान्तिके, रावणं मां, शायय स्वापय। पूर्वत्र भोजयिष्यामि निगरणार्थे परस्मैपदं, परत्र शायय अणावकर्मकत्वात् परस्मैपदम्। ( ५२ सूत्रम् कर्मसंज्ञायाम् )। परिवृत्तिरलङ्कारः, भोजनशयनयोः विनिमयात्।

वाच्यपरिवर्तनम्—मया प्रीतेन भवती भोजयिष्यते। आत्मा विलाप्यते। रावणः शय्यताम् ॥ ८३ ॥

पुनरपि स वदति—

आज्ञां कारय रक्षोभिर् मां प्रियाण्युपहारय।
कः शक्रेण कृतं नेच्छेदधिमूर्धानमञ्जलिम् ॥ ८४ ॥

अन्वयः—त्वम् रक्षोभिराज्ञां कारय। मां प्रियाणि उपहारय। कः शक्रेण अधिमूर्द्धानं कृतम् अञ्जलिम् न इच्छेत्?

हिन्दी—हे सीते! तुम राक्षसोंसे अपनी आज्ञाका पालन कराओ। मुझसे अपनी प्रिय वस्तुओंको मँगाओ। देवराज द्वारा अपने लिये की गयी शीर्षाञ्जलिको कौन नहीं चाहेगा?

व्याख्या—( हे सीते! ) त्वम् रक्षोभिर्यातुभिराज्ञां स्वादेशं, कारय सम्पादय। मां रावणं, प्रियाणि स्वप्रियवस्तूनि, उपहारय उपनायय। कोऽज्ञातो जनः, शक्रेण इन्द्रेण, अधिमूर्द्धानं शिरःस्थापितम्, अञ्जलिम् हस्तसम्पुटम्, न नैव, इच्छेत् वाञ्छेत्। सर्वोऽपि इच्छेदिति काकुः। अत्र कः इति स्वतन्त्रः कर्ता। कारय हारयेत्यत्र त्वमिति प्रयोजककर्ता। रक्षोभिरिति मामिति हृक्रोरिति ५३ सूत्रस्योदाहरणम्। ( ५३।५४।५५ सूत्राणि )। सीताया अनेकक्रियान्वयाद्दीपकेनार्थापत्तिसङ्करः।

( इति कारकाधिकारः समाप्तः। ततोऽग्रेतनानि सूत्राणि प्रकीर्णे गतानि। इतः कर्मप्रवचनीयाधिकारश्चयोनवतितम-पद्यान्तम् )।

**समासः**—अधिगतो मूर्द्धानम् इति अधिमूर्द्धानम् । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया २।२।१८ वा०' इति समासः ?

**वाच्यपरिवर्तनम्**—त्वया आज्ञा कार्य्यताम् । अहम् उपहार्यै । केन कृतः अधिमूर्द्धा अञ्जलिः न इष्येत ।

( कर्मप्रवचनीयमधिकृत्य क्रुद्धायाः सीतायाः प्रत्युत्तरमेव त्रयोनवतितम-पद्यान्तमाह । तत्राष्टाध्यायी-पुस्तके प्रथमाध्यायस्य चतुर्थपादीय-सूत्राणि द्रष्टव्यानीति[1] त्र्यशीतितमसूत्रादष्टानवतितसूत्रावधि क्रमशः कर्मप्रवचीयसंज्ञासूत्राणि नेह लिख्यन्ते तदध्यापनधिया ) ॥ ८४ ॥

सीता प्रत्युत्तरयति तम्—

> वचनं रक्षसां पत्युरनुक्रुद्धा पति-प्रिया ।
> पापाऽनुवसितं सीता रावणं प्राब्रवीद् वचः ॥ ८५ ॥

**अन्वयः**—रक्षसां पत्युः वचनम् अनुक्रुद्धा पतिप्रिया सीता पापानुवसितम् रावणं वचः प्राब्रवीत् ।

**हिन्दी**—राक्षसोंके स्वामीके वचनके वाद क्रुद्ध एवं प्रियपति ( जिसको पति प्रिय है ) सीताजी पापपर उतारू रावणसे बोलीं ।

**व्याख्या**—रक्षसां यातुधानानां, पत्युः स्वामिनः, वचनं वाचम्, अनु लक्ष्यीकृत्य पश्चात् क्रुद्धा कुपिता, पतिप्रिया स्वामिप्राणा, सीता जानकी, पापानुवसितम् दुष्कृतसम्बन्धम्, रावणं दशास्यं, वचः वाचम्, अब्रवीत् व्याहरत् । अत्र प्रथमोऽनु शब्दो लक्षणे । लक्षणमिह हेतुः । द्वितीयोऽनुस्तृतीयार्थे । ( ८४।८५ ) सूत्रे । वचनम् ८४, पापानुवसितम् ८५ इति क्रमः । परिकरालङ्कारः ।

**समासः**—पतिः प्रियो यस्याः सा । पापम् अनुवसितः इत्यत्र द्वितीयेति योगविभागात्समासः । 'कर्मप्रवचनीययुक्ते द्वितीया २।३।८' इति वचनमित्यत्र द्वितीया ।

**कृदन्तः**—अवपूर्वात् षिञ् बन्धने इत्यतः क्तः । ततो भागुरिमतेनाकारलोपे वसित इति ।

**वाच्य०**—क्रुद्धया पतिप्रियया सीतया पापानुवसितो रावणः प्रोच्यत ॥८५।

( १ ) अष्टाध्यायीसूत्राणां निश्चिता संख्या तु चौखम्बामुद्रितायां पञ्चपाठ्या-मष्टाध्याय्यामेव । सर्वदैव काशिकाष्टाध्यायी ग्राह्या, न तु जिज्ञासुमुद्रापिता तत्र महान् संख्याह्रासोऽस्ति ।

रावणस्य दुष्कृत्यानि वर्णयन्ती सीता ऽह—

'न त्वं पापाऽनु रामं चेदुप शूरेषु वा, ततः।
अपवाह्य च्छलाद् वीरौ किमर्थं मामिहाऽऽहरः' ॥ ८६ ॥

अन्वयः—हे पाप ! त्वं रामम् अनु न चेत्, शूरेषु वा उप चेत्, ततः छलात् वीरौ अपवाह्य किमर्थं माम् इह आहरः ?

हिन्दी—अरे पापी तू यदि रामसे हीन नहीं है और वीरोंमें भी यदि श्रेष्ठ तो उन बहादुरों को छलसे बहकाकर क्यों मुझे यहाँ लाया ?

व्याख्या—अरे पाप दुष्कृतकारिन् ! त्वं रावणः, रामं राघवम्, अनु हीनः, चेत् यदि नैवासि। वा अथवा, शूरेषु वीरेषु, उप अधिकः, चेत् यदि. ततः हि, वीरौ शूरौ रामलक्ष्मणौ, छलात् स्वर्णमृगच्छद्मना, अपवाह्य वञ्चयित्वा, किमर्थम् कथम्, माम् सीताम्, इह लङ्कायाम्, आहरः आनीतवान्। 'भवाननु' इति पाठेऽपि तादृगेवार्थः। (८६।८७।८८ सूत्राणि) रामम् ८६, शूरेषु ८७, छलात् ८८ इति क्रमः। अनुमानालङ्कारः।

कोशः—'प्रसभं तु बलात्कारो हठोऽथ स्खलितं छलम्'—इत्यमरः।
'छलं छद्मस्खलितयोः—इति हैमः।

वाच्यपरिवर्तनम्—त्वया कथम् अहम् अह्रिये ॥ ८६ ॥

पुनरपि तस्य निन्दां करोति—

उप शूरं न ते वृत्तं कथं रात्रिञ्चराऽधम।
यत् संप्रत्यपलोकेभ्यो लङ्कायां वसतिर् भयात् ॥ ८७ ॥

अन्वयः—हे रात्रिञ्चराधम ! ते वृत्तं कथं न शूरम् उप, यत् भयात् सम्प्रति लोकेभ्यः अप लङ्कायां (तव) वसतिः। अस्तीति शेषः।

हिन्दी—हे राक्षसोंमें अधम रावण ! तेरा बर्ताव वीरोंसे हीन क्यों नहीं है ? जो कि डरसे इस समय जनलोक छोड़कर तेरा निवास लङ्कामें है ?

व्याख्या—हे रात्रिञ्चराधम राक्षसापसद ! ते तव, वृत्तं चरित्रं, कथम् किमर्थं, न नहि, शूरम् वीरम्, उप हीनम् ? यत् यस्मात्कारणात्, भयात् भीतेः, सम्प्रति अधुना, लोकेभ्यः जनेभ्यः, अप लोकान् वर्जयित्वा, लङ्कायाम् जलस्थल-मार्गदूरे (स्वपुर्यां), वसतिर्निवासः, अस्तीति शेषः। दुर्गबलजीवी त्वं न भुज-बलजीवीति शूरव्यवहारबाह्यः। (८७।८८ सूत्रे) शूरम् ८७, अपलोकेभ्यः ८८ इति क्रमः। अनुमानालङ्कारः, लङ्कावसत्योपशूरत्वानुमानात्।

कारकः—वर्जनार्थे कर्मप्रवचनीयत्वेऽप्यस्य 'पञ्चम्यपाङ्परिभिः २।३।१०' इत्यपवादपञ्चमी लोकेभ्य इत्यत्र ।

कृदन्तः—'वहिवस्यर्तिभ्यश्चित् ५०९' इत्यौणादिकोऽतिः वसतिः ।

वाच्यपरिवर्तनम्—वृत्तेन वसत्या च भूयते ॥ ८७ ॥

सीताया आक्रोशं दर्शयति कविः—

आ राम-दर्शनात् पाप ! विद्योतस्व स्त्रियः प्रति ।
सद्-वृत्ताननु दुर्-वृत्तः परि-स्त्रीं जात-मन्मथः ॥ ८८ ॥

अन्वयः—अरे पाप ! सद्वृत्तान् अनु दुर्वृत्त परि-स्त्रीं जातमन्मथः आराम-दर्शनात् स्त्रियः प्रति विद्योतस्व ।

हिन्दी—अरे पापी ! साधुओंके साथ बुरा व्यवहार करनेवाला, प्रत्येक स्त्रीके साथ छेड़खानी करनेवाला तू रामके दर्शन तक स्त्रियोंको लक्ष्य करके चमक ले ( उनके दर्शनके बाद तो तुझे मरना ही है ) ।

व्याख्या—अरे पाप अधम ! सद्वृत्तान् साधून्, अनु लक्ष्यीकृत्य, दुर्वृत्तः दुर्व्यवहारः, परि स्त्रीं प्रत्येकस्त्रीं प्रति, जातमन्मथः उत्पन्नकामोद्रेकः ( त्वम् ), आरामदर्शनात् राघवसाक्षात्कारं यावत्, स्त्रियः नारीः, प्रति लक्ष्यीकृत्य ( श्रियम् इति पाठे लक्ष्मीम् ) विद्योतस्व दीप्यस्व ( पश्चात्तु ते मरणं निश्चित-मेव ) । ( ८९।९० सूत्रे ) सूक्ष्मालङ्कारः ।

तद्धितः—हे पाप इति पापमस्ति अस्येति 'अर्श आदिभ्योऽच् ५।२।१२७' इत्यचि हे पापिन्नित्यर्थः । ( आरामदर्शनादिति ८९ । स्त्रियः लक्षणेर्थे । सद्वृत्तान् इत्थंभूताख्यानेऽर्थे । स्त्रीम् वीप्सार्थे ९० इति क्रमः । क्रमेण सूत्रेभ्यः कर्मप्रवच-नीयत्वात् । 'पञ्चम्यपाङ्० २।३।१०' इति पूर्ववत्पञ्चमीति तत्रैव द्रष्टव्यम् ) ।

वाच्यपरिवर्तनम्—दुर्वृत्तेन जातमन्मथेन त्वया विद्योत्यताम् ॥ ८८ ॥

रामस्य प्रभावं कथयति सीता—

अभि द्योतिष्यते रामो भवन्तम-चिरादिह ।
उद्गूर्ण-बाणः संग्रामे यो नारायणतः प्रति ॥ ८९ ॥

अन्वयः—अचिरात् रामो भवन्तम् अभि इह द्योतिष्यते । संग्रामे उद्गूर्ण-बाणो यो नारायणतः प्रति ।

हिन्दी—तुमको लक्ष्य करके फौरन राम चमकेंगे जो संग्राममें बाण उठा लेने पर नारायणके प्रतिनिधि हो जाते हैं ।



व्याख्या—अचिरात् शीघ्रम्, रामो राघवः, भवन्तं त्वाम् अभिलक्ष्यीकृत्य, इह

लङ्कायाम्, द्योतिष्यते असह्यतेजा भविष्यति। संग्रामे रणे, उद्गूर्णबाणः उद्यतेषुः, यो रामः, नारायणतः हरेः, प्रति प्रतिनिधिः, सदृश इत्यर्थः। (अभिर्लक्षणार्थे, प्रतिः प्रतिनिध्यर्थे कर्मप्रवचनीयौ) सूत्रे अष्टाध्याय्यां दृश्ये। (९१।९२ सूत्रे)। भवन्तम् लक्षणेर्थे ९१, नारायणतः ९२ इति क्रमः। सूक्ष्मेन भाविक-सङ्करः।

कारकः—'प्रतिनिधिप्रतिदाने च यस्मात् २।३।११' इति पञ्चमी नारायणात्। ततस्तसिल्।

समासः—उद्गूर्णो बाणो येनेति बहुव्रीहिः। उत्पूर्वस्य गूरी उद्यमने धातोर्निष्ठानत्वे, णत्वे, दीर्घे च उद्गूर्ण इति।

वाच्यपरिवर्तनम्—रामेण द्योतिष्यते। उद्गूर्णबाणेन येन भूयते॥ ८९॥

रावणं भर्त्सयन्नाह सीता—

कुतो ऽधियास्यसि क्रूर! निहतस् तेन पत्रिभिः।
न सूक्तं भवता ऽत्युग्रमतिरामं मदोद्धत!॥ ९०॥

अन्वयः—रे क्रूर! तेन पत्रिभिः निहतः (त्वम्) कुतः अधियास्यसि? रे मदोद्धत! भवता अत्युग्रम् अतिरामम् न सूक्तम्।

हिन्दी—अरे निष्ठुर, उनके द्वारा बाणोंसे मारा गया तू कहाँ जायेगा? अरे मदोद्धत! तूने अत्यन्त उग्र रूपसे रामका अतिक्रमण करके 'अधन्यं कामयेत का' इत्यादि उचित नहीं कहा।

व्याख्या—तेन रामेण, पत्रिभिः बाणैः, निहतः प्रहृतः (त्वम्), कुतः क्व, अधियास्यसि प्राप्स्यसि? (धात्वर्थाऽतिरिक्तार्थानभिधानादनर्थकोऽत्राधिः)। अत्र कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञाबाधात् 'तिङि चोदात्तवति ८।१।७१' इति निघाताभावः। पञ्चमी तु 'प्रश्नाख्यातयोः' इत्युपसंख्यानात्। अरे मदोद्धत उद्दण्ड! भवता त्वया, अत्युग्रम् बहुरौद्रम्, अतिरामम् रामम् अतिक्रम्य, 'संदृष्टे मयि काकुत्स्थमधन्यं कामयेत का' इति न नहि, सूक्तम् शोभनं भणितम्। (अत्र पूजायां सुः), तेन कर्मप्रवचनीयतया 'गतिरनन्तरः ६।२।४२' इति स्वराभावः। (अतिरत्रातिक्रमणे)। (९३।९४।९५ सूत्राणि) अधियास्यसि ९३, सूक्तम् ९४, अतिरामम् ९५ इति क्रमः। परिकरालङ्कारः।

समासः—अत्यर्थम् उग्रं यथा स्यात्तथेति क्रियाविशेषणे 'कुगतिप्रादयः २।२।१७' इति समासः। तथैव सूक्तमित्यत्रापि।

कोशः—'ग्रावाणौ शैलपाषाणौ पत्रिणौ शरपक्षिणौ' इत्यमरः।



वाच्यपरिवर्तनम्—निहतेन त्वयाऽधियास्यते। भवान् सूक्तवान्॥ ९०॥

इतो ऽपेरुदाहरणं पद्यद्वये ( ९६ सूत्रम् )। रामस्यैव पराक्रमं वर्णयति—

परिशेषं न नामा ऽपि स्थापयिष्यति ते विभुः।
अपि स्थाणुं जयेद् रामो भवतो ग्रहणं कियत् ॥ ९१ ॥

अन्वयः—विभुः रामः ते नाम अपि परिशेषं न स्थापयिष्यति। स स्थाणुम् अपि जयेत्। भवतः ग्रहणं कियत् ?

हिन्दी—समर्थ रामचन्द्रजी तुम्हारा नाम भी ( परिशेष ) बचा न रखेंगे। देहकी क्या ? वह शिवको भी जीत लें, तुमको पकड़ लेना तो मामूली है।

व्याख्या—विभुः रामः राघवः, ते तव ( रावणस्येत्यर्थः ), परिशेषं शिष्टं, नाम संज्ञाम्, अपि शरीरं किमुत, न स्थापयिष्यति न अनपहरणं करिष्यति, इति किम्। रामः राघवः, स्थाणुं भवम् (यमाराध्य दृप्तोऽसि) अपि जयेत् पराकुर्यात्। भवतस्तव तुच्छस्य ग्रहणं निग्रहं, कियत् किम्परिमाणम् अकिञ्चित्करमिदम् ( अत्र पूर्वत्र पदार्थपदस्य=अप्रयुज्यमानस्य देहस्य अर्थे पदार्थे, उत्तरत्र सम्भावनायामपेः कर्मप्रवचनीयतयोपसर्गत्वाभावात् 'उपसर्गात्सुनोति ८।३।६४' इति 'स्था' इत्यत्र षत्वं न पूर्वत्र। सम्भावनायां लिङ् परत्र )। अर्थापत्त्यलङ्कारः।

कोशः—'व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः'. इत्यमरः।
'स्थाणु क्लीवे हरे पुमान्' इति कोशान्तरम्।

वाच्यपरिवर्तनम्—विभुना रामेण न स्थापयिष्यते, स्थाणुः जीयेत, रामेण कियता ग्रहणेन भूयते ॥ ९१ ॥

सीता रावणं तर्जयति—

अपि स्तुह्यपि सेधाऽस्मांस् तथ्यमुक्तं नराऽशन !
अपि सिञ्चेः कृशानौ त्वं दर्पं मय्यपि यो ऽभिकः ॥ ९२ ॥

अन्वयः—अरे नराशन ! (त्वम्) अस्मान् अपि स्तुहि, अपि सेध वा। (मया तु) तथ्यम् उक्तम्। यः मयि अपि अभिकः (स) त्वम् कृशानौ अपि दर्पम् सिञ्चेः।

हिन्दी—अरे नरभक्षी राक्षस ! तू हमलोगों की प्रशंसा कर या निन्दा कर। मैंने ठीक-ठीक कह दिया है। जो तू मेरे सम्बन्धमें भी कामचेष्टा करता है तो वह आगमें वीर्यपात करना है।

व्याख्या—अरे नराशन मनुष्याद ! (त्वम्) अस्मान् सीतादीन्, अपि स्तुहि प्रशंस। अपि सेध निगृहाण निन्देत्यर्थः। अन्ववसर्गे कामचारानुज्ञायामपिः। धातूनामनेकार्थत्वात्। ( मया तु ) तथ्यम् सत्यम्, उक्तम् कथितम्। यः पुरोगः, मयि

सीतायाम् अपि, अभिकः कामुकः, स त्वं रावणः, कृशानौ अनले, अपि गर्हायाम्, दर्पम् वीर्य्यम्, सिञ्चेः क्षरेः। अत्र मत्कामुकत्वं कृशान्वधिकरणकवीर्यक्षरण-तुल्यमित्यसम्भवद्वस्तुसम्बन्धो निदर्शनालङ्कारः। अपि स्तुहि अपि सेध इति अन्ववसर्गे कामचारानुज्ञार्थे कर्मप्रवचनीयम्। अपि सिञ्चेः गर्हार्थे कर्मप्रवचनीयम्।

तद्धितः—'अनुकाभिका० ५ २।७४' इति निपातितः।

तिङन्तः—ष्टुञ् स्तुतौ इति आदादिकस्य लोटि 'सेर्ह्यपिच्च ३।४।८७' इति अपित्वेन ङित्वाद् गुणाभावः। अपेरुपसर्गत्वाभावान्न षत्वम् 'अपि स्तुहीत्यादौ'।

कोशः—'आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः'—इत्यमरः।

वाच्य०—वयं स्तूयामहै, सिध्यामहै। येन अभिकेन त्वया दर्पः सिच्येत ॥९२॥

पुनरपि वारयति दुर्व्यापारान्—

> अधिरामे पराक्रान्तमधिकर्ता स ते क्षयम्।
> इत्युक्त्वा मैथिली तूष्णीमासांचक्रे दशाननम् ॥ ९३ ॥

अन्वयः—अधिरामे पराक्रान्तं ( पराक्रमः वर्तते इति शेषः ), स ते क्षयम् अधिकर्त्ता, मैथिली दशाननम् इति उक्त्वा तूष्णीम् आसाञ्चक्रे।

हिन्दी—राम पराक्रमके स्वामी हैं। वह तुम्हारा नाश कर डालेंगे। मैथिली ( सीता ) रावणसे यह कहकर चुप्पी लगा गयी।

व्याख्या—( पराक्रान्तस्य पराक्रमस्य=शौर्यस्य राम ईशिता इत्यर्थे 'अधिरीश्वरे १।४।९७' इति कर्मप्रवचनीयम् ) अधिरामे पराक्रान्तं पराक्रमः शौर्यं वर्तते इति शेषः, यश्चैवं स रामः, ते तव रावणस्येत्यर्थः, क्षयं नाशम्, अधिकर्त्ता करिष्यति। मैथिली सीता, इति एवम्, उक्त्वा व्याहृत्य, तूष्णीम् जोषम्, आसाञ्चक्रे बभूव। ( अत्र ईश्वरार्थेऽधिः ) 'यस्मादधिकम्० २।३।९' इति सप्तमी। अधिकर्तेति 'विभाषया १।४।९८' इति कृञो योगे कर्मप्रवचनीय-तया 'तिङि चोदात्तवति ८।१।७१' इति निघाताभावो द्रष्टव्यः। क्षयमिति कर्मण्येव द्वितीया, न कर्मप्रवचनीयतया। तस्या गत्युपसर्गसंज्ञाबाधने तात्पर्यात्। कर्मप्रवचनीयसंज्ञासमाप्तिः ( ९७।९८ सूत्रे )। क्षयहेतोरुक्तौ काव्यलिङ्गम्।

कृदन्तः—परापूर्वकात् क्रमः 'नपुंसके भावे क्तः ३।३।११४' इति क्तं 'अनु-नासिकस्य० ६।४।१५' इति दीर्घे पराक्रान्तम् पराक्रमः इत्यर्थे।

वाच्यपरिवर्तनम्—पराक्रान्तेन भूयते तेन क्षयः अधिकारिता।

( इतः परम् पाणिनीयाष्टकस्य द्वितीयाध्यायस्थतृतीयपादीय-सूत्राणामनभि-हिताधिकारिणां सर्वेषां क्रमशः उदाहरणानीति तत्रैव पुस्तके चतुर्णवतितमपद्यात्

सर्गान्तम् सर्वपद्यस्थोदाहरण-सूत्राणि द्रष्टव्यानि । नेह मया सूत्रोल्लेखः कृतोऽस्ति तदष्टकाध्यापनधियेत्यलम् ) ॥ ९३ ॥

विषयदृशा रावण प्रत्युत्तर पद्यत्रयेणाह—

ततः खड्गं समुद्यम्य रावणः क्रूर-विग्रहः ।
वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिःश्वसन् ॥ ९४ ॥

अन्वयः—तत क्रुद्धः (अत एव) क्रूरविग्रहः रावणः वैदेहीम् (आत्मानं च) अन्तरा खड्गम् उद्यम्य क्षणं निःश्वसन् ऊचे ।

हिन्दी—सीताजीके बोल चुकनेके बाद क्रुद्ध हुआ अत एव भयानक शरीर वाला रावण, सीता तथा अपने बीचमें तलवार भाँजता हुआ क्षणभर श्वास खींचता हुआ बोला ।

व्याख्या—ततः सीतोक्तेरनन्तरम्, क्रुद्धः कुपितः, ( अत एव ) क्रूरविग्रहो भीषणकायः, रावणो दशास्यः, वैदेहीम् मैथिलीम्, ( आत्मानञ्च ) अन्तरा मध्ये, खड्गम् असिम् ( चन्द्रहासमित्यर्थः ), उद्यम्य उत्क्षिप्य, क्षणं मुहूर्तम्, निःश्वसन् श्वासं विमुञ्चन्, ऊचे जगाद । कर्मणि द्वितीयेत्यादि-सूत्रत्रयस्योदाहरणानि क्रमेण दृश्यानि वैदिकं विहाय । (२, ४, ५ सूत्राणि) । तत्र क्रमः खड्गम् २, वैदेहीम् ४, क्षणम् ५ । सूक्ष्मालङ्कारः मृत्युसूचनात् ।

वाच्यपरिवर्तनम्—निःश्वसता रावणेनोचे ॥ ९४ ॥

पुना रावणः आग्रहं करोति—

चिरेणाऽनुगुणं प्रोक्ता प्रतिपत्ति-पराङ्मुखी ।
न मासे प्रतिपत्तासे मां चेन् मर्तासि मैथिलि ॥ ९५ ॥

अन्वयः—अये मैथिलि चिरेण अनुगुणं प्रोक्ता प्रतिपत्ति-पराङ्मुखी (त्वम्) मासे मां न प्रतिपत्तासे चेन् तदा मर्तासि ।

हिन्दी—हे मैथिलि ! बहुत दिनोंसे मैं तुम्हारे अनुकूल चल रहा हूँ । पर तुम मुझे स्वीकार नहीं कर रही हो । जो हो, अब यदि एक मास के भीतर तुम मुझे वरण नहीं करतीं तो अवश्य मरोगी ।

व्याख्या—अयि मैथिलि सीते ! चिरेण बहुदिवसैः, अनुगुणम् अनुकूलम्, प्रोक्ता व्याहृता (अपि), (मया) प्रतिपत्तिपराङ्मुखी स्वीकृति-विमुखी त्वम् चेत यदि, मासे त्रिंशद्दिनाभ्यन्तरे मां रावणम्, न प्रतिपत्तासे नैवाङ्गीकर्तासि, ( तदा ) ( निश्चितम् ) मर्तासि प्राणान् वियोक्तासि । 'म्रियतेर्लुङ्लिङोश्च १।३।६१' इति नियमात् परस्मैपदम् ।(६-७ सूत्रे)। चिरेण ६। मासे ७। मरणहेतूक्तौ काव्यलिङ्गम् ।

कृदन्तः—दुहादित्वादप्रधाने कर्मणि ब्रूधातोर्निष्ठा। आर्द्धधातुकाधिकारे ो वचिः २।४।५३' वच्यादेशे सम्प्रसारणे उक्तेति।

वाच्यपरिवर्तनम्—प्रोक्तयाऽपि प्रतिपत्ति-पराङ्मुख्या मारिता।

इतोऽष्टमसूत्रतोऽग्रे एकादशावधि कर्मप्रवचनीयोदाहरणस्य पूर्वपद्येषु गतार्थं- ् 'गत्यर्थ० २।३।१२' इत्यत उदाहरणानि द्रष्टव्यानि ॥ ९५ ॥

सीताया अनुनयार्थं राक्षस्यो नियुक्ताः—

> प्रायुङ्क्त राक्षसीर् भीमा मन्दिराय प्रतिव्रजन्।
> भयानि दत्त सीतायै सर्वा यूयं कृते मम ॥ ९६ ॥

अन्वयः—मन्दिराय प्रतिव्रजन् ( रावणः ) 'सर्वा यूयं मम कृते सीतायै भयं ( इति ) भीमा राक्षसीः प्रायुङ्क्त।

हिन्दी—भवनको लौटते हुए रावणने 'सभी तुम लोग मेरे लिये सीताको ओ, धमकाओ, ऐसा कहकर भयानक राक्षसियोंको नियुक्त किया।

व्याख्या—मन्दिराय भवनाय, प्रतिव्रजन् प्रत्यावर्तमानः, रावणो दशास्यः, : सकलाः अपि, यूयम् भवत्यः, मम रावणस्य, कृते कार्याय, सीतायै र्थे, भयं भीतिं, दत्त वितरत, ( इति एवम् ) भीमाः भीषणाः, राक्षसीः चरीः, प्रायुङ्क्त समादिशत्। ( इह मन्दिराय सीतायै इति गत्यर्थकर्मणि ।१२'–१३ इति सूत्रद्वयस्योदाहरणम्। 'कर्मप्रवचनीय-युक्ते २।३।८' इत्यतः यावत् सूत्रचतुष्टयस्योदाहरणानि तु गते कर्मप्रवचनीयाधिकारे समाप्तानि )। क्रियान्वयी दीपकः।

तिङन्तः—प्रायुङ्क्त इति रौधादिकस्य युजिर्योगे लङि, दत्तेति डुदाञ् दाने जौहोत्यादिकस्य लोटि रूपम्। विशेषकार्याणि पूर्वत्र दर्शितानि।

वाच्यपरिवर्तनम्—प्रतिव्रजता रावणेन 'सर्वाभिर्युष्माभिर्भयं दीयताम्'— भीमा राक्षस्यः प्रायुज्यन्त ॥ ९६ ॥

उपदिष्टराक्षसीसमागममाह—

> गते तस्मिन् समाजग्मुर् भयाय प्रति मैथिलीम्।
> राक्षस्यो रावणप्रीत्यै क्रूरं चोचुरलं मुहुः ॥ ९७ ॥

अन्वयः—तस्मिन् गते (सति) राक्षस्यः भयाय मैथिलीं प्रति समाजग्मुः। प्रीत्यै मुहुः अलम् क्रूरम् ऊचुश्च।

हिन्दी—रावणके चले जाने पर राक्षसियाँ भय देनेके लिये सीताके पास और बारम्बार अत्यधिक कठोर बोलने लगीं।



व्याख्या—तस्मिन् रावणे, गते पलायिते ( सति ), ( अत्र 'यस्य च भावेन

२।३।३७' इति सप्तमी ), राक्षस्यः रात्रिचर्यः, भयाय भयं दातुम्, मैथिलीं सीतां, प्रति अभिलक्ष्य ( 'समयानिकषा० २।३।२ वा०' इति द्वितीया ), समाजग्मुः समागतवत्यः ( अत्राङा व्यवहितत्वान्न तङ् 'समो गम्यृच्छि० १।३।२९' इति )। रावण-प्रीत्यै रावणं प्रीणयितुम्, मुहुः पौनःपुन्येन, अलं पर्याप्तम्, क्रूरं कठोरं, यथा स्यात्तथेति क्रियाविशेषणम्, ऊचूः व्याजह्रुः ( १४।१५ सूत्रे )। राक्षसीनां क्रियाद्वयान्वयाद्दीपकः।

कारकः—भयायेति क्रमप्राप्ता 'क्रियार्थोपपदस्य० २।३।१४' इति चतुर्थी। समागमक्रियार्थोपपदस्य ददातेः अप्रयुज्यमानस्य स्थानिनः भयं कर्म। रावण-प्रीत्यै इत्यत्रापि 'तुमर्थाच्च भाववचनात् २।३।१५' इति भाववचने चतुर्थी। 'भाववचनाश्च ३।३।११' इति विहितस्य क्तिनः क्रियार्थम् क्रूरवचनम् इति क्रियायां क्रियार्थायां तुमुना समानार्थत्वात्।

कृदन्तः—प्रीतिरित्यत्र 'स्त्रियां क्तिन् ३।३।९४' इति 'भाववचनाश्च ३।३।११' इति नियमितेर्थे क्तिन्।

वाच्यपरिवर्तनम्—राक्षसीभिः समाजग्मे ऊचे चेति ॥ ९७ ॥

क्रमप्राप्तमुपपदविभक्त्युदाहरणमाह—

रावणाय नमस्कुर्याः स्यात् सीते स्वस्ति ते ध्रुवम्।<br>
अन्यथा प्रातराशाय कुर्याम त्वामलं वयम् ॥ ९८ ॥

अन्वयः—हे सीते ! रावणाय नमस्कुर्याः, ( येन ) ध्रुवं ते स्वस्ति स्यात्; अन्यथा वयं त्वाम् प्रातराशाय अलम् कुर्याम।

हिन्दी—हे मैथिलि ! रावणको प्रणाम करो, ( जिससे ) अवश्य तुम्हारा कल्याण होगा। नहीं तो हम लोग तुमको जलपानके लिये पर्याप्त समझती हैं। अर्थात् भूनकर खा डालेंगी।

व्याख्या—हे सीते जानकि ! रावणाय दशास्यायेति चतुर्थी नमोयोगे, नमस्कुर्याः, नम इति कर्मपदं कुर्याः इति क्रियायाः। अत्र नमस्कुर्या इति पदमादाय बहवष्टीकाकृतो बहुधाऽभ्यधुः, नहि कर्मणा तस्य गतित्वमपगच्छतीत्यपि ज्ञेयम्। तत्र नम इति रावणेन सम्बद्धं नमसा च कुर्या इति क्रिया सम्बद्धा—इत्येवं पदयोजनयैव सर्वं समञ्जसमिति। नात्र नमस्यतीति क्रिया। नापि रावणेन तस्याः सम्बन्ध इत्यलं व्यर्थविवादेन। उपपद-विभक्त्यपेक्षया कारक विभक्तेर्बलीयस्त्वादि-कीर्तनस्यावसर एव नोपतिष्ठते। तथा नमस्कृत्वा नमस्कृत्येत्यादि पाठस्तु अप-पाठ एवेति मया कवेर्मर्मविवरणमेव कृतम्। स हि उपपदविभक्तेरुदाहरणं क्रम-

प्राप्तमुक्तवानिति हि तन्मर्म )। येन ध्रुवं निश्चितं, ते तव, स्वस्ति कल्याणं, स्यात् भवेत्, अन्यथा तदभावे, वयं सर्वा राक्षस्यो मिलित्वा, त्वां भवतीं, प्रातराशाय प्रभाते लघ्वाहाराय, अलम् पर्याप्तं कुर्याम विदधीमहि। रावणाय, ते, प्रातराशायेति त्रयमपि १६ सूत्रस्यैवोदाहृतिः। हेतूक्तौ काव्यलिङ्गम्।

तिङन्तः—नमस्कुर्या इत्यत्र 'साक्षात्प्रभृतीनि च १।४।७४' इति गतिसंज्ञया 'नमस्पुरसोर्गत्योः ८।३।४०' सः। कुर्याम इयत्र 'नित्यं ङितः ३।४।९९' इति सलोपः।

वाच्य०—त्वया नमस्क्रियेत, स्वस्ति भूयेत। अस्माभिरलं त्वं क्रियेथाः। ९८।

तत्र त्रिजटोपस्थाय राक्षसीरेव तर्जयति—

तृणाय मत्वा ताः सर्वा वदन्तीस् त्रिजटाऽवदत्।
आत्मानं हत-दुर्वृत्ताः स्व-मांसैः कुरुताऽशनम्॥ ९९॥

अन्वयः—त्रिजटा वदन्तीः ताः सर्वाः तृणाय मत्वा 'हे दुर्वृत्ताः आत्मानं हत। स्वमांसैः अशनं कुरुत' इति अवदत्।

हिन्दी—त्रिजटा नामकी रावणकी बहन राक्षसी कठोर बोलने वाली उन-राक्षसियोंको तृण समझकर कहने लगी कि अरि दुष्टाओं! अपने आपको मार डालो और मांसोंसे प्रातराश करो।

व्याख्या—त्रिजटा तन्नामा रावणस्वसा, वदन्तीः सीतां प्रति क्रूरमभिदधतीः, ताः पूर्वोक्ताः, राक्षसीः रात्रिचरीः, तृणाय मत्वा तृणमिवानादृत्य 'हे दुर्वृत्ता दुष्टाः, आत्मानं स्वम् कुत्सितम्, हत मारयत, स्वमांसैः निजपिशितैः, अशनम् प्रातराशम्, कुरुत विधत्त' इति अवदत् उवाच। अत्रापि क्रमप्राप्तोपपदविभक्तिरेव। चतुर्थी 'मन्यकर्मण्यनादरे० १७' इति। स्वमांसैरिति क्रमप्राप्ता करणतृतीया (१८ सूत्रे)। असङ्गतिरलङ्कारः, आत्मघातस्वमांसभक्षणासङ्गतेः।

वाच्य०—त्रिजटया औच्यत। आत्मा हन्यताम्। अशनं क्रियताम्॥ ९९॥

त्रिजटा तास्तथ्यं बोधयति—

अद्य सीता मया दृष्टा सूर्यं चन्द्रमसा सह।
स्वप्ने स्पृशन्ती मध्येन तनुः श्यामा सुलोचना॥ १००॥

अन्वयः—अद्य मया स्वप्ने मध्येन तनुः श्यामा सुलोचना सीता चन्द्रमसा सह सूर्यं स्पृशन्ती दृष्टा।

हिन्दी—त्रिजटा कहती है कि आज मैंने स्वप्नमें कटिभागसे प... श्यामा-

स्त्रीके लक्षणवाली, अच्छी नेत्रवाली सीताको चन्द्रमाके साथ सूर्यको ( लक्ष्मणके साथ रामको ) स्पर्श करती हुई देखा है ।

व्याख्या—अद्य व्यतीतायां रात्रौ, मया त्रिजटया, स्वप्ने अर्धनिद्रावस्थायाम्, मध्येन मध्यभागेन कटचेत्यर्थः, तनुः कृशा, श्यामा श्यामालक्षणवती, तथाहि—शीते सुखोष्णस्पर्शाङ्गी ग्रीष्मे या सुखशीतला । तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति गीयते' इति । सुलोचना स्वक्षी, सीता जानकी, चन्द्रमसा शशिना, सह सार्द्धं, सूर्यं मार्तण्डं, स्पृशन्ती आमृशन्ती, दृष्टा अवलोकिता । अत्र रामलक्ष्मणोपलक्षकं सूर्यचन्द्रम् वित्त । ( मयेति कर्तरि तृतीया । मध्येन 'इत्थम्भूतलक्षणे २१', चन्द्रमसेति 'सहयुक्ते०१९' इति तृतीया । सर्वमष्टाध्याय्यां क्रमाद् द्रष्टव्यम् ) 'वोतो गुणवचनात् ४।१।४४' इति ङीषो वैकल्पिकत्वात्तनुः । उदात्तालङ्कारो रामलक्ष्मणोपमेयनिगरणादतिशयोक्त्या सङ्करः ।

वाच्य०—अहं तनुं श्यामां सुलोचनां सीतां स्पृशन्तीं दृष्टवती ।। १०० ।।

त्रिजटातर्जितास्ता विरता जाता इत्याह—

तास् तया तर्जिताः सर्वा मुखैर् भीमा यथाऽऽगतम् ।
ययुः सुषुप्सवस् तल्पं भीमैर् वचन-कर्मभिः ॥ १०१ ॥

अन्वयः—तया तर्जिता मुखैर्भीमा भीमैर्वचनकर्मभिरुपलक्षिताः ताः सर्वाः सुषुप्सवः ( सत्यः ) यथागतं तल्पं ययुः ।

हिन्दी—त्रिजटाकी फटकारसे भयानक मुखवाली भयानक वचन और कर्मवाली वे सभी राक्षसियाँ सोनेकी इच्छासे जैसे आयी थीं, वैसे ही शय्या पर चली गयीं ।

व्याख्या—तया त्रिजटया, तर्जिताः भर्त्सिताः, मुखैरास्यैः, भीमा विकृताः भीषणाः, भीमैः भयदैः, वचनकर्मभिः वाक्यक्रियादिभिः, उपलक्षिताः परिज्ञाताः, ताः सर्वाः सकला अपि राक्षस्यः, सुषुप्सवः शयालवः, यथागतम् आगमनानुसारं, तल्पं शय्यां, ययुः जग्मुः । मुखैरिति विकृताङ्गैः भीमैर्वचनकर्मभिरितीत्थंभूतलक्षणे तृतीया । क्रमशः-सूत्राणि दृश्यानि पाणिनीयाष्टके । ( २०।२१ सूत्रे ) । हेतूक्तौ काव्यलिङ्गम् ।

समासः—यथा यथा आगतास्तथातथा गता इति । 'यथाऽसादृश्ये २।१।७' इति वीप्सायां समासः ।

कोशः—'तल्पशय्याट्टदारेषु'—इत्यमरः ।

'तल्पमट्टे कलत्रे च शयनीये च न द्वयोः' —इति मेदिनी ।



वाच्यपरिवर्तनम्—तर्जिताभिर्भीमाभिः ताभिः तल्पं यये ।। १०१ ।।

सम्प्रति हनुमद्व्यापारं प्रस्तौति युग्मेन—

गतासु तासु मैथिल्या संजानानो ऽनिलाऽऽत्मजः।
आयातेन दशाऽऽस्यस्य संस्थितो ऽन्तर्हितश् चिरम् ॥

ऋणाद् बद्ध इवोन्मुक्तो वियोगेन क्रतु-द्विषः।
हेतोर् बोधस्य मैथिल्याः प्रास्तावीद् राम-संकथाम् ॥ १०२–१०३ ॥

अन्वयः—गतासु तासु राक्षसीषु मैथिल्या सञ्जानानः दशास्यस्य आयातेन अन्तर्हितः चिरम् संस्थितः अनिलात्मजः क्रतुद्विषः वियोगेन ऋणाद् बद्ध इव उन्मुक्तः मैथिल्या बोधस्य हेतोः रामसङ्कथाम् प्रास्तावीत् ।

हिन्दी—उन राक्षसिनियोंके चले जानेपर मैथिली सीताजीको पहचानते हुए रावणके आजानेसे छिपकर बहुत देर तक बैठे हुए हनुमान्जीने यज्ञ-शत्रुके चले जानेसे ऋणबन्धसे बद्ध व्यक्ति जैसे उससे छुटकारा पाजाय वैसे बन्धनमुक्त हो सीताकी जानकारीके लिये रामकी कथा कहनी शुरू की ।

व्याख्या—गतासु यातासु, तासु पूर्वोक्तासु, राक्षसीषु रात्रिञ्चरीषु, मैथिल्या सीतया, सञ्जानानः लब्धपरिचयः, दशास्यस्य रावणस्य, आयातेन आगमनेन, अन्तर्हितः तिरोभूतः, मैथिल्येति कर्मणि तृतीया, संज्ञानार्थत्वात् । आयातेनेति हेतौ तृतीया। चिरं बहुकालं, संस्थितः विलम्बितः, अनिलात्मजः वायुसुतो हनुमान्, क्रतुद्विषः यज्ञशत्रोः, वियोगेन विश्लेषेण, ऋणाद् उत्तमर्णदेयद्रव्याद्, बद्धः तत उन्मुक्तः च्युतपाश इव स्थानान्तरं गतः, मैथिल्याः सीतायाः, बोधस्य ज्ञातस्य, हेतोः कारणात् ( ऋणादिति अकर्तरि ऋणे पञ्चमी, वियोगेनेति अस्त्रियां गुणे पक्षे तृतीया, बोधस्येति हेतुप्रयोगे मैथिल्या इति सम्बन्धे षष्ठी, सूत्राण्यष्टके दृश्यानि ) निमित्तात्, रामकथाम् राघव-चर्चां, प्रास्तावीत् प्रारब्धवान् । ( २२तः २६ यावत् सूत्राणि) । उत्प्रेक्षया निदर्शनादीनां सङ्करः ।

कृत्—आयातेनेति 'नपुंसके भावे क्तः ३।३।११४' इति क्तः । ऋणादिति ऋधातोः क्तः, नत्वं निपातनात् । संजानान इति 'सम्प्रतिभ्यामनाध्याने १।३।४६' इति तङ् ।

वाच्य०—अनिलात्मजेन संस्थितेन उन्मुक्तेन इव रामकथा प्रास्तावि ।१०३।

इतो मैथिली षट्पद्येनैवोत्तरश्लोकावधि वितर्कयति—



तं दृष्ट्वा ऽचिन्तयत् सीता हेतोः कस्यैष रावणः ।
अवरुह्य तरोरारादेति वानर-विग्रहः ॥ १०४ ॥

अन्वयः—सीता तं दृष्ट्वा 'वानरविग्रह एष रावणः तरोः अवरुह्य कस्य हेतोः आरात् ( मत् इति शेषः ) एति' इत्यचिन्तयत् ।

हिन्दी—सीताजी उसको (हनूमान्‌जीको) देखकर वानरका शरीर धारणकर यह रावण पेड़से उतर कर किस कारणसे मेरे पास आरहा है, ऐसा तर्क करने लगीं ।

व्याख्या—सीता जानकी, तम् अज्ञातम्, दृष्ट्वा विलोक्य, वानरविग्रहः कपिकायः, एषः पुरःस्थो रावणः, तरोर्वृक्षात्, अवरुह्य अवतीर्य, कस्य हेतोः केन कारणेन, आरात् समीपम् मत् इति शेषः, एति आगच्छति, इति इत्थम्, अचिन्तयत् अतर्कयत् । ( अत्र कस्य हेतोरिति सर्वनामतया पक्षे षष्ठी । तरोरिति अपादाने पञ्चमी, आरादित्यस्य सामीप्यार्थतया न तद्योगे । दूरार्थे एव पञ्चम्युदाहरणं कवेरभिमतमग्रिमपद्येऽन्यपदोदाहरणप्रदानादित्यलम् ) यदि समीपार्थे ऽपि पञ्चमीति हठ एव तर्हि मत् सीताया आरादित्येवं सम्बन्धः कार्यः, नतु तरोः इति कविमर्म । ( २७।२८ सूत्रे ) । अवरोहागमने कार्यकारणभावादतिशयोक्तिः ।

वाच्यपरिवर्तनम्—सीतयाऽचिन्त्यत, एतेन रावणेनेयते ॥१०४॥

सार्द्धद्वयपद्येन अन्यारादिति उपपदविभक्तेरेवोदाहरणान्याह—

पूर्वस्मादन्य-वद् भाति भावाद् दाशरथिं स्तुवन् ।
ऋते क्रौर्याद् समायातो मां विश्वासयितुं नु किम् ? ॥ १०५ ॥

अन्वयः—भावात् दाशरथिं स्तुवन् पूर्वस्माद् अन्यवद् भाति । क्रौर्याद् ऋते मां विश्वासयितुं समायातो नु किम् ?

हिन्दी—अनुरागसे रामचन्द्रकी प्रशंसा करता हुआ पहलेसे दूसरेके तुल्य मालूम हो रहा है । (अतः) क्रूरता छोड़कर मुझे विश्वास दिलाने आया है क्या ?

व्याख्या—भावात् अनुरागात्, दाशरथिं रामं, स्तुवन् प्रशंसन्, एष पुरोगः रावणः, पूर्वस्मात् पूर्वदृष्टात्, अन्यवत् इतरवद्, भाति प्रकाशते । क्रौर्यात् ऋते क्रूरतां विना; माम् सीतां, विश्वासयितुम् विश्वासं कारयितुं, समायातः समाययौ, नु किम् इति वितर्के ( इहान्यर्तेपदप्रयोगे पञ्चमी ) । ( २९ सूत्रम् ) । अभेदे भेदोपचारादतिशयोक्तेरुत्प्रेक्षया सङ्करः ।

तद्धितः—दशरथस्यापत्यमित्यर्थे 'अत इञ् ४।१।९५' इति इञ् । अन्यवदिति 'तेन तुल्यं क्रिया चेद्वतिः ५।१।११५' इति वतिः ।

वाच्य०—स्तुवता भायते । समायातोऽसि ऋयते नु किम् ? ॥ १०५ ॥

हनूमतो विषये सीताया विकल्पमाह—

इतरो रावणादेष राघवाऽनुचरो यदि।
स-फलानि निमित्तानि प्राक् प्रभातात् ततो मम ॥ १०६ ॥

अन्वयः—एष यदि रावणाद् इतरः राघवानुचरो भवेत् ततः प्रभातात् प्राक् मम निमित्तानि सफलानि।

हिन्दी—यह यदि रावणसे भिन्न रामचन्द्रका ही दूत है, तब तो प्रभात से पहले मुझे जो शकुन ( बाईं आँख फड़काना आदि ) हुए हैं, वे सभी सफल माने जायेंगे।

व्याख्या—एष वानराकारः पुरोदृश्यः, यदि चेद्, रावणाद् दशास्याद्, इतरोऽन्यः, राघवानुचरः रामदूतः, भवेत् स्यात्, ततः तर्हि, मम सीतायाः, प्रभातात् प्राक् विभातात् पूर्वम्, निमित्तानि शकुनानि ( दृष्टानि ) अक्षिस्फुरणादीनि, सफलानि सार्थानि। ( इहेतरप्राक्पदयोगे पञ्चमी ) (२९ सू० )। यदियुक्तातिशयोक्तिः।

वाच्य०—एतेन इतरेण राघवानुचरेण भूयेत। निमित्तैः सफलैः भूयते।१०६।

रामस्यैवायं दूत इति तर्कयति सीता—

उत्तराहि वसन् रामः समुद्राद् रक्षसां पुरम्।
अवैत् लवण-तोयस्य स्थितां दक्षिणतः कथम् ॥ १०७ ॥

अन्वयः—समुद्रात् उत्तराहि वसन् रामः लवणतोयस्य दक्षिणतः स्थितां रक्षसां पुरम् कथम् अवैत्।

हिन्दी—समुद्रसे उत्तर रहते हुए रामचन्द्रजी क्षारसमुद्रसे दक्षिणदिशाकी ओर रहनेवाली राक्षसोंकी नगरीको कैसे जान गये ?

व्याख्या—समुद्रात् सागरात्, उत्तराहि उदग्दिशि, वसन् अधितिष्ठन्, रामः राघवः, लवणतोयस्य क्षाराम्बुनिधेः, दक्षिणतोऽवाग्दिशि, स्थितां विद्यमानां, रक्षसां यातूनां, पुरम् नगरीम्, कथम् केन प्रकारेण, अवैत् अजानात्। समुद्रादिति आहियोगे पञ्चमी। लवणतोयस्येति अतसर्थप्रत्ययेन ( दक्षिणतः ) योगे षष्ठी। अनुमानालङ्कारः।

तद्धितः—'उत्तराच्च ५।३।३७' इति आहि-प्रत्ययः। तद्योगे पञ्चमी। 'दक्षिणोत्तराभ्यामतसुच् ५।३।२८' इति अतसुच्। तदन्तयोगे षष्ठी। (सूत्रं क्रमात् द्रष्टव्यम् २९।३० )।



वाच्यपरिवर्तनम्—वसता रामेण पुरं कथम् अवेदि ॥ १०७ ॥

कथमयं हनूमानत्रागत इति शङ्कते—

दण्डकान् दक्षिणेना ऽहं सरितो ऽद्रीन् वनानि च ।
अतिक्रम्याऽम्बुधिं चैव पुंसामगममाहृता ।। १०८ ।।

अन्वयः—अहम् दण्डकान् दक्षिणेन सरितः अद्रीन् वनानि अम्बुधिम् चैव अतिक्रम्य पुंसाम् अगमम् आहृता ।

हिन्दी—मैं दण्डकारण्यसे दक्षिण तरफ नदियों, पर्वतों, वनोंको तथा समुद्रको भी लाङ्घकर मनुष्योंके अगम्य स्थान पर लाई गई हूँ ।

व्याख्या—अहम् सीता, दण्डकान् दण्डकारण्यभुवः, दक्षिणेन दक्षिणायां दिशि, सरितो नदीः, अद्रीन् नगान्, वनानि काननानि, अम्बुधिम् समुद्रं, चैव अपि, अतिक्रम्य उल्लङ्घ्य, पुंसां मानवानाम्, अगम्यम् अप्राप्यं स्थानम्, आहृता आनीता (अस्मीति शेषः ) । अत्रापि क्रमादेव 'एनपा योगे द्वितीया' सूत्रं तत्रैव द्रष्टव्यम् । 'एनबन्यतरस्याम् ५।३।३५' इत्येनप् । ( ३१ सूत्रम् ) । एकक्रियायामनेककर्मान्वयी दीपकः ।

कृदन्तः—'ग्रहवृदृनिश्चिगमः ३।३।५८' इत्यप् ।
वाच्यपरिवर्तनम्—माम् अहार्षीत् क्रव्यात् ।। १०८ ।।

पुनरपि तथैवाशङ्कते सीता—

पृथङ् नभस्वतश् चण्डात् वैनतेयेन वा विना ।
गन्तुमुत्सहते नेह कश्चित् किमुत वानरः ॥ १०९ ॥

अन्वयः—चण्डात् नभस्वतः पृथक् वा वैनतेयेन विना इह गन्तुम् कश्चिद् ( अपि ) न उत्सहते वानरः किमुत ।

हिन्दी—प्रचण्ड वायुको छोड़कर अथवा गरुड़के सिवाय यहाँ पर आनेमें कोई भी समर्थ नहीं है, तब वानरकी क्या बात कहूँ ?

व्याख्या—चण्डात् प्रबलात्, नभस्वतः वायोः, वा अथवा, वैनतेयेन विनतात्मजेन गरुडेनेत्यर्थः, विना पृथक्, इह लङ्कायाम्, गन्तुम् आयातुं, कश्चित् कोऽपि, न नैव, उत्सहते उद्युङ्क्ते । वानरः कपिः, किमुत कथं समर्थः स्यात् ? इति काकुः । ( अत्र पृथग्-विना-योगे पाक्षिक्यौ पञ्चमी–तृतीये ) । (३२ सूत्रम्) । विनोक्तिरलङ्कारः ।

तद्धितः—'स्त्रीभ्यो ढक् ४।१।१२०' इति ढकि वैनतेयेन ।
कोशः—'गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः'—इत्यमरः ।
वाच्यपरिवर्तनम्—केनापि नोत्सह्यते । वानरेण किमुत ।। १०९ ।।

सम्प्रति कपिसमागममाख्याति—

इति चिन्ता-वतीं कृच्छ्रात् समासाद्य कपि-द्विपः ।
मुक्तां स्तोकेन रक्षोभिः प्रोचे—'ऽहं राम-किङ्करः' ॥ ११० ॥

अन्वयः—कपिद्विप इति चिन्तावतीं रक्षोभिः स्तोकेन मुक्तां ( सीताम् ) कृच्छ्रात्समासाद्य 'अहं रामकिङ्करः' इति प्रोचे ।

हिन्दी—कपियोंमें श्रेष्ठ हनुमान्‌जी इस तरह चिन्ता करनेवाली राक्षसियोंसे थोड़ी देरके लिए छुटकारा पाई हुई सीताको बहुत मुश्किलसे पाकर 'मैं रामका दूत हूँ' ऐसा बोले ।

व्याख्या—कपिद्विपः कीशश्रेष्ठः ( हनूमान् ), इति इत्थम्, चिन्तावतीं तर्कयन्तीं, रक्षोभिर्यातुभिः, स्तोकेन लेशेन, मुक्तां त्यक्तां (सीताम्), कृच्छ्रात् महता प्रयासेन, समासाद्य प्राप्य, 'अहं ते पुरोगः रामकिङ्करः राघवानुचरः तदीयदूत इत्यर्थः' इति एवम्, प्रोचे जगाद । ( ३३ सूत्रम् ) । परिकराऽलङ्कारः ।

वाच्य०—मया रामकिङ्करेण भूयते । इति कपिद्विपेन प्रोचे ॥ ११० ॥

इतस्त्रयोविंशत्युत्तरशततमपद्यावधि त्रयोदशपद्यैः स्वेतिवृत्तं हनूमान् वक्ति परिचय-दृढतायै—

विप्रकृष्टं महेन्द्रस्य न दूरं विन्ध्य-पर्वतात् ।
नाऽनभ्याशे समुद्रस्य तव माल्यवति प्रियः ॥ १११ ॥

अन्वयः—हे मैथिलि ! तव प्रियः महेन्द्रस्य विप्रकृष्टं विन्ध्यपर्वतात् न दूरम् समुद्रस्य न अनभ्याशे माल्यवति ( वसति ) ।

हिन्दी—हे मैथिलि ! आपके प्रिय रामचन्द्रजी महेन्द्र पर्वतसे दूर, विन्ध्याचल से दूर नहीं, समुद्रसे भी वहुत नजदीक, माल्यवान् पर्वत पर रहते हैं ।

व्याख्या—हे मैथिलि ! तव भवत्याः, प्रियः वल्लभः ( रामः ), महेन्द्रस्य तदाख्याचलस्य, विप्रकृष्टं दूरम्, विन्ध्यपर्वतात् विन्ध्याख्यगिरेः, न दूरम् नहि विप्रकृष्टम्, समुद्रस्य अब्धेः, न अनभ्याशेऽतिसमीपे (द्वौ नञौ प्रकृतार्थं द्रढयतः), माल्यवति तदाख्ये पर्वतेऽस्तीति ( जानीहि ) । ( अत्र क्रमाद्विभक्तिविधायकसूत्राणि ३४, ३५, ३६ ) । महेन्द्रस्य, विन्ध्यपर्वतात् ३४, दूरम् ३५, अभ्यासे माल्यवति ३६ इति क्रमः । उत्तरालङ्कारः ।

कोशः—'स्याद् दूरं विप्रकृष्टकम्' । 'सदेशाभ्याशसविधसमर्यादसवेशवत्'—इत्यमरः ।



वाच्यपरिवर्तनम्—प्रियेण भूयते माल्यवति । १११ ॥

मारुतिः स्वकीयं चातुर्यं प्रदर्शयति—

अ-संप्राप्ते दशग्रीवे प्रविष्टो ऽहमिदं वनम् ।
तस्मिन् प्रतिगते द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ ११२ ॥

अन्वयः—असम्प्राप्ते दशग्रीवेऽचेतितो ऽहम् इदं वनं प्रविष्टः । प्रतिगते तस्मिन् त्वां द्रष्टुम् उपाक्रंसि ।

हिन्दी—जब रावण नहीं आया था तभी छिपकर मैं इस वनमें घुसा था । उसके चले जाने पर मैंने आपको देखनेका उपक्रम किया है ।

व्याख्या—हे सीते ! असम्प्राप्ते अप्रविष्टे, दशग्रीवे रावणे सति, अचेतितः अज्ञातः, अहम् हनुमान्, इदम् एतत्, वनम् उद्यानम् अशोकवाटिकाम् इत्यर्थः, प्रविष्टः उपस्थितः । प्रतिगते प्रतियाते, तस्मिन्दशास्ये सति, त्वां भवतीम्, द्रष्टुम् साक्षात्कर्तुम्, उपाक्रंसि उदसहिषि । ( अत्र सति सप्तमी ३७ सूत्रम् ) । इहाप्युत्तरालङ्कारः काव्यलिङ्गतः सङ्गतः ।

तिङन्तः—उपपूर्वस्य क्रमेः 'उपपराभ्याम्० १।३।३९' इति तङ् । 'स्नुक्रमोरनात्मनेपदनिमित्ते ७।२।३६' इति सिचि इण्न भवति ।

वाच्यपरिवर्तनम्—मया अचेतितेन प्रावेशि, उपाक्रमि ॥ ११२ ॥

अग्रे स्वकीयं बुद्धिवैभवं दर्शयति—

तस्मिन् वदति रुष्टो ऽपि ना ऽकार्षं देवि ! विक्रमम् ।
अ-विनाशाय कार्यस्य विचिन्वानः परापरम् ॥ ११३ ॥

अन्वयः—हे देवि ! वदति तस्मिन् रुष्टोऽपि कार्यस्य अविनाशाय पराऽपरं विचिन्वानोऽहम् विक्रमं नाकार्षम् ।

हिन्दी—हे देवि ! उसके बोलने पर रुष्ट होते हुए भी मैंने कार्यके न विगड़ने के लिये आगे पीछेकी चिन्ता करते हुए पराक्रम नहीं किया ।

व्याख्या—हे देवि सीते, वदति भाषमाणे, तस्मिन् रावणे, रुष्टः क्रुद्धः, अपि संभावनायाम्, कार्यस्य तवान्वेषणरूपस्य, अविनाशाय अविघाताय, पराऽपरं पूर्वापरं, विचिन्वानः अनुसन्धानवान्, अहं मारुतिः, विक्रमं पराक्रमं, न अकार्षम् नैव अन्वष्ठाम् । ( अत्रानादरे पक्षे सप्तमी, तं तथा वदन्तमनादृत्येति । ३८ सूत्रम् ) । विक्रमाकरणे हेतूक्तौ काव्यलिङ्गम् ।

वाच्यपरिवर्तनम्—रुष्टेनापि विचिन्वानेन ( मया ) विक्रमो नाकारि ।

शिक्षा—सर्वथापि हनुमत्कृत्या निसृष्टार्थदूतकृत्यशिक्षा लभ्यते ॥ ११३ ॥

स्वकीयामाख्यामभिधत्ते वानरो हनूमान्——

वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा।
जातो रामस्य सुग्रीवस् ततो दूतो ऽहमागतः ॥ ११४ ॥

अन्वयः—वानरेषु स्वामी कपिः सुग्रीवः नरेषु अधिपतेः रामस्य सखा जातः, ततः दूतः अहम् आगतः।

हिन्दी—वानरोंके स्वामी कपि सुग्रीव मनुष्योंके राजा रामके मित्र हुए हैं। उन्हींके यहाँसे दूत बनकर आया हूँ।

व्याख्या—वानरेषु कपिषु, स्वामी ईश्वरः, कपिः शाखामृगः, सुग्रीवः तन्नामा कीशः, नरेषु मनुष्येषु, अधिपतेः ईशस्य, रामस्य राघवस्य, सखा जातः प्राणसमं मित्रं सम्पन्नम्। ततः तस्मात्, दूतः सन्देशवान्, अहम् हनूमान्, आगतः उपस्थितः। ( अत्र स्वाम्याद्युपपदविभक्तिः। क्रमात् ३९ सूत्रम् )। समालङ्कारः।

वाच्यपरिवर्तनम्—कपिना सख्या अजनि। दूतेन मया अगामि ॥ ११४ ॥

क्रमकारकोदाहृतौ युग्मेन कवेः कौशलं द्रष्टव्यम्——

ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीम्।
कुशलो ऽन्वेषणस्याऽहमायुक्तो दूत-कर्मणि ॥
दर्शनीय-तमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः।
प्राप्तो व्याल-तमान् व्यस्यन् भुजङ्गेभ्यो ऽपि राक्षसान् ॥११५-११६॥

अन्वयः——अन्वेषणस्य कुशलः, दूतकर्मणि आयुक्तः, निशाटानाम् ईश्वरस्य निखिलां पुरीं विलोक्य, दिव्यासु अपि स्त्रीषु दर्शनीयतमाः स्त्रियः पश्यन्, भुजङ्गेभ्यः अपि व्यालतमान् राक्षसान् व्यस्यन् अहम प्राप्तः। त्वत्पादमूलम् इति शेषः।

हिन्दी—खोजनेमें चतुर, दूतकार्यमें लगाया गया, राक्षसोंके राजाकी सारी नगरीको ढूँढ़कर दिव्य स्त्रियोंमें भी अधिक देखने योग्य स्त्रियोंको देखता हुआ, सर्पोंसे अत्यन्त खूंखार राक्षसोंको ओझल करता हुआ ( बहकता हुआ ) मैं आपके पास पहुँचा हूँ।

व्याख्या—अन्वेषणस्य मार्गणस्य; कुशलः निपुणः, दूतकर्मणि सन्देशहारकक्रियायाम्, आयुक्तः नियुक्तः, निशाटानां क्षपाचराणाम्, ईश्वरस्य ईशस्य ( रावणस्येत्यर्थः), निखिलां सर्वां, पुरीं नगरीं, विलोक्य विचिन्त्य ( धातूनामनेकार्थतया ), दिव्यासु स्वर्गीयासु, अपि सम्भावनायाम्, स्त्रीषु नारीसु, दर्शनीयतमा अतिरमणीयाः, स्त्रियः नारीः, पश्यन् विलोकयन्, भुजङ्गेभ्यः सर्पेभ्यः, अपि सम्भावनायां, व्यालतमान् अतिहिंस्रान्, राक्षसान् निशाचरान्, व्यस्यन् अपक्षिपन्, अहं

वानरः, प्राप्तः आसादितवान् ( त्वत्पादमूलम् इति शेषः ) । ( अत्र त्रयाणां सूत्राणामुदाहरणम् । तत्रावसाने विभागोदाहरणम् ३९ तः ४२ यावत् ) निशाटानाम् ३९, अन्वेषणस्य, दूतकर्मणि ४०, स्त्रीषु दिव्यासु ४१, भुजङ्गेभ्यः ४२ इति इति क्रमः । एकस्य कपेरनेकक्रियान्वयाद्दीपकः ।

तद्धितः—'द्युप्रागपागुदक् ४।२।१०१' इति यति दिव्या । ततोऽतिशयेऽर्थे 'अतिशायने ५।३।५५' इति तमप् ।

वाच्यपरिवर्तनम्—कुशलेनायुक्तेन मया प्रापि ( पादमूलम् ) ॥ ११६ ॥

दूतो रामसन्देशं प्रस्तौति—

भवत्यामुत्सुको रामः प्रसितः संगमेन ते ।
मघासु कृत-निर्वापः पितृभ्यो मां व्यसर्जयत् ॥ ११७ ॥

अन्वयः—भवत्याम् उत्सुकः, ते सङ्गमेन प्रसितः, मघासु पितृभ्यः कृतनिर्वापः रामः मां व्यसर्जयत् ।

हिन्दी—आपके लिये उत्सुक, आपके सङ्गमें आसक्त, मघा-नक्षत्रमें पितरों का ( नैमित्तिक ) श्राद्ध करके मुझे रामचन्द्रजीने बिदा किया था ।

व्याख्या—(अयि देवि) भवत्यां त्वयि, उत्सुकः अभिलाषुकः, ते तव, सङ्गमेन सङ्गत्याम्, प्रसितः आसक्तः, मघायुक्ते सूर्ये, पितृभ्यः पितृपितामह-प्रपितामहेभ्यः, कृतनिर्वापः कृतपार्वण-श्राद्धः, रामो राघवः, मां हनूमन्तं, व्यसर्जयत् प्रैषयत् । अत्रोत्सुकयोगे सप्तमी, प्रसितयोगे तृतीयेति निर्देशात् ४४ चतुश्चत्वारिंशस्योदाहरणम् । ४३ त्रयश्चत्वारिंशत्तम-सूत्रस्यापि पूर्वमेव गतार्थत्वान्न पृथगुदाहृतम् । षट्चत्वारिंशत्तमसूत्रावधि सूत्रोदाहरणमस्मिन्पद्ये ।' भवत्यां, सङ्गमेन ४४, मघासु ४५, कृतनिर्वापः ४६ इति क्रमः । अनेकविशेषणिनी रामस्यैकक्रियान्वयाद्दीपकः ।

तद्धितः—मघाभिर्युक्तः काल इति विग्रहे 'नक्षत्रेण युक्तः कालः ४।२।३' इत्यण् । तस्य 'लुबविशेषे ४।२।४' इति लुप् । 'लुपि युक्तवद् व्यक्तिवचने १।२।५१' इति स्त्रीलिङ्गबहुवचने ।

कोशः—'तत्परे प्रसितासक्तौ' । 'निवापः पितृदानं स्यात्' इत्यमरः ।

वाच्यपरिवर्तनम्—उत्सुकेन प्रसितेन अहं व्यसर्ज्ये ॥ ११७ ॥

सीतायै स्वीयदौत्यदार्ढ्यायाङ्गुलीयकमपि ददाति—

अयं मैथिल्यभिज्ञानं काकुत्स्थस्या ऽङ्गुलीयकः ।
[illegible] ॥ ११८ ॥

अन्वयः—हे मैथिलि ! काकुत्स्थस्य अभि ानम् अयम् अङ्गुलीयकः भवत्याः त्यर्थं स्मरता ( तेन ) मम सादरम् अर्पितः ( गृहाण तम् ) ।

हिन्दी—हे मैथिलि ! रामचन्द्रने अपने पहचान की प्रतीक यह अंगूठी पको अत्यन्त स्मरण करते हुए दी है, लीजिये ।

व्याख्या—हे मैथिलि सीते ! काकुत्स्थस्य रामस्य ( शेषषष्ठी ), अभिज्ञानम् ह्नम्, इह लिङ्गाधिक्ये प्रथमा, अयं मद्धस्तगः अङ्गुलीयकः ऊर्मिका, भवत्याः ( स्मृतिषष्ठी ), अत्यर्थम् अधिकम्, स्मरता ध्यायता ( तेन ), मम हनूमतः शेषे षष्ठी सादरम् ), अर्पितः प्रत्तः ( गृहाण तम् इति शेषः ) । अत्र मैथिलि ! म्बोधने प्रथमा । तत्रैवामन्त्रितं सम्बुद्धिश्चेत्यपि प्रविष्टं ज्ञेयम् । ४६–५२ सूत्राणि वत् । अयम् अङ्गुलीयकः ४६, मैथिलि ४७, काकुत्स्थस्य ५०, भवत्याः ५२ ति क्रमः । ५१ अग्रिमे पद्ये । हेतूक्तौ काव्यलिङ्गम् ।

तद्धितः—'जिह्वामूलाङ्गुलेश्छः।४।३।६२' छे, तस्येयादेशेऽङ्गुलीयः, स्वार्थे कः।

वाच्यपरिवर्तनम्—स्मरन्नार्पिपत् । अमुनाङ्गुलीयकेन भूयते ।। ११८ ।।

सम्प्रति रामार्थमपि प्रत्यभिज्ञानं याचते—

जानीष्व प्रत्यभिज्ञानस्यातस्त्वमपि देवि ते ।
आस्ते भर्तेति मां दृष्ट्वा भर्तुर्दूतं प्रियं कपिम् ।। ११९ ।।

अन्वयः—हे देवि ! अतः ( अभिज्ञानात् ) भर्तुः प्रियं दूतं कपिं दृष्ट्वा ते र्ता आस्ते इति त्वम् अपि प्रत्यभिज्ञानस्य जानीष्व ।

हिन्दी—हे देवि ! इस अभिज्ञानसे आप अपने पतिके प्रिय दूत मुझ कपिको खकर आपके पति हैं (उन्होंने मुझे भेजा है)-इसलिये आपभी अभिज्ञान दीजिये ।

व्याख्या—हे देवि, अतः अस्मात् ( अभिज्ञानात् इत्यर्थः ), भर्तुः पत्युः, प्रियं वल्लभं, दूतम् सन्देशहरं, कपिं कीशं ( माम् ), दृष्ट्वा वीक्ष्य, ते तव, भर्ता तिः, आस्ते सुखितः अस्ति, इति त्वम् भवती अपि, प्रत्यभिज्ञानस्य चिह्नस्य, जानीष्व ( अनन्तरकरणे तस्य ) दानादौ प्रवर्तस्व । प्रवृत्तिवचनो जानातिरविदर्थ ति काशिका ( अत्राविदर्थे जानातौ प्रत्यभिज्ञानस्येति षष्ठी ) । बहुत्र पद्यमिदं नास्ति, तन्न वरम् । एकपञ्चाशत्तमसूत्रोदाहरणाऽसङ्गतेः ।

वाच्यपरिवर्तनम्—भर्त्रा आस्यते । ज्ञायताम् त्वया ।। ११९ ।।

लक्ष्मणमपि स्मारयति मारुतिः—

रामस्य दयमानो ऽसावध्येति तव लक्ष्मणः ।
उपास्कृषातां राजेन्द्रावागमस्येह, मा प्रसीः ।। १२० ।।

अन्वयः—रामस्य दयमानः असौ लक्ष्मणः तव अध्येति । राजेन्द्रौ इह आगमस्य उपास्कृषाताम् ( त्वम् ) मा त्रसीः ।

हिन्दी—रामकी रक्षा करते हुए वह लक्ष्मण आपको याद करते हैं । दोनों राजेन्द्रोंने यहाँ आनेका यत्न कर लिया है । आप न डरें ।

व्याख्या—रामस्य दाशरथेः, दयमानः दयां विदधत्, असौ विप्रकृष्टगः, लक्ष्मणः देवरो भवत्याः, तव मैथिल्याः, स्मृतिं अध्येति । राजेन्द्रौ नरशार्दूलौ इह लङ्कायाम्, आगमस्य उपस्थानस्य, उपास्कृषाताम् कृतप्रतियत्नौ ( स्तः ), मा त्रसीः, न बिभीहि । ( क्रमात् ५२, ५३ इति द्वयोरेवोदाहरणानि त्रीणि ) । 'गन्धनावक्षेपण० १।३।१२' इति प्रतियत्ने कृञस्तङ् । काव्यलिङ्गम् ।

कोशः—'इदमः समक्षरूपम् समीपतरवर्ति चैतदो रूपम् ।
अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्' ।।

वाच्यपरिवर्तनम्—अमुना लक्ष्मणेनाधीयते । राजेन्द्राभ्यामागम उपास्कारि । मा त्रासि ।। १२० ।।

हनूमान् सीतामाशंसते—

रावणस्येह रोक्ष्यन्ति कपयो भीम-विक्रमाः ।
धृत्या नाथस्व वैदेहि ! मन्योरुज्जासयाऽऽत्मनः ।। १२१ ।।

अन्वयः—हे वैदेहि ! भीमविक्रमाः कपयः इह रावणस्य रोक्ष्यन्ति । धृत्याः नाथस्व, आत्मनः मन्योः उज्जासय ।

हिन्दी—हे जनकनन्दिनि ! भीषण पराक्रमी सब कपि लङ्कामें ( आकर ) रावणको मर्मवेदना उत्पन्न करेंगे । आप धैर्य धरें । आप अपना शोक दूर करें ।

व्याख्या—हे वैदेहि जनकनन्दिनि ! भीमविक्रमाः घोर-पराक्रमाः, कपयः वानराः, इह लङ्कायाम्, रावणस्य दशास्यस्य, रोक्ष्यन्ति तं सरोगं करिष्यन्ति, ( त्वम् ) धृत्याः धैर्यस्य, नाथस्व आशंसस्व धृतिं लभस्वेति यावत्, आत्मनः स्वस्य, मन्योः शोकस्य, उज्जासय हिंसय । जसु हिंसायाम् इति चौरादिको धातुः । ( त्रयाणां ५४, ५५, ५६ क्रमादुदाहरणानि । भीमविक्रमा[1] भावकर्तारोऽत्र ) । भाविकालङ्कारः काव्यलिङ्गसङ्गतः ।

---

१. सूत्रे भावकर्तृकत्वं रुजार्थधातूनामपेक्ष्यते । विक्रमशब्दोऽत्र भावे घञा सिद्धः । स च भीमविक्रमा इति विशेषणे उपसर्जनतयाऽस्तीति । रोक्ष्यन्तीत्यत्र रुजधातुः भावकर्तृकोऽपि सिद्धः ।

वाच्यपरिवर्तनम्—भीमविक्रमैः कपिभ रोक्ष्यते। त्वया नाथ्यताम्। उज्जास्यताम् मन्युः ॥ १२१ ॥

सीतायास्त्राणविषये मारुतिः कथयति—

राक्षसानां मयि गते रामः प्रणिहनिष्यति।
प्राणानामपणिष्टाऽसौ रावणस् त्वामिहानयन् ॥ १२२ ॥

अन्वयः—मयि गते रामः राक्षसानां प्रणिहनिष्यति। त्वाम् इह आनयन् असौ रावणः प्राणानाम् अपणिष्ट।

हिन्दी—मेरे चले जाने पर रामचन्द्रजी आकर राक्षसोंका वध करेंगे, क्योंकि आपको यहाँ लाकर रावणने अपसे प्राणोंको वेच डाला है।

व्याख्या—मयि हनुमति, गते प्रत्यावृत्ते, ( मत्तो लब्धवृत्तः ) रामः राघवः, ( आगत्य ) राक्षसानां क्रव्यादानां, प्रणिहनिष्यति उज्जासयिष्यति। त्वाम् भवतीम्, इह लङ्कायाम्, आनयन् प्रापयन्, असौ विप्रकृष्टः, रावणो दशास्यः, प्राणानाम् असूनाम्, अपणिष्ट विक्रयं कृतवान्। ( अयं पुनः ५६ सूत्रस्योदाहरणं दत्त्वा ५७ सप्तपञ्चाशत्तमस्यापि दत्तवान् ) अपणायिष्टेति प्रामादिकः पाठः, स्तुत्यर्थस्यायप्रत्ययविधानात्। ( प्राणपणने तवागमो हेतुर्मे गमो रक्षोनाशे हेतुरिति द्विधा काव्यलिङ्गम् )।

तिङन्तः—'ऋद्धनोः स्ये ७।२।७०' इतीट्। 'नेर्गद ८।४।१६' इति णः प्रणिहनिष्यति।

वाच्यपरिवर्तनम्—रामेण राक्षसाः प्रणिहनिष्यन्ते। अमुना रावणेन आनयता प्राणाः अपणिषत ॥ १२२ ॥

रामः सीतां स्मरतीति विश्वासं कारयति हनूमान्—

अदेवीद् बन्धु-भोगानां प्रादेवीच्चात्म-संपदम्।
शत-कृत्वस् तवैकस्य स्मरत्यह्नो रघूत्तमः ॥ १२३ ॥

अन्वयः—( हे देवि ! असौ ) बन्धुभोगानाम् अदेवीद्, आत्मसम्पदं प्रादेवीत् च, रघूत्तमः एकस्य अह्नः शतकृत्वः तव स्मरति।

हिन्दी—हे देवि ! उसने तो बन्धु और भोगोंको वेच डाला है। अपनी सारी सम्पत्ति वेच डाली है। रामचन्द्रजी दिनमें सौ बार आपको स्मरण करते हैं।

व्याख्या—( हे देवि ! असौ रावणः ) बन्धुभोगानाम् अदेवीत् स्वान्वयसम्पत्तीः विक्रीतवान्, आत्मसम्पदम् निजसम्पत्तिम्, च पुनः, प्रादेवीत् विक्रीतवान्, रघूत्तमः रामः, अह्नो दिनस्य, शतवारम् बहुकृत्वः, तव भवत्याः, स्मरति

अध्येति । ( ५८, ५९ इत्यनयोरुदाहरणे दत्त्वा छन्दोविषयत्वात्सूत्रचतुष्टयं विहाय अत्र ६४ चतुःषष्टितमस्योदाहरणं प्रत्तम् एकस्य अह्नः ) । तवेति ५२ द्वापञ्चाशतः । अतिशयोक्तिः शीघ्रकार्यमात्राभिधानात् सूक्ष्मालङ्कारसञ्ज्ञा ।

तद्धितः—'क्रियाभ्यावृत्ति० ५।४।३७' इति शतात् कृत्वसुच् । तस्याव्ययत्वम् परिगणितत्वात् । बन्धवश्च भोगाश्चेति द्वन्द्वः ।

वाच्यपरिवर्तनम्—बन्धुभोगा अदेविषत । आत्मसम्पत् प्रादेवि । रघूत्तमेन त्वं स्ययंसे ॥ १२३ ॥

हनूमान् रामं प्रति सन्देशप्रेषणायानुनयति—

तवोपशायिका यावद् राक्षस्यश् चेतयन्ति न ।
प्रतिसंदिश्यतां तावद् भर्तुः शार्ङ्गस्य मैथिलि ॥ १२४ ॥

अन्वयः—हे मैथिलि ! तव उपशायिका राक्षस्यो यावन्न चेतयन्ति तावत् त्वया शार्ङ्गस्य भर्तुः सन्दिश्यताम् ।

हिन्दी—हे जनकनन्दिनि ! आपके पास बारी-बारीसे सोने वाली राक्षसियां जबतक नहीं जागतीं, तबतक ही अपने शार्ङ्गधनुर्धारी पतिके सन्देशका प्रत्युत्तर दे डालें ।

व्याख्या—हे मैथिलि सीते ! तव भवत्याः, उपशायिकाः पर्यायशायिन्यः, राक्षस्यो यातुधान्यः, यावत् न चेतयन्ति जाग्रति, तावदेव तावत्कालमेव, शार्ङ्गस्य धनुषः धारकस्य, भर्तुः पत्युरित्यर्थः, सन्दिश्यताम् प्रत्युत्तर्यताम् । अत्र तव इति कर्तरि, शार्ङ्गस्येति कर्मणि ६५ इत्यनेन षष्ठी ) । भर्तुः स्थाने धर्तुरिति पाठः साधुः कवि-सम्मतः । अन्यथा कार्यविनाशसूक्ष्मालङ्कारः ।

कृदन्तः—'पर्यायार्हणोत्पत्तिषु ण्वुच् ३।३।१११' इति ण्वुच्—उपशायिका । वाच्य०—उपशायिकाभी राक्षसीभिः चेत्यते, त्वं प्रतिसन्दिश ॥ १२४ ॥

अन्ते साऽभिज्ञां ददाति—

पुरः प्रवेशमाश्चर्यं बुद्ध्वा शाखा-मृगेण सा ।
चूडा-मणिमभिज्ञानं ददौ रामस्य सम्मतम् ॥ १२५ ॥

अन्वयः—सा शाखामृगेण पुरः प्रवेशम् आश्चर्यं बुद्ध्वा, रामस्य सम्मतम् अभिज्ञानम् चूडामणिम् ददौ ।

हिन्दी—उन्होंने (सीताजीने) बन्दरका लङ्कामें प्रवेश आश्चर्यकारक समझकर रामचन्द्रजीको पूरा परिचित ( पहचान ) अपना चूड़ामणि ( जुड़ाकर ) दे दिया ।

व्याख्या—सा सीता, शाखामृगेण वानरेण, पुरः नगर्याः ( लङ्कायाः ), प्रवेशम् उपस्थानम्, आश्चर्य्यम् अद्भुतम्, बुद्ध्वा ज्ञात्वा, रामस्य स्वपतेः राघवस्य, सम्मत पूर्णपरिचितम् ( प्रियमिति यावत् ), अभिज्ञानम् चिह्नम्, चूडामणिम् स्वशिरोरत्नम् (उत्तार्य), ददौ अदात्। ( प्रवेश इति कृदन्ते, शाखामृगस्य कर्तुः, पुरः कर्मणश्चान्वयात् उभयत्र प्राप्तौ कर्मणि पुर इति ६६षष्ठी। कर्तरि अनुक्ते तृतीयैव शाखामृगेणेति ( ६६।६७ सूत्रे ) । रामस्येति ६७ षष्ठी निषेधापवादिका । असम्भवद्वस्तुसम्बन्धातिशयोक्तिः काव्यलिङ्गसङ्गता ।

कृदन्तः—सम्मतमिति 'मतिबुद्धि० ३।२।१८८' इति वर्तमाने निष्ठा,ततस्तद्योगे रामस्येति 'न लोकाव्यय०२।३।६९' इति निषेधं पराकृत्य षष्ठी वर्तमानार्थकक्तयोगे।

वाच्यपरिवर्तनम्—तया चूडामणिः ददे ॥ १२५ ॥

अनन्तरं सीता वानरं विसर्जयति—

रामस्य शयितं भुक्तं जल्पितं हसितं स्थितम् ।
प्रक्रान्तं च मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् ॥ १२६ ॥

अन्वयः—(सा) हनूमन्तम्, रामस्य शयितं, भुक्तं, जल्पितं हसितं, स्थितं, प्रक्रान्तम् च मुहुः पृष्ट्वा व्यसर्जयत् ।

हिन्दी—सीताजीने हनुमान्से रामचन्द्रजीका सोना, खाना, बोलना, हँसना, रहना, वर्तमानमें प्रारम्भकार्य आदि पूछकर उनको विदा किया ।

व्याख्या—( सा सीता ) हनूमन्तं मारुतिम्, रामस्य स्वपतेः, शयितम् स्वप्नाधिकरणव्यापारम्, भुक्तं भोजनाधिकरणव्यवस्थाम्, जल्पितं संलापाधिकरणवार्ताम्,हसनं हास्याधिकरणव्यापारम्,स्थितिम् निवासाधिकरणव्यवस्थाम्,प्रक्रान्तं प्रारब्धकर्माधारव्यापारम्, मुहुः भूयोभूयः (पौनःपुन्येन), पृष्ट्वा अनुयुज्य, व्यसर्जयत् प्रैषयत् । अधिकरणवाचि-क्त-प्रत्ययान्त-शयितादीनां योगे रामस्येति षष्ठी । ( ६८ सूत्रम् ) । एकक्रियायामनेककर्मान्वियाद्दीपकः ।

वाच्यपरिवर्तनम्—तया हनूमान् व्यसृज्यत ॥ १२६ ॥

सम्प्रति निसृष्टार्थंद्यूतकर्मचिकीर्षोर्हनूमतश्चेष्टितं सर्गान्तं विवृणोति—

असौ दधदभिज्ञानं चिकीर्षुः कर्म दारुणम् ।
गामुको ऽप्यन्तिकं भर्तुर् मनसा ऽचिन्तयत् क्षणम् ॥ १२७ ॥

अन्वयः—अभिज्ञानं दधत् भर्तुः अन्तिकं गामुकः अपि दारुणं कर्म चिकीर्षुः असौ क्षणं मनसा अचिन्तयत् ।



हिन्दी—अभिज्ञान-चिह्न चूडामणिको लिये हुए स्वामी ( रामचन्द्रजी ) के

पास जाने वाले भी भीषण कर्म कर डालना चाहते हुए हनुमान्‌जी क्षणभर मनसे सोचने लगे।

व्याख्या—अभिज्ञानं चूडामणिं, दधत् बिभ्रत्, भर्तुः स्वामिनः ( रामस्य ), अन्तिकम् अभ्यर्णम्, गामुकः गमनशीलोऽपि, दारुणं कठिनं, कर्म कार्यं, चिकीर्षुः कर्तुमिच्छुः, क्षणं मुहूर्तम्, मनसा हृदा, अचिन्तयत् व्यचारयत् ( दधदित्यादि पदयोगे षष्ठीनिषेधः ६९ ऊनसप्ततितमसूत्रेणैव पद्यत्रयं यावदस्ति समाक्रान्तम् )। एकस्यानेकक्रियान्वयाद्दीपकः।

कृदन्तः—'लषपत० ३।२।१५४' इत्युकञा कामुकः। 'सनाशंस० ३।२।१६८' इत्युना चिकीर्षुः।

वाच्य०—अभिज्ञानं दधता चिकीर्षुणा अमुना क्षणम् अचिन्त्यत ॥ १२७ ॥

आत्मनो दूतत्वं साधयति हनूमान्—

कृत्वा कर्म यथाऽऽदिष्टं पूर्व-कार्याऽविरोधि यः।
करोत्यभ्यधिकं कृत्यं तमाहुर्द् दूतमुत्तमम् ॥ १२८ ॥

अन्वयः—यः यथादिष्टं कर्म कृत्वा पूर्वकार्याविरोधि अभ्यधिकं कृत्यं करोति तम् उत्तमं दूतम् आहुः, नीतिज्ञा इति शेषः।

हिन्दी—जो यथादिष्ट अर्थात् स्वामीके कहनेके अनुसार कार्य करके उसके अनुकूल ही कुछ अधिक कार्य कर डालता है, नीतिज्ञ उसे उत्तम दूत कहते हैं।

व्याख्या—यः कोऽपि निसृष्टार्थदूतः, यथादिष्टम् स्वामिना यथाभिहितं, कर्म कार्यं, कृत्वा विधाय, पूर्वकार्याविरोधि उद्दिष्टकर्माविसंवादि, अधिकम् अतिरिक्तम्, कृत्यं कर्तव्यं, करोति सम्पादयति, तम् पूर्वोक्तम्, उत्तमं श्रेष्ठं, दूतं चरं सन्देशहरम्, आहुः कथयन्ति, नीतिज्ञा इति शेषः। ( अत्राव्यययोगे षष्ठीनिषेधः )। दूत-स्वभावोक्तिः।

तिङन्तः—'ब्रुवः पञ्चानामादित० ३।४।८४' इत्याहादेशे आहुः लटि।

वाच्य०—येनाधिकं कृत्यं क्रियते, स उत्तमो दूत उच्यते ॥ १२८ ॥

हनूमतो निश्चयमाख्याति कविः—

वैदेही दृष्टवान् कर्म कृत्वा ऽन्यैरपि दुष्करम्।
यशो यास्याम्युपादाता वार्तामाख्यायकः प्रभोः ॥ १२९ ॥

अन्वयः—वैदेहीं दृष्टवान्, अन्यैः दुष्करं कर्म कृत्वा अपि यशः उपादाता अहम् प्रभोः वार्ताम् आख्यायकः यास्यामि।

हिन्दी—सीताजीको देख लिया है। दूसरोंसे दुष्कर कर्म करके भी यश पानेवाला मैं प्रभुकी वार्ता कहनेके लिये जाऊँगा।

व्याख्या—वैदेहीं सीतां, दृष्टवान् वीक्षितवान्, अन्यैः इतरैः, दुष्करम् असम्पाद्यं, कर्म कार्यं, कृत्वा सम्पाद्य अपि, यशः कीर्तिम्, उपादाता आत्मसात्कर्ता, अहम् हनूमान्, प्रभोः स्वामिनः, वार्तां सीतावृत्तान्तम्, आख्यायकः कथकः, यास्यामि गमिष्यामि। (अत्राख्यायकयोगेन सप्ततितमस्यापि प्रवृत्तिः)। (६९।७० सूत्रे)। यशो यावत् ६९ ऊनसप्ततितमम् प्रवर्तते। वार्ताम् इति ७० सप्ततितमेन षष्ठीनिषेधे द्वितीया। प्रभोरिति सम्बन्धे षष्ठी। उदात्तालङ्कारः।

कृदन्तः—आख्यातास्मीति विगृह्य भविष्यदधिकारात् 'तुमुण्ण्वुलौ० ३।३।१०' इति ण्वुलः आख्यायकः। 'आतो युक्० ७।३।३३' इति युक् च।

वाच्यपरिवर्तनम्—दृष्टवता उपादात्रा आख्यायकेन मया यास्यते॥ १२९॥

अधुना हनुमच्चिन्ताफलं निर्दिशति कविः—

> राक्षसेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनम्।
> इति संचिन्त्य सदृशं नन्दनस्याऽभनक् कपिः॥ १३२॥

अन्वयः—'राक्षसेन्द्रस्य संरक्ष्यं नन्दनस्य सदृशम् इदं वनं मया लव्यम्' इति संचिन्त्य कपिः अभनक्।

हिन्दी—राक्षस-राजाके अति प्रिय रक्षणीय नन्दन वनके सदृश इस वनको काट डालना चाहिये, ऐसा सोचकर कपिने उसे तोड़ फोड़ डाला।

व्याख्या—राक्षसेन्द्रस्य रात्रिचराधिपतेः, संरक्ष्यं संगोप्यम्, नन्दनस्य इन्द्रकाननस्य, सदृशं तुल्यम्, इदं पुरोगं, वनम् उद्यानं, मया हनुमता, लव्यम् छेद्यम्, इति एवं, संचिन्त्य विचार्य, (तत्) अभनक् व्यनाशयत्। (इह ७१ सूत्रस्योदाहरणद्वयम्। ७२ द्वासप्ततेरपि नन्दनस्येति पाक्षिकषष्ठ्या उदाहरणम्)। उपमा काव्यलिङ्गसङ्कुला।

कृदन्तः—'अर्हे कृत्यतृचश्च ३।३।१६९' इत्यनुशासनात् 'ऋहलोर्ण्यत् ३।१।१२४' इति ण्यत् संरक्ष्यम्। 'अचो यत् ३।१।९७' इति यत् लव्यम्।

तिङन्तः—भञ्जो आमर्दने इत्यस्य लङि, 'श्नान्नलोपः ६।४।२३' इति नलोपे 'चोः कुः ८।२।३०' इति कुत्वेन, गत्वे, पाक्षिके चर्त्वे चाभनक्।

वाच्यपरिवर्तनम्—कपिना ऽभज्यतेति सुगमम्॥ १३०॥

सम्प्रति हनुमत्कृतं कार्यं निर्दिशति युग्मेन—

> राघवाभ्यां शिवं दूतस् तयोरहमिति ब्रुवन्।
> हितो भन्ज्मि रामस्य कः किं भूतेऽत्र राक्षसः॥ १३१॥

वि-लुलित-पुष्प-रेणुकपिशं प्रशान्त-कलिका-पलाश-कुसुमं,
कुसुम-निपात-विचित्र-वसुधं स-शब्द-निपतद्द्रुमोत्क-शकुनम ।
शकुन-निनाद-नादि-ककुभम् विलोल-विपलायमान-हरिणं,
हरिण-विलोचनाऽधिवसतिं बभञ्ज पवनाऽऽत्मजो रिपु-वनम् ॥१३२।

अन्वयः—राघवाभ्यां शिवं भूयात्। तयोः दूतः रामस्य हितः अहम् रिपुवनम् भनज्मि। कः (राक्षसः) किं ब्रूते इति ब्रुवन् पवनात्मजो विलुलितपुष्परेणुकपिशम् प्रशान्तकलिकापलाशकुसुमम् कुसुमनिपातविचित्रवसुधम् सशब्दनिपतद्द्रुमोत्कशकुनम् शकुननिनादनादिककुभम् विलोलविपलायमानहरिणम् हरिणविलोचनाधिवसतिं रिपुवनं बभञ्जेति परेणान्वयः।

हिन्दी—दोनों रघुवंशियोंका कल्याण हो। उन दोनोंका दूत रामका हितैषी मैं अशोकवाटिकाको नष्ट करता हूं। कौन ( राक्षस ) क्या बोलता है—यह कहते हुए पवन-सुत ( हरिणनयना, सीताजीके निवासस्थान ) उपवनको नष्ट करने लगे। जहांकी भूमि पर गिरे हुए फूलोंके परागसे धूसर वर्ण की वर्षा हो गई। करोड़ों पत्ते और पुष्प-पुञ्ज नष्ट हो गये। पुष्पोंके गिरनेसे भूमि चित्र-विचित्र हो गई। शब्द करतें हुए पेड़ोंके गिरनेसे पक्षिगण भागने लगे। पक्षियोंकी चिल्लाहटसे दिशाएँ गूँज उठीं। व्याकुल हरिण भाग चले।

व्याख्या—राघवाभ्यां रामलक्ष्मणाभ्यां, शिवं भद्रं, भूयात् स्तात्। तयोः उक्तयोः, दूतः सन्देशहरः, रामस्य राघवस्य, हितः आप्तः, अहम् मारुतिः, रिपुवनम् भनज्मि। अत्र कः राक्षसः, किं ब्रूते गदति, इति इत्थं, ब्रुवन् वदन्, पवनात्मजः वायुपुत्रः, विलुलित-पुष्परेणुकपिशं विकीर्ण-कुसुम-परागपिशङ्गम्, प्रशान्त-कलिकापलाशकुसुमम् अवसन्नकोरक-पर्ण-पुष्पम्, कुसुम-निपातविचित्रवसुधम् पुष्पपतन-कर्बुरवसुन्धरम्, सशब्दनिपतद्द्रुमोत्कशकुनम् सध्वनि-धराशायिवृक्षव्याकुलविहगम्, शकुननिनादनादिककुभम् पक्षिराव-प्रतिध्वनित-दशदिशम्, विलोलविपलायमानहरिणम् व्यग्रविभ्रान्तमृगम्, हरिणविलोचनाधिवसतिम् मृगनयनसीता-निवासस्थलम्, रिपुवनम् शत्रूद्यानम् अशोकवाटिकाख्यम्, बभञ्ज पातयामास। १३१ पद्ये ७२ सूत्रम्। अत्र सर्गान्ते छन्दोभेदोऽश्वललितमिति। 'यदिह नजौ भजौ भजभलगास्तदाश्वललितं हरार्कयति' तत्—इति लक्षणम्। ११+ १२=२३। कार्श्चीयमकालङ्कारः। रसनाकारेण यमितत्वात् पूर्व-पादस्यान्तेऽपरपादस्यादौ च सदृशवर्णसत्त्वात्। ...

एकादशे प्रभातवर्णनं, द्वादशे राजनीतिरद्भुता । त्रयोदशे भाषासमेन दशतस्त्रयोदशान्तचतुष्टयसर्गे काव्यविलसितं प्रसन्नकाण्डमस्ति ।

कोशः—'सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा'—इत्यमरः ।

समासः—पुष्पाणां रेणवः इति तत्पुरुषः, विलुलितैः तैः कपिशम् । कलिकाश्च पलाशाश्च कुसुमानि चेति द्वन्द्वः । प्रशान्तानि तानि यस्मिन् तत् । कुसुमानां निपात इति तत्पुरुषः, तेन चित्रा वसुधा यस्मिन् तत् । सशब्दाश्च निपतन्तश्च ते द्रुमा इति कर्मधारयः, तैः उत्काः शकुना यस्मिन् तत् । शकुनानां निनादा इति तत्पुरुषः, तैः नादिन्यः ककुभाः यस्मिन् तत् । विलोला विपलायमाना हरिणा यस्मिन् तत् । हरिणस्य विलोचने इव विलोचने यस्याः सा, तस्या अधिवसतिः ताम्, इति बहुव्रीहिबाहुल्यम् ।

( अत्र 'आपं चैव हलन्तानां यथा वाचा निशा दिशा' इतिवत् ककुभाशब्दः । तस्योपसर्जनतया 'गोस्त्रियोरुपसर्जनस्य १।२।४८' इति ह्रस्वः । इत्येवमधिकारकाण्डे दृढोऽनुरोधो मे यत् सर्वत्रैवाष्टाध्यायीपुस्तकाधारमेव भट्टिमहाकाव्यस्याध्ययनं कर्तव्यं, सूत्राणि क्रमेण तत्रैव द्रष्टव्यानीति न विस्मरणीयम् ) ।

इति श्रीक्षेमधारिणा कौशल्याजेन शाण्डिल्येन विहाराभिजनेन
काशीपण्डितसभाध्यक्षेण संप्रशिक्षणपद्धतिप्रवर्तकेन काशी-
वास्तव्येन म. म. पण्डितराजेन व्याख्यानवागीशेन
दर्शन-केशरिणा डॉ० गोपालशास्त्रिणा विरचिताऽष्टम-
सर्गान्ताधिकारकाण्डीय—काव्यमर्मविमर्शिका
'छात्रप्रिया रुचिरा टीका समाप्ता

इति शिवम्

—: ० :—

# परिशिष्टम्

शक्तिशक्तिमतोः शश्वद्विलासस्त्रिजगद् यथा ।
प्रकृति-प्रत्ययोद्भूतं शब्दशास्त्रे पदं तथा ।।

जैसे शक्ति-शिवका शाश्वतिक विलास ही त्रिभुवन है। वैसे धातुरूप प्रकृति और तिङादिरूप प्रत्ययोंका विलास ही तो शब्दशास्त्रमें पदसमूह है। अतः शब्दोंका मूल धातु ही हैं। वे धातु दो हजारके लगभग पाणिनिने धातुपाठ पुस्तकमें लिखे हैं उन्हीं धातुओंसे १० लकार तथा १० गण भेदसे धातुओंके पद बनाए जाते हैं।

इस भट्टिकाव्यशास्त्रमें उन सभी धातुओंके पदोंके प्रयोग प्रायः दिखाये गये हैं। पर यहाँ मुझे भट्टिके चार सर्गोंमें प्रयुक्त धातुओंके प्रयुक्त लकारोंमें छात्र वैसे पद स्वयं बना लेंगे, उसका संक्षिप्त स्वरूप बता देना है। देखिये—शिवसूत्रके आधार पर १० लकार—

लट् लिट् लुट् लृट् लेट् लोट् (टित् लकार ६)। लेट् वेद में ही आता है। लङ् विधिलिङ् आशीर्लिङ् लुङ् लृङ् ( ङित् लकार )।

इन १० लकारोंके सार्वधातुक, आर्द्धधातुक नामके दो भेद हैं। लट् लङ् लोट् विधिलिङ् ये चार सार्वधातुक लकार हैं। इन्हीं चारों लकारोंमें १० गणोंके भेदसे १० प्रकारके विकरण लगाकर १० ढंगके पद बनाते हैं। यहाँ वे १० विकरण बताये जाते हैं, जिन्हें धातु + प्रत्ययोंके बीचमें बैठाकर पद बनाये जाते हैं।

भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च ।
तुदादिश्च रुधादिश्च तनादिक्रीचुरादयः ।।

१ भ्वादि, २ अदादि, ३ जुहोत्यादि, ४ दिवादि, ५ स्वादि, ६ तुदादि, ७ रुधादि, ८ तनादि, ९ क्र्यादि, १० चुरादि। इन्हीं १० गणोंमें १० ढंगके विकरण धातु+प्रत्ययके बीच में टपक पड़ते हैं। वे यों हैं—

१ भ्वादिमें शप् (अ), २ अदादिमें लुक् (×), ३ जुहोत्यादिमें श्लु (×), ४ दिवादिमें श्यन् (य), ५ स्वादिमें श्नु (नु), ६ तुदादिमें श ( अ ), ७रुधादिमें श्नम् ( न ), ८ तनादिमें ( उ ), ९ क्र्यादिमें श्ना ( ना ), १० चुरादिमें णिच् ( इ )। ये ही १० विकरण हैं, जो धातुओंको विकृत करके रूपान्तर करते हैं इसी कारण इनका नाम विकरण है। विक्रियन्ते धातवोऽनेनेति विकरणम्।

अब भट्टिकाव्यशास्त्रके ४ चार सर्गोंमें आये लकारोंके प्रत्यय देखें—

आत्मनेपद और परस्मैपद भेदसे दो प्रकारके प्रत्यय हैं, सभी प्रत्यय १८ हैं, जिन्हें तिङ् कहते हैं। सूत्र—

तिप्तिस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ३।४।७८। इनका परिष्कृत रूप लकारोंमें देखें—

## सार्वधातुक-प्रत्यय

### लट् लकार[1] ( वर्तमानकाल )

| | परस्मैपद ( १० गण ) | | | आत्मनेपद ( ४ गण ) | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र० पु० | तिप् (ति) | तस् (तः) | झि (अन्ति) | त (ते) | आताम् ( इते ) | झ (अन्ते) |
| म० पु० | सिप् (सि) | थस् (थः) | थ | थास् (से) | आथाम् (इथे) | ध्वम् (ध्वे) |
| उ० पु० | मिप् (मि) | वस् (वः) | मस् (मः) | इट् (ए) | वहि (वहे) | महिङ् (महे) |

### लङ् लकार[2] ( अनद्यतनभूतकाल )

| | परस्मैपद ( १० गण ) | | | आत्मनेपद ( ४ गण ) | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र० पु० | त् | ताम् | अन् | त | इताम् | अन्त |
| म० पु० | स् | तम् | त | थाः | इथाम् | ध्वम् |
| उ० पु० | अम् | व | म | इ | वहि | महि |

अतो दीर्घो यञि ७।३।१०१ से उत्तम पुरुषके विकरण चार गण भ्वादि, दिवादि, तुदादि, चुरादि १।४।६।१० गणोंमें दीर्घ हो जाते हैं।

### लोट् लकार[3] ( विध्यादिकाल )

| | परस्मैपद ( १० गण ) | | | आत्मनेपद ( ४ गण ) | | |
|---|---|---|---|---|---|---|
| | ए० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र०पु० | तु (तात्) | ताम् | अन्तु | ताम् | इताम् | अन्ताम् |
| म०पु० | हि (तात्) | तम् | त | स्व | इथाम् | ध्वम् |
| उ०पु० | आनि | आव | आम | ऐ | आवहै | आमहै |

---

१. २. ३. लट्, लङ् और लोट्में परस्मैपदके ये ही प्रत्यय होते हैं। केवल जुहोत्यादि गणमें क्रमसे अन्तिका अति, अन्का ऊ ( धातुका गुण भी ) और अन्तुका अतु हो जाता है। छह गणोंमें (अदादि जुहोत्यादि स्वादि रुधादि तनादि क्र्यादिमें) को आत्मनेपदमें प्रथम और मध्यम पुरुषके द्विवचनमें लट् लङ् लोट्

### लिङ् लकार ( विध्यादि-काल )

| | परस्मैपद ( ४ गण ) | | | आत्मनेपद ( १० गण[४] ) | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र० पु० | इत् | इताम् | इयुः | ईत | ईयाताम् | ईरन् |
| म० पु० | इः | इतम् | इत | ईथाः | ईयाथाम् | ईध्वम् |
| उ० पु० | इयम् | इव | इम | ईय | ईवहि | ईमहि |

## आर्धधातुक-प्रत्यय

### लृट् ( सामान्य भविष्यत्-काल )

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र० पु० | स्यति | स्यतः | स्यन्ति | स्यते | स्येते | स्यन्ते |
| म० पु० | स्यसि | स्यथः | स्यथ | स्यसे | स्येथे | स्यध्वे |
| उ० पु० | स्यामि | स्यावः | स्यामः | स्ये | स्यावहे | स्यामहे |

### लृङ् ( भूत-क्रियातिपत्तिकाल )

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र० पु० | स्यत् | स्यताम् | स्यन् | स्यत | स्येताम् | स्यन्त |
| म० पु० | स्यः | स्यतम् | स्यत | स्यथाः | स्येथाम् | स्यध्वम् |
| उ० पु० | स्यम् | स्याव | स्याम | स्ये | स्यावहि | स्यामहि |

### लुट् ( अनद्यतन भविष्यत्-काल )

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र० पु० | ता | तारौ | तारः | ता | तारौ | तारः |
| म० पु० | तासि | तास्थः | तास्थ | तासे | तासाथे | ताध्वे |
| उ० पु० | तास्मि | तास्वः | तास्मः | ताहे | तास्वहे | तास्महे |

---

तीनोंमें इ नहीं होगा आ रहेगा और प्रथमपुरुषके बहुवचनमें न् नहीं रहेगा। लिङ्के परस्मैपदमें यात् याताम् युः इत्यादि होते हैं। आशीर्लिङ्में स् निकालकर इसका प्रत्यय बना लेते हैं।

४. दसो गणोंके ये ही प्रत्यय होते हैं।

## लुङ् ( सामान्य भूतकाल ) सेट्धातोः प्रत्ययाः ।

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र० पु० | ईत् | इष्टाम् | इषुः | इष्ट | इषाताम् | इषत |
| म० पु० | ईः | इष्टम् | इष्ट | इष्ठाः | इषाथाम् | इढ्वम् |
| उ० पु० | इषम् | इष्व | इष्म | इषि | इष्वहि | इष्महि |

## लुङ् ( सामान्य भूतकाल ) अनिट् धातोः प्रत्ययाः ।

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र० पु० | सीत् | स्ताम् | सुः | स्त | साताम् | सत |
| म० पु० | सीः | स्तम् | स्त | स्थाः | साथाम् | ध्वम् |
| उ० पु० | सम् | स्व | स्म | सि | स्वहि | स्महि |

क्वचित्तु सिज्लुगादिजाते लङ् प्रत्यया एव यथायथं प्रयुज्यन्ते ।
( कहीं-कहीं तो सिच्, लुक्, अङ्, क्स, चङ्में लङ्के ही प्रत्यय होते हैं । )

## लिट् ( परोक्ष अनद्यतन भूतकाल )

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु |
| प्र० पु० | अ(णल्) | अतुः | उः | ए | आते | इरे |
| म० पु० | थ | अथुः | अ | से | आथे | ध्वे |
| उ० पु० | अ(णल्) | व | म | ए | वहे | महे |

## आशीर्लिङ् ( आशीर्वादार्थक-काल )

| | परस्मैपद | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्र० पु० | यात् | यास्ताम् | यासुः | सीष्ट[1] | सीयास्ताम् | सीरन् |
| म० पु० | याः | यास्तम् | यास्त | सीष्ठाः | सीयास्थाम् | सीध्वम् |
| उ० पु० | यासम् | यास्व | यास्म | सीय | सीवहि | सीमहि |

१. ये अनिट् प्रत्यय हैं । सेट् धातुओंके लिए इन्हींमें इकार लगाकर इषीष्ट इत्यादि बना लिया जाता है ।

# भट्टिकाव्ये पञ्चमसर्गतः अष्टमसर्गपर्यन्तानां धातूनां विवरणम्

| क्र०सं० | धातु | अर्थ | गण | आत्म०/पर० | सेट्/अनि० | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| १ | चर | गतौ | भ्वादि | परस्मै० | सेट् | ५ | १ | चेरतुः |
| २ | डुकृञ् | करणे | तनादि | उभय० | अनिट् | ५ | २ | अकार्ष्टम् |
| ३ | गम्लृ | गमने | भ्वादि | परस्मै० | ,, | ५ | ४ | जगाम |
| ४ | क्रदि | रोदने | भ्वादि | ,, | सेट् | ५ | ५ | चक्रन्द |
| ५ | रुदिर् | अश्रुविमोचने | अदादि | ,, | ,, | ५ | ५ | अरोदीत् |
| ६ | वस | निवासे | भ्वादि | ,, | अनिट् | ५ | ६ | अव्यवात्ताम् |
| ७ | अस | भुवि | अदादि | ,, | सेट् | ५ | ७ | असि |
| ८ | या | प्रापणे | ,, | ,, | अनिट् | ५ | ८ | अयास्यम् |
| ९ | ज्ञा | अवबोधने | क्र्यादि | ,, | ,, | ५ | ८ | अज्ञास्यः |
| १० | इण् | गतौ | अदादि | ,, | ,, | ५ | ११ | ऐति |
| ११ | हन | हिंसागत्योः | ,, | ,, | ,, | ५ | १२ | उपघ्नन्ति |
| १२ | अशू | व्याप्तौ | स्वादि | आत्मने० | सेट् | ५ | १४ | अश्नुवते |
| १३ | अश | भोजने | क्र्यादि | परस्मै० | ,, | ५ | १४ | अश्नाति |
| १४ | त्यज | हानौ | भ्वादि | ,, | अनिट् | ५ | १५ | त्यज |
| १५ | णीञ् | प्रापणे | ,, | उभय० | ,, | ५ | १५ | नय |
| १६ | शासु (आङ्) | इच्छायाम् | अदादि | आत्मने० | सेट् | ५ | १६ | आशासते |

| क्र०सं० | धातु | अर्थ | गण | आत्म०/पर० | सेट्/अनि० | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| १७ | श्वस | प्राणने | अदादि | परस्मै० | सेट् | ५ | १६ | मा श्वसीः |
| १८ | ईक्ष | दर्शने | भ्वादि | आत्मने० | ,, | ५ | १७ | निरीक्ष्यते |
| १९ | दृशिर् | प्रेक्षणे | ,, | परस्मै० | अनिट् | ५ | १९ | पश्यति |
| २० | णिसि | चुम्बने | अदादि | आत्मने० | सेट् | ५ | १९ | निंस्ते |
| २१ | श्रु | श्रवणे | भ्वादि | परस्मै० | अनिट् | ५ | १९ | संश्रृणोति |
| २२ | मनु | अवबोधने | दिवादि | आत्मने० | ,, | ५ | २० | मन्ये |
| २३ | भू | सत्तायाम् | भ्वादि | परस्मै० | सेट् | ५ | २१ | भवेत् |
| २४ | ञिभी | भये | जुहो० | ,, | अनिट् | ५ | २३ | बिभेषि |
| २५ | आस | उपवेशने | अदादि | आत्मने० | सेट् | ५ | २४ | उपास्त |
| २६ | यती | प्रयत्ने | भ्वादि | ,, | ,, | ५ | २९ | यतिष्ये |
| २७ | क्रमु | पादविक्षेपे | ,, | परस्मै० | ,, | ५ | ३० | चक्रमे |
| २८ | गद | व्यक्तायां वाचि | ,, | ,, | ,, | ५ | ३१ | अगादि |
| २९ | डुधाञ् | धारणे | जुहो० | उभयपदी | अनिट् | ५ | ३२ | अन्तर्धत्स्व |
| ३० | जि | जये | भ्वादि | परस्मै० | ,, | ५ | ३३ | जिगाय |
| ३१ | विद | ज्ञाने | अदादि | ,, | ,, | ५ | ३४ | वेत्सि |
| ३२ | भञ्जो | आमर्दने | रुधादि | ,, | ,, | ५ | ३६ | अभनक् |
| ३३ | गुपू | रक्षणे | भ्वादि | ,, | सेट् | ५ | ३७ | अगोपीत् |
| ३४ | रभ | राभस्ये | ,, | आत्मने० | अनिट् | ५ | ३८ | मा आरब्धाः |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ३५ | भाष | भाषणे | भ्वादि | आत्मने० | सेट् | ५ | ३९ | प्रत्यभाषत |
| ३६ | मृङ् | प्राणत्यागे | तुदादि | ,, | अनिट् | ५ | ४३ | मम्रतु: |
| ३७ | ह्नुङ् | अपनये | अदादि | ,, | ,, | ५ | ४४ | अपह्नुषे |
| ३८ | ष्टुञ् | स्तुतौ | ,, | उभय० | ,, | ५ | ४४ | स्तौषि |
| ३९ | ब्रूञ् | व्यक्तायां वाचि | ,, | ,, | ,, | ५ | ४६ | प्रत्युवाच |
| ४० | हृञ् | हरणे | भ्वादि | ,, | ,, | ५ | ४७ | हरामि |
| ४१ | तनु | विस्तारे | तनादि | ,, | सेट् | ५ | ४७ | सन्तनु |
| ४२ | प्लुङ् | गतौ | भ्वादि | आत्मने० | अनिट् | ५ | ४८ | पुप्लुवे |
| ४३ | दिवु | क्रीडाद्यर्थे | दिवादि | परस्मै० | सेट् | ५ | ४९ | अदुद्यूषयत् |
| ४४ | ष्मिङ् | ईषद्धसने | भ्वादि | आत्मने० | अनिट् | ५ | ५१ | विसिष्मिये |
| ४५ | व्यध | ताडने | दिवादि | परस्मै० | ,, | ५ | ५२ | अव्यात्सीत् |
| ४६ | ईह | चेष्टायाम् | भ्वादि | आत्मने० | सेट् | ५ | ५३ | ऐजिहत् |
| ४७ | रु | शब्दे | अदादि | परस्मै० | ,, | ५ | ५४ | विरौति |
| ४८ | त्रैङ् | पालने | भ्वादि | आत्मने० | अनिट् | ५ | ५४ | त्रायस्व |
| ४९ | वद | व्यक्तायां वाचि | ,, | परस्मै० | सेट् | ५ | ५५ | अवदत् |
| ५० | षह | मर्षणे | ,, | आत्मने० | ,, | ५ | ५९ | उत्सहसे |
| ५१ | ष्ठा | गतिनिवृत्तौ | भ्वादि | परस्मै० | अनिट् | ५ | ६८ | उपतिष्ठसे |
| ५२ | कठि | आध्याने | ,, | आत्मने० | सेट् | ५ | ७२ | उदकण्ठिष्यत |
| ५३ | वच | परिभाषणे | अदादि | परस्मै० | अनिट् | ५ | ७६ | उवाच |
| ५४ | शीङ् | स्वप्ने | ,, | आत्मने० | सेट् | ५ | ८० | शेरते |

| क्र०सं० | धातु | अर्थ | गण | आत्म०/पर० | सेट्/अनि० | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| ५५ | दरिद्रा | दुर्गतौ | अदादि | परस्मै० | सेट् | ५ | ८६ | दरिद्राति |
| ५६ | ओहाक् | त्यागे | जुहो० | ,, | अनिट् | ५ | ९१ | जहीहि |
| ५७ | मुद | हर्षे | भ्वादि | आत्मने० | सेट् | ५ | ९२ | मोदस्व |
| ५८ | गाहू | विलोडने | ,, | ,, | ,, | ५ | ९४ | जगाहे |
| ५९ | आप्लृ | व्याप्तौ | स्वादि | परस्मै० | अनिट् | ५ | ९६ | प्राप |
| ६० | पत्लृ | गतौ | भ्वादि | ,, | सेट् | ५ | १०० | पपात |
| ६१ | युध | सम्प्रहारे | दिवादि | आत्मने० | अनिट् | ५ | १०१ | अयुध्यत |
| ६२ | ञिभी | भये | जुहो० | परस्मै० | ,, | ५ | १०२ | बिभाय |
| ६३ | ह्री | लज्जायाम् | ,, | ,, | ,, | ५ | १०२ | जिह्राय |
| ६४ | क्लमु | ग्लानौ | दिवादि | ,, | सेट् | ५ | १०२ | चक्लाम |
| ६५ | व्यथ | भयसञ्चलनयोः | भ्वादि | आत्मने० | ,, | ५ | १०२ | विव्यथे |
| ६६ | वृतु | वर्तने | ,, | ,, | ,, | ५ | १०२ | निववृते |
| ६७ | त्रसी | उद्वेगे | दिवादि | परस्मै० | ,, | ५ | १०४ | सन्त्रासयांचकार |
| ६८ | प्रीञ् | तर्पणे | क्र्यादि | उभयपदी | अनिट् | ५ | १०४ | पिप्राय |
| ६९ | कासृ | शब्दकुत्सायाम् | भ्वादि | आत्मने० | सेट् | ५ | १०५ | कासांचक्रे |
| ७० | अय | गतौ | ,, | ,, | ,, | ५ | १०५ | पलायांचक्रे |
| ७१ | दय | दानादिषु | ,, | ,, | ,, | ५ | १०६ | दयांचक्रे |
| ७२ | लूञ् | छेदने | क्र्यादि | उभयपदी | ,, | ५ | १०७ | लोलूयांचक्रे |
| ७३ | उष | दाहे | भ्वादि | परस्मै० | सेट् | ६ | १०७ | ओषाञ्चकार |

| क्र० सं० | धातु | अर्थ | गण | आत्म०/पर० | सेट्/अनि० | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| ७३ | उष | दाहे | भ्वादि | परस्मै० | सेट् | ६ | १०७ | ओषाञ्चकार |
| ७४ | जागृ | निद्राक्षये | अदादि | परस्मै० | सेट् | ६ | २ | प्रजागराञ्चकार |
| ७५ | भृञ् | मरणे | भ्वादि | उभय० | अनिट् | ६ | ३ | बिभराभास |
| ७६ | शासु | अनुशिष्टौ | अदादि | परस्मै० | सेट् | ६ | ४ | आशिषन् |
| ७७ | प्रच्छ | ज्ञीप्सायाम् | तुदादि | ,, | अनिट् | ६ | ८ | अपृच्छत् |
| ७८ | रुधिर् | आवरणे | रुधादि | उभय० | ,, | ६ | ९ | अवारुधत् |
| ७९ | लप | व्यक्तायां वाचि | भ्वादि | परस्मै० | सेट् | ६ | ११ | विललाप |
| ८० | ग्लै | हर्षक्षये | ,, | ,, | अनिट् | ६ | १२ | अग्लासीत् |
| ८१ | जीव | प्राणधारणे | ,, | ,, | सेट् | ६ | १४ | जीवामः |
| ८२ | गुहू | संवरणे | ,, | उभय० | ,, | ६ | १६ | मा घुक्षः |
| ८३ | श्लिष | आलिङ्गने | दिवादि | परस्मै० | अनिट् | ६ | १६ | मा श्लिक्षः |
| ८४ | क्लिश | उपतापे | ,, | आत्मने० | सेट् | ६ | १७ | मा अतिचिं क्लशः |
| ८५ | श्रिञ् | सेवायाम् | भ्वादि | उभय० | ,, | ६ | १७ | अशिश्रियत् |
| ८६ | द्रु | गतौ | ,, | परस्मै० | अनिट् | ६ | १७ | अदुद्रुवत् |
| ८७ | स्रु | गतौ | भ्वादि | ,, | ,, | ६ | १८ | असुस्रुवत् |
| ८८ | डुदाञ् | दाने | जुहोत्यादि | उभय० | ,, | ६ | १८ | देहि |
| ८९ | धेट् | पाने | भ्वादि | परस्मै० | ,, | ६ | १८ | अदधः, अधासीः |
| ९० | टुओश्वि | गतिवृद्ध्योः | ,, | ,, | सेट् | ६ | १९ | अशिश्वियत्, अश्वयीत् |
| ९१ | चक्षिङ् | व्यक्तायां वाचि | अदादि | आत्मने० | अनिट् | ६ | २० | आचक्ष्व, आख्यत् |
| ९२ | लिप | उपदेहे | तुदादि | उभय० | ,, | ६ | २१ | व्यलिपत् |

| क्र० सं० | धातु | अर्थ | गण | आत्म०/पर० | सेट्/अनि० | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| ९४ | षिच | क्षरणे | तुदादि | उभय० | अनिट् | ६ | २१ | अभ्यषिचत् |
| ९५ | मुह | वैचित्ये | दिवादि | परस्मै० | सेट् | ६ | २१ | मुमोह |
| ९६ | ह्वेञ् | स्पर्धायाम् (शब्दे च) | भ्वादि | उभय० | अनिट् | ६ | २१ | आह्वम् |
| ९७ | ह्लादी | सुखे | ,, | आत्मने० | सेट् | ६ | २२ | अजिह्लदत् |
| ९८ | षद्लृ | विशरणादिषु | ,, | परस्मै० | अनिट् | ६ | २४ | अवसीदति |
| ९९ | अर्थ(प्रत्यर्थि) | उपयाच्ञायाम् | चुरादि | आत्मने० | सेट् | ६ | २५ | प्रत्यर्थयत |
| १०० | पुष | पुष्टौ | दिवादि | परस्मै० | अनिट् | ६ | २६ | अपुषत् |
| १०१ | द्युत | दीप्तौ | भ्वादि | आत्मने० | सेट् | ६ | २६ | अद्युतत् |
| १०२ | सृप्लृ | गतौ | ,, | परस्मै० | अनिट् | ६ | २६ | अन्वसृपत् |
| १०३ | ऋ | गतिप्रापणयोः | ,, | ,, | ,, | ६ | २७ | आरताम् |
| १०४ | च्युतिर् | आसेचने | ,, | ,, | सेट् | ६ | २८ | अच्युतत् |
| १०५ | स्तम्भु | स्तम्भने | भ्वादि | परस्मै० | ,, | ६ | २८ | अस्तम्भीत् |
| १०६ | जॄष् | वयोहानौ | दिवादि | ,, | ,, | ६ | ३० | अजारीत्, अजरत् |
| १०७ | पद | गतौ | ,, | आत्मने० | अनिट् | ६ | ३१ | आपादि |
| १०८ | दीपी | दीप्तौ | ,, | ,, | सेट् | ६ | ३१ | अदीपि |
| १०९ | जनी | प्रादुर्भावे | ,, | ,, | ,, | ६ | ३२ | अजनि |
| ११० | बुध | अवगमने | ,, | ,, | अनिट् | ६ | ३२ | अबोधि |
| १११ | पूरी | आप्यायने | ,, | ,, | सेट् | ६ | ३२ | आपूरि |
| ११२ | तायृ | सन्तानपालनयोः | भ्वादि | ,, | ,, | ६ | ३२ | अतायि |
| ११३ | ओप्यायी | वृद्धौ | ,, | ,, | ,, | ६ | ३३ | अप्यायि |

| | धातु | अर्थ | गण | आत्म०/पर० | सेट्/अनि० | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| ११३ | चिञ् | चयने | भ्वादि | उभय० | अनिट् | ६ | ३३ | उपाचायिष्ट |
| ११४ | दुह | प्रपूरणे | अदादि | ,, | , | ६ | ३४ | अदोहि |
| ११५ | गर्ज | शब्दे | भ्वादि | परस्मै० | सेट् | ६ | ३५ | जगर्ज |
| ११६ | भिदिर् | विदारणे | रुधादि | उभय० | अनिट् | ६ | ३५ | भिनद्मि |
| ११७ | रिचिर् | विरेचने | ,, | ,, | , | ६ | ३६ | रिणच्मि |
| ११८ | विचिर् | पृथग्भावे | ,, | ,, | ,, | ६ | ३६ | विविनच्मि |
| ११९ | क्षुदिर् | सम्पेषणे | ,, | ,, | ,, | ६ | ३६ | क्षुणद्मि |
| १२० | छिदिर् | द्वैधीकरणे | ,, | ,, | ,, | ६ | ३६ | छिनद्मि |
| १२१ | युजिर् | योगे | ,, | ,, | ,, | ६ | ३७ | युनज्मि |
| १२२ | पिष्लृ | संचूर्णने | ,, | परस्मै० | ,, | ६ | ३७ | पिनष्मि |
| १२३ | उतृदिर् | हिंसाऽनादरयोः | ,, | उभय० | ,, | ६ | ३८ | तृणद्मि |
| १२४ | हिंसि | हिंसायाम् | रुधादि | परस्मै० | सेट् | ६ | ३८ | हिनस्मि |
| १२५ | तञ्चू | संकोचने | ,, | ,, | ,, | ६ | ३८ | तनच्मि |
| १२६ | तृह | हिंसायाम् | ,, | ,, | ,, | ६ | ३९ | तृणेह्मि |
| १२७ | विद | विचारणे | ,, | आत्मने० | अनिट् | ६ | ३९ | विन्ते |
| १२८ | पृची | सम्पर्के | ,, | परस्मै० | सेट् | ६ | ३९ | अपृणक् |
| १२९ | वृतु | वर्तने | भ्वादि | आत्मने० | सेट् | ६ | ४० | न्यवर्तयत |
| १३० | धावु | गतिशुद्धयोः | ,, | उभय० | ,, | ६ | ४१ | अभ्यधावत |
| १३१ | प्रच्छ | ज्ञीप्सायाम् | तुदादि | परस्मै० | अनिट् | ६ | ४३ | पप्रच्छ |
| १३२ | ग्रह | उपादाने | क्र्यादि | उभय | सेट् | ६ | ४६ | जगृहाते |

| क्र०सं० | धातु | अर्थ | गण | आत्म०/पर० | सेट्/अनि० | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| १३३ | कृती | छेदने | तुदादि | परस्मै० | सेट् | ६ | ४७ | चकृततुः |
| १३४ | अट | गतौ | भ्वादि | ,, | ,, | ६ | ६० | आटतुः |
| १३५ | पूङ् | पवने | ,, | आत्मने० | ,, | ६ | ६६ | पवसे |
| १३६ | वृधु | वर्धने | ,, | ,, | ,, | ६ | ७० | वर्धते |
| १३७ | तुष | प्रीतौ | दिवादि | परस्मै० | अनिट् | ६ | ७१ | अतुतूषः |
| १३८ | ओविजी | भयचलनयोः | तुदादि | आत्मने० | सेट् | ६ | ७१ | उदविजिष्ठाः |
| १३९ | यसु | प्रयत्ने | दिवादि | परस्मै० | ,, | ६ | ७१ | आयस्यसि |
| १४० | भज | सेवायाम् | भ्वादि | उभयपदी | अनिट् | ६ | ७४ | भेजतुः |
| १४१ | टुदु | उपतापे | स्वादि | परस्मै० | ,, | ६ | ७६ | दुन्वन्ति |
| १४२ | दह | भस्मीकरणे | भ्वादि | ,, | ,, | ६ | ८४ | दह्ये |
| १४३ | चिति | स्मृत्याम् | चुरादि | ,, | सेट् | ६ | ८८ | अचिन्तयत् |
| १४४ | मृग | अन्वेषणे | ,, | आत्मने० | ,, | ६ | १०० | मृगयावहे |
| १४५ | शम | आलोचने | ,, | ,, | ,, | ६ | १०१ | शमयेत् |
| १४६ | लोचृ | दर्शने ( भाषार्थे ) | ,, | परस्मै० | ,, | ६ | १०७ | पर्यालोचयताम् |
| १४७ | पद | गतौ | दिवादि | आत्मने० | अनिट् | ६ | ११३ | प्रतिपद्यते |
| १४८ | पाल | रक्षणे | चुरादि | परस्मै० | सेट् | ६ | १३६ | पालयिष्यति |
| १४९ | इषु | इच्छायाम् | तुदादि | ,, | ,, | ६ | १३९ | ऐषिषुः |
| १५० | क्षिप | प्रेरणे | ,, | उभय० | अनिट् | ६ | १४१ | न्यक्षिपत् |
| १५१ | ज्ञा | अवबोधने | क्र्यादि | उभयपदी | ,, | ६ | १४३ | अभिजानीहि |
| १५२ | विश | प्रवेशने | तुदादि | परस्मै० | ,, | ६ | १४७ | न्यविशत |

| क्र०सं० | धातु | अर्थ | गण | आत्म०/पर० | सेट्/अनि० | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| १५२ | विश | प्रवेशने | तुदादि | परस्मै० | ,, | ६ | १४७ | न्यविशत |
| १५३ | वा | गतिगन्धनयोः | अदादि | परस्मै० | अनिट् | ७ | १ | ववौ |
| १५४ | णम | प्रह्वत्वे शब्दे च | भ्वादि | ,, | अनिट् | ७ | १ | समुन्नेमुः |
| १५५ | भा | दीप्तौ | अदादि | ,, | अनिट् | ७ | ८ | आभाति |
| १५६ | पीड | पीडने | चुरादि | ,, | सेट् | ७ | ९ | पीडयन्ति |
| १५७ | टुयाचृ | याच्ञायाम् | भ्वादि | उभय० | ,, | ७ | ११ | याचते |
| १५८ | हि | गतौ | स्वादि | परस्मै० | अनिट् | ७ | २७ | प्रहिणोति |
| १५९ | दिश | अतिसर्जने | तुदादि | उभय० | ,, | ७ | २८ | आदिशत् |
| १६० | इङ् | अध्ययने | अदादि | आत्मने० | ,, | ७ | ३४ | अध्यापिपत् |
| १६१ | चर | गतौ | भ्वादि | परस्मै० | सेट् | ७ | ४९ | चरति |
| १६२ | भ्रमु | चलने | ,, | ,, | ,, | ७ | ५५ | भ्रेमुः |
| १६३ | तॄ | प्लवनतरणयोः | ,, | ,, | सेट् | ७ | ५५ | अतेरुः |
| १६४ | प्रीञ् | तर्पणे | क्र्यादि | उभय० | अनिट् | ७ | ६४ | पिप्राय |
| १६५ | लबि | अवस्रंसने | भ्वादि | आत्मने० | सेट् | ७ | ७१ | अवललम्बिरे |
| १६६ | जीव | प्राणधारणे | ,, | परस्मै० | ,, | ७ | ७७ | जीवेत् |
| १६७ | जनी | प्रादुर्भावे | दिवादि | आत्मने० | सेट् | ७ | ८१ | अजनि |
| १६८ | देवृ | देवने | भ्वादि | ,, | ,, | ७ | ८६ | परिदेवध्वे |
| १६९ | षो | अन्तकर्मणि | दिवादि | परस्मै० | अनिट् | ७ | ९१ | अध्यवस्यथ |
| १७० | शकि | शङ्कायाम् | भ्वादि | आत्मने० | सेट् | ७ | ९५ | शङ्के |
| १७१ | प्रेषृ | गतौ | ,, | ,, | ,, | ७ | १०८ | परिप्रैषयन् |
| १७२ | गाधृ | प्रतिष्ठायाम् | ,, | ,, | सेट् | ८ | १ | अगाधत |

| क्रमसं० | धातु | अर्थ | गण | आत्म०/पर० | सेट्/अनि० | सर्ग | श्लोक | प्रयोग |
|---|---|---|---|---|---|---|---|---|
| १७३ | यु | मिश्रणामिश्रणयोः | अदादि | परस्मै० | सेट् | ८ | ६ | व्यतियुतेः |
| १७४ | क्रीड् | ( क्रीडने ) विहारे | भ्वादि | ,, | ,, | ८ | १० | परिक्रीडस्व |
| १७५ | ध्यै | चिन्तायाम् | ,, | ,, | अनिट् | ८ | १३ | ध्यायन्ति |
| १७६ | तप | सन्तापे | ,, | ,, | ,, | ८ | १४ | वितपते |
| १७७ | ऋ | गतौ | जुहो० | ,, | ,, | ८ | १६ | समारन्त |
| १७८ | गॄ | निगरणे | तुदादि | ,, | सेट् | ८ | ३१ | सङ्गिरन्तेस्म |
| १७९ | शप | आक्रोशे | दिवादि | उभय० | अनिट् | ८ | ३३ | अशप्सत |
| १८० | कासृ | दीप्तौ | भ्वादि | आत्मने० | सेट् | ८ | ३८ | कासांचक्रे |
| १८१ | गृधु | अभिकाङ्क्षायाम् | दिवादि | परस्मै० | ,, | ८ | ४३ | अगर्धत |
| १८२ | वञ्चु | प्रलम्भने | चुरादि | आत्मने० | ,, | ८ | ४३ | अवञ्चयत |
| १८३ | रुह | प्रादुर्भावे | भ्वादि | परस्मै० | अनिट् | ८ | ५६ | आरोहत् |
| १८४ | युध | संप्रहारे | दिवादि | आत्मने० | ,, | ८ | ५६ | अयोधयत |
| १८५ | णश | अदर्शने | ,, | परस्मै० | सेट् | ८ | ५७ | नाशयेयम् |
| १८६ | द्रु | गतौ | भ्वादि | ,, | अनिट् | ८ | ५८ | द्रावयिष्यामि |
| १८७ | चल | कम्पने | ,, | ,, | सेट् | ८ | ६० | अचलयन् |
| १८८ | त्रसी | उद्वेगे | दिवादि | ,, | ,, | ८ | ६० | अत्रासयन् |
| १८९ | यसु | प्रयत्ने | दिवादि | ,, | सेट् | ८ | ६१ | आयासयन्त |
| १९० | दमु | उपशमे | ,, | ,, | ,, | ८ | ६३ | पादमयन्त |
| १९१ | रुच | अभिप्रीतौ | भ्वादि | आत्मने० | सेट् | ८ | ६४ | अरोचयत |

